(कृष्णयजुर्वेद) तैत्तिरीय शाखा विस्तारः

सं - ७ कांड | ४४ अध्याय | ६५१ अनुवाक | २१९८ पञ्चाशती / पञ्चाशती | १,१९,२९० पदानि ||

(२,५३,८६८ अक्षराणि ||)

ब्रा - ११४९८ वाक्यानि | ३ अष्टक | २८ अध्याय || ३२१ अनुवाक || १७४० दशक ||

आ - १० प्रपाठकाः | २०२ अनुवाकाः || ५४१ दशक ||

८२ प्रश्न | ११६१ अनुवाक | २१९८ पञ्चाशती | २३०७ दशक ||

गुरुचरित्राप्रमाणे सं - ४०/६४८/२१९८ || ब्रा - २८/३२१/१७०८ [११७८] || आ - १०/२०२/५४१ ||

① १ - २५
② २५ - ४३
③ ४३ - ६०
④ ६० - ८०
⑤ ८० - ९९
⑥ १०० - ११२
⑦ ११२ - १४२
⑧ १४२ - १५३

# प्रथमाष्टकम्

गा·ष्व·
१

॥श्रीगणेशायनमः॥ ॥हरिः ॐ॥ ॥ब्रह्मसंधत्तंतन्मेजि
न्वतं।क्षत्रंसंधत्तंतन्मेजिन्वतं।इषंसंधत्तंतांमेजिन्वतं।ऊ
र्जंसंधत्तंतांमेजिन्वतं।रयिंसंधत्तंतांमेजिन्वतं।पुष्टिंसं
धत्तंतांमेजिन्वतं।प्रजांसंधत्तंतांमेजिन्वतं।पशून्संधत्तंता
न्मेजिन्वतं।स्तुतोसिजनधाः।देवास्त्वाशुक्रपाःप्रणयंतु॥१॥
सुवीराःप्रजाःप्रजनयन्परीहि।शुक्रःशुक्रशोचिषा।स्तुतोसि
जनधाः।देवास्त्वामंथिपाःप्रणयंतु।सुप्रजाःप्रजाःप्रजनयन्

शं हि। सुधी सुषिरो ऽचिषा। संअग्मा मे ऽहिव आर्हंपिब्या आयुः। संधत्तं
तं मे जिन्वतं। प्राणं संधत्तं तं मे जिन्वतं। अपानं संधत्तं तं मे जि
न्वतं॥२॥ व्यानं संधत्तं तं मे जिन्वतं। चक्षुः संधत्तं तं मे जिन्वतं
। श्रोत्रं संधत्तं तं मे जिन्वतं। मनः संधत्तं तं मे जिन्वतं। वाचं
संधत्तं तां मे जिन्वतं। आयुः स्थ आयुर्मे धत्तं। आयुर्यज्ञाय धत्तं।
आयुर्यज्ञपतये धत्तं। प्राणः स्थः प्राणं मे धत्तं। प्राणं यज्ञाय धत्तं
॥३॥ प्राणं यज्ञपतये धत्तं। चक्षुः स्थः चक्षुर्मे धत्तं। चक्षुर्यज्ञा

शु. य.
२

यं धत्तं । चक्षुर्यज्ञपतये धत्तं । श्रोत्रं स्थ । श्रोत्रं मे धत्तं । श्रोत्रं य
ज्ञाय धत्तं । श्रोत्रं यज्ञपतये धत्तं । तौ देवौ शुक्रामन्थिनौ । कल्प
यतं दैवीर्विशः । कल्पयतं मानुषीः ॥ ७ ॥ इषमूर्जमस्मासु धत्तं ।
प्राणान्पशुषु । प्रजां मयि च यजमाने च । निरस्तः शण्डः । निरस्तो
मर्कः । अपनुत्तौ शण्डामर्कौ सहामुना । शुक्रस्य समिदसि । मन्थि
नः समिदसि । स प्रथमः संस्कृतिर्विश्वकर्मा । स प्रथमो मित्रो वरु
णो अग्निः । स प्रथमो बृहस्पतिश्चिकित्वान् । तस्मा इन्द्राय सुत

२

माजुहोमि॥५॥नु यं त्वं पानं संधन्नं तं मे जिन्व तं प्राणं युस्माय
धन्नं मा नु धीरग्निर्दैवो॥५॥(इषादि पंचं के वाचं तां मे पम्न्त्सं
धं तं ता नो प्राणा हित्रि तं यु तं मे अन्यन्नु तन्नो) कृत्तिका। स्व
ग्नौ माहधीत। एतद्वा अग्ने र्नक्षत्रं। यत्कृत्तिकाः। स्वायामेवैनं दे
वतायामाधाय। ब्रह्मवर्चसी भवति। मुखं वा एतन्नक्षत्राणां
। यत्कृत्तिकाः। यः कृत्तिकास्वग्निमाधत्ते। मुख्य एव भवति।
अथो खलु॥१॥ अग्निनक्षत्रमित्यपचायंति। गृहा कुहाकुको

ब्रा. प्र.
२

भवति। प्रजापती रोहिण्यामग्निमसृजत। तं देवा रोहिण्यामाद
धत। ततो वै ते सर्वान्रोहानरोहन्। तद्रोहिण्यै रोहिणित्वं। यो
रोहिण्यामग्निमाधत्ते। ऋध्नोत्येव। सर्वान्रोहान्रोहति। देवा
वै भद्राः सन्तोऽग्निमाधित्संत॥२॥ तेषामनाहितोऽग्निरासीत्।
अथैभ्यो वामं वस्वपाक्रामत्। ते पुनर्वस्वोरादधत। ततो वै
तान्वामं वसूपावर्त्तत। यः पुरा भद्रः सन्पापीयान्त्स्यात्। स
पुनर्वस्वोरग्निमादधीत। पुनरेवैनं वामं वसूपावर्त्तते। भद्रो



२

भवति। यः कामयेत दानकामा मे प्रजाः स्युरिति। स पूर्वयोः फ
ल्गुन्योरग्निमादधीत॥३॥ अर्यम्णो वा एतन्नक्षत्रं। यत्पूर्वे फल्गु
नी। अर्यमेति तमाहुर्यो ददाति। दानकामा अस्मै प्रजा भवंति।
यः कामयेत भगी स्यामिति। स उत्तरयोः फल्गुन्योरग्निमादधी
त। भगस्य वा एतन्नक्षत्रं। यदुत्तरे फल्गुनी। भग्येव भवति। काल
कंजा वै नामासुरा आसन्॥४॥ ते सुवर्गाय लोकायाग्निमचि
न्वत। पुरुष इष्टकामुपादधात्पुरुष इष्टकां। स इंद्रो ब्राह्मणो ब्रु

आ॰ ब्र॰
४

वाण इष्टकासुपोधत्त । एषामेव चित्रा नामेति । ते सुवर्गंलोकमाश्वारो
हन् । स इंद्र इष्टकामावृहत । ते बाकीर्यंत । ये बाकीर्यंत । तदूर्णव
भयोभवन् । वावुर्हपतंतां ॥५॥ तो हि ब्योम्बानां वभवंतां । यो भ्रा
तृव्यवान्त्स्यात । स चित्रायामग्निमादधीत । अवकीर्यैव भ्रा
तृव्यान् । ओजो बलमिंद्रियं वीर्यमात्मन्धत्ते । वसंते ब्राह्मणो
ग्निमादधीत । वसंतो वै ब्राह्मणस्यर्तुः । स्व एवैनमृतावाधाय ।
ब्रह्मवर्चसी भवति । मुखं वा एतदृतूनां ॥६॥ यद्वसंतः । यो व

संतताग्निमाधत्ते। ऋध्यैव भवति। अथो योनिमंतमेवैनंप्रजा
तमाधत्ते। ग्रीष्मे राजन्य आदधीत। ग्रीष्मो वै राजन्यस्यर्तुः। स्व ए
वैनमृतावाधाय। इंद्रियावी भवति। शरदि वैश्य आदधीत। शर
द्वै वैश्यस्यर्तुः॥७॥ स्व एवैनमृतावाधाय। पशुमान्भवति। न पूर्व
योः फल्गुन्योरग्निमादधीत। एषा वै जघन्या रात्रिः संवत्सरस्य। य
त्पूर्वे फल्गुनी। पृष्टित एव संवत्सरस्याग्निमाधाय। पापीयान्भव
ति। उत्तरयोरादधीत। एषा वै प्रथमा रात्रिः संवत्सरस्य। यदुत्तरे

ब्रा. प्र.
५

रे फल्गुनी। सुखं नरए वसैवत्सरस्याग्निमाधायै। वसीयान्भवति। अ
थो खलु। यद्वैवैनं यत्तउपनमेत्। अथादधीत। सैवास्यर्द्धिः॥८॥
ख्ल्वाधित्सं तु फल्गुन्योरग्निमादधीतो सन्नं पततां इल्लुनौ वैरर्धस्य
तुर्तैर्कर्त्तेरे फल्गुनीषद्॥९॥ खनंति। यदेवास्या अमेध्यं। तदपहंति
। अपो वै स्तिम्यं स्त्यै। सिकता निवपति। एतद्वा अग्नेर्वैश्वानरस्य
रूपं। रूपेणैव वैश्वानरमवरुंधे। ऊषान्निवपति। पुष्टिर्वा एषा प्रज
ननं। यदूषाः॥१॥ पुष्ट्यामेव प्रजननेनाग्निमाधत्ते। अथो संज्ञानमेव

। सं लोनुरंख्येत संभूतां। यदृष्टोः। द्यावापृथिवी सहास्तां। ते वियती
अब्रूतां अस्त्वेव नौ सह यज्ञियमिति। यदमुष्या यज्ञियमासीत्।
तदस्यामदधात्। त ऊषा अभवन्॥१२॥ यदस्या यज्ञियमासीत्त
दमुष्यामदधात्। तदहश्चन्द्रमसि कृष्णं। ऊषान्निवपन्नदो ध्या
येत्। द्यावापृथिव्योरेव यज्ञियेऽग्निमाधत्ते। अग्निर्देवेभ्यो निलाय
त। आखुरूपं कृत्वा। स पृथिवीं प्राविशत्। स ऊतीः कुर्वाणः पृ
थिवीमनुसमचरत्। तदाखुकरीषमभवत्॥१३॥ यदाखुकरी

षट्संभारो भवति। यद्देवास्युत त्र्यंक्तं। तद्देवावरुंधे। ऊर्ज्जं वा
एतद्रसं पृथिव्याउपदीकाउद्दिहंति। यद्वल्मीकं। यद्वल्मीकव
पासंभारो भवति। ऊर्जमेवरसं पृथिव्याअवरुंधे। अथो श्रोत्र
मेव। श्रोत्रं ह्येतत्पृथिव्याः। यद्वल्मीकः॥५॥ अबधिरो भवति
। यएवं वेद। प्रजापतिः प्रजाअसृजत। तासामन्नमुपाक्षीयत
। ताभ्यः सूदमुपप्राभिनत्। ततो वै तासामन्नं नोपाक्षीयत। यस्यै
सूदः संभारो भवति। नास्य गृहेन्नं क्षीयते। आपो वाइदमग्रे

सलिलमासीत्। तेन प्रजापतिरश्राम्यत्॥ कथमिदंस्या
दिति। सोऽपश्यत्पुष्करपर्णं तिष्ठत्। सोऽमन्यत। अस्ति वै तत्।
यस्मिन्निदमधितिष्ठतीति। स वराहो रूपं कृत्वोपन्यमज्जत्
। स पृथिवीमध आर्छत्। तस्या उपहत्योदमज्जत्। तत्पुष्करप
र्णेऽप्रथयत्। यदप्रथयत्॥ तत्पृथिव्यै पृथिवित्वं। अभूद्वा इ
दमिति। तद्भूम्यै भूमित्वं। तांदिशोऽनु वातः समवहत्। तां शर्
कराभिरदृंहत्। शं वै नोऽभूदिति। तच्छर्कराणां शर्करत्वं।

ब्रा. प्र.
७

यद्वराहविहतं संभारो भवति। अस्यामेवाछंबट्कारमग्निमाध
त्ते। शर्करा भवंति धृत्यै॥७॥ अथो शंत्वाय। सरेता अग्निराधेय इ
त्याहुः। आपो वरुणस्य पत्नय आसन्। ता अग्निरभ्यध्यायत्।
ताः समभवत्। तस्य रेतः परापतत्। तद्धिरण्यमभवत्। यद्धिर
ण्यमुपास्यति। सरेतसमेवाग्निमाधत्ते। पुरुष इत्वै स्वाद्रेतसो बी
भत्सन्त इत्याहुः॥८॥ उत्तरत उपास्यति बीभत्सायै। अतिप्रय
च्छति। आर्तिमेवातिप्रयच्छति। अग्निर्देवेभ्यो निलायत। अश्वो रू

७

पं कृत्वा। सोऽश्वत्थे संवत्सरमतिष्ठत्। तदश्वत्थस्याश्वत्थत्वं। यदाश्वत्थः संभारो भवति। यदेवास्य तत्रान्यक्तं। तदेवावरुंधे॥९॥ देवा वा ऊर्जं व्यभजंत। तत उदुंबर उदतिष्ठत्। ऊर्ग्वा उदुंबरः। यदौदुंबरः संभारो भवति। ऊर्जमेवावरुंधे। तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वं॥१०॥ यस्य पर्णमयः संभारो भवति। सोमपीथमेवावरुंधे। देवा वै ब्रह्मन्नवदंत। तत्पर्ण उपाशृणोत्। सुश्रवा वै नाम।

आ.ब्र.
८

यस्य पर्णमयः संभारो भवति। ब्रह्मवर्चसमेवावरुंधे। प्रजापति
रग्निमसृजत। सोऽबिभेत्प्रमाधक्ष्यतीति। तं शम्याशमयत॥
१॥ तच्छम्यै शमित्वं। यच्छमीमयः संभारो भवति। शांत्या अप्रदा
हाय। अग्नेः सृष्टस्य यतः। विकंकतं भा आर्छत्। यद्वैकंकतः सं
भारो भवति। भा एवावरुंधे। सहृदयोऽग्निराधेय इत्याहुः। मरु
तोऽद्भिरग्निमतमयन्। तस्य तांतस्य हृदयमाछिंदन्। साशनिरभ
वत्। यदशनिहतस्य वृक्षस्य संभारो भवति। सहृदयमेवाग्निमा

धंत्ते ॥१२॥ ऋषी अभवन्न भवद्वल्मीकोऽथ्रा म्युदपश्यं पयुक्षत्ये बीभ
त्स तु इत्याकुरुंधे पर्ण त्वं मरा मयदच्छिंदुं स्त्रीणि च ॥३॥ द्वादश
स्तुविक्रमे ब्रुग्निमादधीत । द्वादश मासाः संवत्सरः । संवत्सरादे
वैनमवरुध्याधत्ते । यद्वा द्वादश स्तुविक्रमे बादधीत । परिमितमव
रुंधीत । चक्षुर्निमितमादधीत । इयद्वादश विक्रमा३ इति । परिमि
तं वै वा परिमितं चावरुंधे । अनन्तं वै वाचा वदन्ति । अनन्तं मनसा
ध्यायति ॥१॥ चक्षुर्वै सत्यं । अद्रा३ गित्याह । अदर्शमिति । तत्सत्यं

आ॰ ब्र॰
१

। यस्य क्रतुर्निमितं पिमाधत्ते। सत्य एवैनमाधत्ते। तस्माद्वाहिता
ग्निर्नानृतं वदेत्। नास्य ब्राह्मणोनाश्वान्गृहे वसेत्। सत्येह्यस्या
ग्निराहितः। आग्नेयी वै रात्रिः॥२॥ आग्नेयाः पशवः। ऐंद्रमहः। नक्तं
गार्हपत्यमादधाति। पशूनेवावरुंधे। दिवाहवनीयं। इंद्रियमेवा
वरुंधे। अर्धोदिते सूर्य आहवनीयमादधाति। एतस्मिन्वै लोके प्र
जापतिः प्रजा असृजत। प्रजा एव तद्यजमानः सृजते। अथोभू
तं चैव भविष्यच्चावरुंधे॥३॥ इडा वै मानवी यज्ञानूकाशिन्यासीत्

।साशृणोत्। असुरा अग्निमादधत इति। तदगच्छत्। त आहवनी
यमग्र आदधत। अथ गार्हपत्यं। अथान्वाहार्यपचनं। साब्रवीत्।
प्रतीच्येषां श्रीरगात्। भद्रा भूत्वा पराभविष्यंतीति॥४॥ यस्यैव
मग्निराधीयते। प्रतीच्यस्य श्रीरेति। भद्रो भूत्वा पराभवति। साशृ
णोत्। देवा अग्निमादधत इति। तदगच्छत्। तेन्वाहार्यपचनमग्र आ
दधत। अथ गार्हपत्यं। अथाहवनीयं। साब्रवीत्॥५॥ प्राच्येषां
श्रीरगात्। भद्रा भूत्वा सुवर्गं लोकमेष्यंति। प्रजां तु न वेत्स्यंत इ

ति। यस्यैवमग्निराधीयते। प्राच्युस्मात्रैति। भक्तोभूत्वा सुवर्गंलोक
मेति। प्रजांतुनविंदते। सात्रवीदिडा मनुं। तथावा अहं तवाग्निमा
धास्यामि। यथा त्र प्रजया पशुभिर्मिथुनैर्जनिष्यसे॥६॥ प्रत्यस्मि
न्लोके स्थास्यसि। अभिसुवर्गंलोकंजेष्यसीति। गार्हपत्यमग्र
आहधात्। गार्हपत्यं वा अनु प्रजाः पशवः प्रजायंते। गार्हपत्ये
नैवास्मै प्रजां पशून्प्राजनयत्। अथान्वाहार्यपचनं। तिर्यङ्‌
वा अयंलोकः। अस्मिन्नेवतेन लोके प्रत्यतिष्ठत्। अथाहव

नायं। तेनैवसुवर्गंलोकमभ्यजयत॥७॥ यस्यैवमग्निराधीयते
। प्रजयापशुभिर्मिथुनैर्जायते। प्रत्यस्मिन्लोके तिष्ठति। अ
भिसुवर्गंलोकंजयति। यस्यवाअयथादेवतमग्निराधीयते। आ
देवताभ्योवृश्च्यते। पापीयान्भवति। यस्ययथादेवतं। नदेवता
भ्यआवृश्च्यते। वसीयान्भवति॥८॥ भृगूणांत्वांगिरसांव्रतप
तेव्रतेनादधामीतिभृग्वंगिरसामादध्यात्। आदित्यानांत्वादे
वानांव्रतपतेव्रतेनादधामीत्यन्यासांब्राह्मणीनांप्रजानां। वरुण

श्रा॰ प्र॰
११

स्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञः। इंद्रस्य त्वेंद्रियेण व्रतपते
व्रतेनादधामीति राजन्यस्य। मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनादधा
मीति वैश्यस्य। ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथ
कारस्य। यथा देवतमग्निराधीयते। न देवताभ्य आवृश्च्यते। वसीया
न्भवति॥९॥ आयुतिरात्रिश्चावर्धे भविष्यंतीत्यब्रवीज्जनिष्यसे
जयुष्वसीयान्भवति न वर्च॥४॥ प्रजापतिर्वाचः सत्यमपश्यत्। तेना
ग्निमाधत्त। तेन वै स आर्ध्नोत्। भूर्भुवः सुवरित्याह। एतद्वै वाचः सत्यं

।य एतेनाग्निमाधत्ते। ऋध्नोत्येव। अथो सत्यप्राशूरेव भवति। अथो
य एवं विद्वानभिचरति। स्तृणुत एवैनं॥१॥ भूरित्याह। प्रजा एव तद्य
जमानः सृजते। भुव इत्याह। अस्मिन्नेव लोके प्रतितिष्ठति। सुवरि
त्याह। सुवर्ग एव लोके प्रतितिष्ठति। त्रिभिरक्षरैर्गार्हपत्यमादधा
ति। त्रय इमे लोकाः। एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते। सर्वैः पञ्चभि
राहवनीयं॥२॥ सुवर्गाय वा एष लोकायाधीयते। यदाहवनीयः।
सुवर्ग एवास्मै लोके वाचः सत्यꣳ सर्वमाप्नोति। त्रिभिर्गार्हपत्यमा

हधाति। पूर्वभिराहवनीयं। अष्टौसंपद्यंते। अष्टाक्षरागायत्री। गाय
त्रोऽग्निः। यावानेवाग्निः। तमाधत्ते॥३॥ प्रजापतिः प्रजाअसृजत। ता
अस्मात्सृष्टाः पराचीरायन्। ताभ्योज्योतिरुदगृह्णात्। तंज्योतिः पश्यं
तीः प्रजाअभिसमावर्त्तंत। उपरीवाग्निमुद्गृह्णीयादुद्धरन्। ज्योति
रेवपश्यंतीः प्रजायजमानमभिसमावर्त्तंते। प्रजापतेरक्ष्यश्वयत्
। तत्परापतत्। तदश्वोऽभवत्। तदश्वस्याश्वत्वं॥४॥ एषवैप्रजाप
तिः। यदग्निः। प्राजापत्योऽश्वः। यदश्वंपुरस्तान्नयति। स्वमेवचक्षुः

पश्यन्प्रजापतिरजुहदेति। वज्री वा एषः। यदश्वः। यदश्वं पुरस्तान्न
यन्ति। जातानेव भ्रातृव्यान्प्रणुदते। पुनरावर्त्तयति॥ ५॥ जनि
ष्यमाणानेव प्रतिनुदते। अथाहवनीयो गार्हपत्यमकामयत। नि
गार्हपत्य आहवनीयं। तौ विभाजं नाशक्नोत्। सोऽश्वः पूर्ववाड्
भूत्वा। प्राञ्चं पूर्वमुदवहत्। तत्पूर्ववाहः पूर्ववाट्त्वं। यदश्वं पुरस्तान्नय
ति। विभक्तिरेवैनयोः सा। अथो नानावीर्यावेवैनौ कुरुते॥ ६॥ य
दुपर्युपरि शिरो हरेत्। प्राणान्विच्छिंद्यात्। अधोऽधः शिरो हरति। प्रा

पानो गोपीथाय। इयत्यग्रेहरति। अथेयत्यथेयति। त्रयइमेलोकाः
। एष्वेवैनंलोकेषुप्रतिष्ठितमाधत्ते। प्रजापतिरग्निमसृजत। सो
ऽबिभेत्त्वमाधक्ष्यतीति॥७॥ तस्यत्रेधामहिमानंव्यौहत्। शांत्या
अप्रदाहाय। यत्रेधाऽग्निराधीयते। महिमानमेवास्यतद्व्यूह
ति। शांत्याअप्रदाहाय। पुनरावर्त्तयति। महिमानमेवास्यसं
दधाति। पशुर्वाएषः। यदश्वः। एषरुद्रः॥८॥ यदग्निः। यदश्वस्य
पदेग्निमादधाति। रुद्रायपशून्नपिदधाति। अपशुर्यजमानःस्या

त्। यत्त्वाक्रमयेत्। अनवरुद्धा अस्य पशवः स्युः। पार्श्वत आक्र
मयेत्। यथाहितस्याग्नेरंगाराः। अभ्यववर्तेरन्। अवरुद्धा अस्य
पशवो भवंति। न रुक्षायापि दधाति॥ ९॥ त्रीणि हवींषि निर्वप
ति। विराज एव विक्रांतं यजमानोऽनुविक्रमते। अग्नये पवमाना
य। अग्नये पावकाय। अग्नये शुचये। यदग्नये पवमानाय निर्व
पति। पुनात्येवैनं। यदग्नये पावकाय। पूत एवास्मिन्नन्नाद्यं दधा
ति। यदग्नये शुचये। ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्दधाति॥ १०॥

एनमाहवनीयं धत्ते स्वत्वं वर्त्तयति कुरुत इति रुक्मो दधाति यदग्नयेशु
चेय एकं च ॥५॥ देवासुराः संयत्ता आसन्। ते देवा विजयमुपयन्तः। अ
ग्नौ वामं वसु सन्न्यदधत। इदमु नो भविष्यति। यदि नो जेष्यन्तीति। तद
ग्निर्नोत्सहमशक्नोत्। तत्त्रेधा विन्यदधात्। पशुषु तृतीयं। अप्सु तृ
तीयं। आदित्ये तृतीयं ॥६॥ तद्देवा विजित्य। पुनरवारुरुत्सन्त। तेऽग्न
ये पवमानाय पुरोडाशमष्टाकपालं निरवपन्। पशवो वा अग्निः प
वमानः। यदेव पशुष्वासीत्। तत्तेनावारुन्धत। तेऽग्नये पावकाय। आ

पो वा अग्निः पावकः ॥ यदेवाप्स्वासीत् । तत्तेनावरुंधत ॥ २ ॥ तेन्मये
ऽशुचये । असौ वा आदित्योऽग्निः शुचिः ॥ यदेवादित्य आसीत् । तत्ते
नावरुंधत । ब्रह्मवादिनो वदंति । तन्नु वो वा वेता अग्न्याधेयस्या
आग्नेयो वा अष्टाकपालोऽग्न्याधेयमिति । यत्त्रीन्निर्वपेत् । नैतानि
। यथात्मा स्यात् ॥ ३ ॥ नांगानि । तादृगेव तत् । यदेतान्निर्वपेत् । न
तं । यथांगानि स्युः । नात्मा । तादृगेव तत् । उभयानि सह निरुप्या
णि । यजमानस्य सात्मत्वाय । उभयं वा एतस्येंद्रियं वीर्यमाप्यते ॥ ४ ॥

नि

ब्रा॰ ष॰
१५

यो ऽग्निमाधत्ते। ऐंद्राग्नमेकादशकपालमनुनिर्वपेत्। आदित्यं चरुं। इंद्राग्नीवै देवानामयातयामानौ। ये एव देवते अयातयाम्नी। ताभ्यामेवास्मा इंद्रियं वीर्यमवरुंधे। आदित्यो भवति। इयं वा अदितिः। अस्यामेव प्रतितिष्ठति। धेन्वै वा एतद्रेतः॥५॥ यदाज्यं। अनडुहस्तंडुलाः। मिथुनमेवावरुंधे। घृते भवति। युक्तस्यात्क्षांतत्वाय। चत्वार आर्षेयाः प्राश्नंति। दिशामेव ज्योतिषि जुहोति। पराचो वा एतानि हवींषि। एष रुद्रः। यदग्निः॥६॥ यत्सद्य एतानि ह

वीꣳषि निर्वपेत् । रुद्राय पशून्निर्दध्यात् । अपशुर्यजमानः स्या
त् । यन्नानुनिर्वपेत् । अनवरुद्धा अस्य पशवः स्युः । द्वादशरा
त्रीरनुनिर्वपेत् । संवत्सरस्य प्रतिमा वै द्वादश रात्रयः । संवत्सरे
णैवास्मै रुद्रꣳ शमयित्वा । पशूनवरुन्धे । यदेकमेकमेतानि ह
वीꣳषि निर्वपेत् ॥ ७ ॥ यथा पात्रीण्यावपनानि पूरयेत् । तादृक्तत्
। न प्रजननमुच्छिꣳषेत् । एकं निरुप्य । उत्तरे समस्येत् । तृती
यमेवास्मै लोकमुच्छिꣳषति प्रजननाय । तं प्रजया पशुभिर

तुत्रजायते। अथोयत्तस्यैवैषाभिक्रांतिः॥२ षुचक्रंप्रवर्त्तय
ति। मनुष्यरथेनैवदेवरथंप्रत्यवरोहति॥८॥ब्रह्मवादिनो
वदंति। होतव्यमग्निहोत्रा३न्नहोतव्या३मिति। यद्यजुषाजु
हुयात्। अयथापूर्वमाहुतीजुहुयात्। यन्नजुहुयात्। अग्निः
परांभवेत्। तूष्णीमेवहोतव्यं। यथापूर्वमाहुतीजुहोति। नाग्निः
परांभवति। अग्नीधेददाति। अग्निमुखानेवर्तून्प्रीणाति। उपव
र्हणंददाति। रूपाणामवरुध्यै। अन्वाहार्यं ब्राह्मणे। इंद्रियमेवावरुंधे।

धेनुꣳ होत्रे। आशिष एवावरुंधे। अनड्वाहमध्वर्यवे। वह्निर्वा अन
ड्वान्। वह्निरध्वर्युः॥१०॥ वह्निनैव वह्नियुस्तस्यावरुंधे। मिथुनौ गा
वौ ददाति। मिथुनस्यावरुद्ध्यै। वासो ददाति। सर्वदेवत्यं वै वासः।
सर्वा एव देवताः प्रीणाति। आ द्वादशभ्यो ददाति। द्वादश मासाः सं
वत्सरः। संवत्सर एव प्रतितिष्ठति। काममूर्ध्वं देयं। अपरिमितस्या
वरुद्ध्यै॥११॥ आदित्ये तृतीयमुप्वासीत्तत्तेनावारुंधत तस्याह्रोप्यते
रेतोऽग्निरेकमेकमेतानि हवीꣳषि निर्वपेत्सत्यवरो हति ददात्यध्व

आ॰ प्र॰
१७

युर्दीयुमेकंच ॥६॥ घर्मः शिरस्तद्धृदयमग्निः । संप्रियः पशुभिर्भुवत् । छ
र्दिस्तोकाय तनयाय यच्छ । वातः प्राणस्तद्धृदयमग्निः । संप्रियः पशुभिर्भु
वत् । स्वदितं तोकाय तनयाय पितुं पच । प्राचीमनु प्रदिशं प्रेहि विद्वा
न् । अग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाहि । ऊर्जं
नो धेहि द्विपदे चतुष्पदे ॥१॥ अर्कश्चक्षुस्तदसौ सूर्यस्तद्धृदयमग्निः
। संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः । शुक्रं ज्यो
तिरजस्रं । तेन मे दीदिहि तेन त्वा दधे । अग्निनाग्ने ब्रह्मणा । आनशे

संज्ञा च निरुक्तिश्च। ते मा विशतां ते मा जिन्वतां। ये ते अग्ने शिवे तनुवौ। २

व्यां नक्षत्रे सर्वं मा सूर्य्यां नक्षे। ये ते अग्ने शिवे तनुवौ। विराट् च स्वराट् च। ते
मा विशतां ते मा जिन्वतां।।२।। ये ते अग्ने शिवे तनुवौ। भिक्षुश्च परिभ
क्षश्च। ते मा विशतां ते मा जिन्वतां। ये ते अग्ने शिवे तनुवौ। ऋभीश्च सम्भृ
तिश्च। ते मा विशतां ते मा जिन्वतां। यास्ते अग्ने शिवास्तनुवः। ताभिरु
सं गच्छ।।३।। चतुष्पदे जिन्वतां तनुवस्त्रीणि च।।७।। इमे वा एते लोका
अग्नयः। ते यद्व्याहृत्त्वा आधीयेरन्। शोचयेयुर्यजमानं। धूमःशिर
इति गार्हपत्यमादधाति। वातः प्राण इत्यन्वाहार्यपचनं। अर्कश्चक्षु



तामित्यादधे। यास्ते अग्ने घोरास्तनुवः। ४

रित्याहवनीयं। तेनैवैनान्व्यावर्त्तयति। तथा न शोचयंति यजमानं। रथं
तरमभिगायते गार्हपत्य आधीयमाने। राथंतरो वा अयं लोकः॥१॥ अ
स्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते। वामदेव्यमभिगायत उद्ध्रियमाणे।
अंतरिक्षं वै वामदेव्यं। अंतरिक्ष एवैनं प्रतिष्ठितमाधत्ते। अथो शांतिर्वै
वामदेव्यं। शांतमेवैनं पराच्यमुद्धरते। बृहदभिगायत आहवनीय आ
धीयमाने। बार्हतो वा असौ लोकः। अमुष्मिन्नेवैनं लोके प्रतिष्ठितमा
धत्ते। प्रजापतिरग्निमसृजत॥२॥ सोऽश्वो वारो भूत्वा पराङैत्। तं वा

रवंतीयेनावारयंत। तद्वारवंतीयस्य वारवंतीयत्वं। श्यैतेन श्यैती अ
कुरुत। तच्छ्यैतस्य श्यैतत्वं। यद्वारवंतीयमभिगायते। वारयित्वैवैनं
प्रतिष्ठितमाधत्ते। श्यैतेन श्यैती कुरुते। धर्मः शिर इति गार्हपत्यमाद
धाति। सशीर्षाणमेवैनमाधत्ते॥३॥ उपैनमुत्तरो यज्ञो नमति। रुद्रो
वा एषः। यदग्निः। स आधीयमान ईश्वरो यजमानस्य पशून्हिꣳसितोः।
संश्रियः पशुभिर्भवेदित्याह। पशुभिरेवैनꣳ संश्रियं करोति। पशू
नामहीꣳसायै। छर्दिस्तोकाय तनयाय यच्छेत्याह। आशिषमेवैतामा

णास्ते।वातःप्राणइत्यन्वाहार्यपचनं॥४॥सप्राणमेवैनमाधत्ते।स्वदि
तंतोकायतनयायपितुंपचेत्याह।अन्नमेवास्मैस्वदयति।प्राचीम
नुप्रदिशंप्रेहिविद्वानित्याह।विभक्तिरेवैनयोःसा।अथोनाना
वीर्यावेवैनौकुरुते।ऊर्जंनोधेहिद्विपदेचतुष्पदइत्याह।आशि
षमेवैतामाशास्ते।अर्कश्चक्षुरित्याहवनीयं।अर्कोवैदेवाना
मन्नं॥५॥अन्नमेवावरुंधे।तेनमिदीहीत्याह।समिधएवैनं।
आनरोव्यानराइतित्रिरुदिंगयति।त्रयइमेलोकाः।एभ्यएवैनंलो

के प्रतितिष्ठितमाधत्ते। तत्तथा न कार्यं। वीजितमप्रतिष्ठितमा
दधीत। उद्धत्यैवाधायाभिमंत्र्यः। अवीजितमेवैनं प्रतिष्ठित
माधत्ते। विराड् स्वराड् यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध
इत्याह। एता वा अग्नेः शिवास्तनुवः। ताभिरेवैनं समर्धयति
। यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति ब्रूयाद्यं द्विष्यात्। ता
भिरेवैनं पराभावयति॥६॥ लोको सृजते नु माधत्ते न्वाहार्यप
चनं देवानामन्नमेवैनं प्रतिष्ठितमाधत्ते पंच च॥५॥ शमीगर्भाद्

ग्निं मे पचत। एषा वा अग्नेर्यज्ञिया तनूः। तामेवास्मै जनयति। अ
दितिः पुत्रकामा। साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्। तस्या उ
च्छेषणमददुः। तत्प्राश्नात्। सा रेतोऽधत्त। तस्यै धाता चार्यमा
चाजायेताम्। सा द्वितीयमपचत्॥१॥ तस्या उच्छेषणमददुः। त
त्प्राश्नात्। सा रेतोऽधत्त। तस्यै मित्रश्च वरुणश्चाजायेताम्। सा तृ
तीयमपचत्। तस्या उच्छेषणमददुः। तत्प्राश्नात्। सा रेतोऽध
त्त। तस्या अंशश्च भगश्चाजायेताम्। सा चतुर्थमपचत्॥२॥

तस्यां तु छेषण मह्कुः। तत्राप्यतः। सारे तोधत्त। तस्याइंडास्वि
वेसाऽंस्याजायेतां। स्तुतौदनं पचति। रे तएवतदृधाति। श्राम्नंति
ब्राह्मणाओदनं। यदाज्यं मुच्छिष्यते। तेनसमिधोभ्यज्यादधाति। उ
छेषणवाअहितिरे तोधत्त॥१॥ तुछेषणादेवतद्रेतोधत्ते। अस्थि
वाएतत्। यत्समिधः॥ तद्रेतः। यदाज्यं। यदाज्येनसमिधोभ्यज्या
दधाति। अस्थ्येवतद्रेतसिदधाति। तिस्रआदधाति मिथुनत्वाय
॥ऽयतीर्भवंति। प्रजापतिना यज्ञमुखेनसंमिताः॥६॥ ऽयतीर्भ

ब्रा·ब्र·
२१

वंति। युस्तपुरुषासंमिताः। इयती भवंति। एतावद्वै पुरुषे वीर्यं। वी
र्यसंमिताः। आर्द्रा भवंति। आर्द्रमिव हि रेतः सिच्यते। चित्रियस्या
श्वत्थस्यादधाति। चित्रमेव भवति। घृतवतीभिरादधाति। ५।
एतद्वा अग्नेः प्रियं धाम। यद्घृतं। प्रियेणैवैनं धाम्ना समर्धयति। अ
थो तेजसा। गायत्रीभिर्ब्राह्मणस्यादध्यात्। गायत्रछंदा वै ब्रा
ह्मणः। स्वस्यछंदसः प्रत्ययनत्वाय। त्रिष्टुभी राजन्यस्य। त्रिष्टु
प्छंदा वै राजन्यः। स्वस्यछंदसः प्रत्ययनत्वाय। ६। जगतीभि

वैश्यस्य जगती छंदो वै वैश्यः । स्वस्य छंदसः प्रत्ययनस्त्वाय । त
ꣳ संवत्सरं गोपायेत् । संवत्सरꣳ हि रेतो हितं वर्धते । यद्येनꣳ सं
वत्सरे नोपनमेत् । समिधः पुनराद्ध्यात् । रेत एव तद्धितं वर्धमा
नमेति । न माꣳसमश्नीयात् । न स्त्रियमुपेयात् ॥७॥ यन्माꣳसम
श्नीयात् । यत्स्त्रियमुपेयात् । निर्वीर्यः स्यात् । नैनमग्निरुपनमेत् ।
श्व आधास्यमानो ब्रह्मौदनं पचति । आदित्या वा इत उत्तमाः सुव
र्गं लोकमायन् । ते वा इतो यन्तं प्रतिनुदन्ते । एते खलु वा आदित्याः ।

यज्ञात्मृण्याः। तैरेव संत्वं गच्छति।।८।। नैनं प्रतिनुदंते। ब्रह्मवादिनो व
दंति। कांसः अग्निः कार्यः। यो स्मै प्रजां पुनरन्वजनयतीति। राकैसा
ऽं रात्रिमग्निमिंधीत। तस्मिन्नुपव्युषमरणी निष्टपेत्। यद्यधुगाय
वानि। तान्यो विच्छायति। तादृगेव तत्। अपोद्दुह्य भस्माग्निं मंथति
।।९।। सैव सा अग्नेः संततिः। तं मंथित्वा प्रांचमुद्धरति। संवत्सरमेव तत
के तौहित्तं प्रजनयति। अनाहितस्तस्याग्निरित्याहुः। यः समिधो ना
धायाग्निमाधत्त इति। ताः संवत्सरे पुरस्तादाहरेध्यात्। संवत्सरादेवै

नेमवरुंध्याधत्ते। यदि संवत्सरे नादध्यात्। द्वादश्यां पुरस्तादादध्या
त्। संवत्सरप्रतिमा वै द्वादश रात्रयः। संवत्सरमेवास्याहिता भवं
ति। यदि द्वादश्यां नादध्यात्। त्र्यहे पुरस्तादादध्यात्। आहिता एवा
स्य भवंति॥१०॥ द्वितीयमपचच्चतुर्थमपचद्धितारेतोधत्त संमि
ता घृतवतीभिरादधाति राजन्यः स्वस्य छंदसः प्रत्ययनस्त्वायेया
च्छति मंथति रात्र्य यश्चत्वारिंच॥११॥ प्रजापतिः प्रजा असृजत।
स रिरिचानोमन्यत। स तपोतप्यत। स आत्मन्वीर्यमपश्यत्। तद

३ अथर्वेपितुं मे गोपायेति॥ सा द्वितीयमुदक्रामत्॥ तत्प्रजापतिः पर्यगृह्णात्।

१·त्र·
२३

वर्धत। तद्रेतः समस्त्सहसोर्ध्वमसृज्यत। सा विराडभवत्। तां देवासुरा व्यगृह्णत। सोऽब्रवीत्प्रजापतिः। ममवा एषा॥१॥ दोहा एव युष्माकमिति। सा ततः प्राच्युदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। नर्येप्रजां मे गोपायेति। सा द्वितीयमुदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। शंस्य पशून्मे गोपायेति॥२॥ सा चतुर्थमुदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। सप्रथ सभां मे गोपायेति। सा पंचममुदक्रामत्। तत्प्रजापतिः पर्यगृह्णात्। अहेबुध्निय मंत्रं मे गोपायेति। अ

२३

ग्नीन्वावसातान्व्यक्रमत । तान्प्रजापतिः पर्यगृह्णात् । अथो पाङ्क्ति

मेव । पाङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा ॥ ३ ॥ तामात्मनोऽधि निर्मिमीते

। यदग्निराधीयते । तस्मादेतावन्तोऽग्नय आधीयन्ते । पाङ्क्तं वा इद

ꣳ सर्वम् । पाङ्क्तेनैवेदꣳ स्पृणोति । अथर्व पितुं मे गोपायेत्याह । अ

न्नमेवैतेन स्पृणोति । नर्य प्रजां मे गोपायेत्याह । प्रजामेवैतेन

स्पृणोति । शꣳस्य पशून्मे गोपायेत्याह ॥ ४ ॥ पशूनेवैतेन स्पृणो

ति । सप्रथ सभां मे गोपायेत्याह । सभामेवैतेनेन्द्रियꣳ स्पृणोति

पा

श्रा॰ प्र॰
२४

र्य

।अर्हे बुभुक्षियमंत्रं मे गोपायेत्याह। मंत्रं मे वै ते नु भिक्षियस्मृणोति।
यद्धन्वाहार्यपचने न्वाहार्यं पचंति। तेनु सोस्याभीष्टः प्रीतः। यद्गा
र्हपत्य आज्यमधिश्रयंति सं पत्नीर्याजयंति। तेनु सोस्याभीष्टः
प्रीतः। यदाहवनीये जुह्वति।१। तेनु सोस्याभीष्टः प्रीतः। यत्स
भायां विजयंते। तेनु सोस्याभीष्टः प्रीतः। यदावसथेन्नं हरंति
। तेनु सोस्याभीष्टः प्रीतः। तथास्य सर्वे प्रीता अभीष्टा आधीयंते
। स्त्र वसथमेषन्तेव मुपतिष्ठते कमेकं। यथा श्रात्सुपायश्रद्धेवा

सिनेपरिहृत्यगृह्णानेति।ताहगेवतत्।पुनरागत्योपतिष्ठते।
साभागेयमेवैषांतत्।सातंतऊर्ध्वारोहत्।सारोहिण्यभवत्
।तद्रोहिण्यैरोहिणित्वं।रोहिण्यामग्निमादधीत।स्वएवैनंयोनौ
प्रतिष्ठितमाधत्ते।ऋध्नोत्येनेन॥६॥एषापुरस्तान्मेगोपायेतिप्र
विष्टापुरस्तान्मेगोपायेत्याहुऋजुकृतितिष्ठतेसप्रचं॥११॥ब्रह्मसंध
त्तंतन्तिकास्तइंतिवाहुरासुप्रजापतिर्वाचोदेवासुराघर्मःशि
रइमेवैरामीगर्भस्त्वजापतिःसरिरिचानःसतपःसआत्मं

वीर्यैरित्ते ॥१०॥ ब्रह्मसंधत्तंतौ द्विव्यावपोनृं त्वायश्चाच्येषां यद्वपर्युप
रियत्सुधःसोम्योवारोभूत्वाजगतीभिरश्नीतिः॥१८॥ ॥हरिः ॐ
॥ ॥उद्धन्यमानमस्या अमेध्यं अपपाप्मानं यजमानस्य द्वंत्तशि
वा नः संतु प्रदिशः श्वतस्त्रः। शन्नो मातापृथिवी तोकसाता। श
न्नो देवीरभिष्टये आपो भवंतु पीतये। शं योरभिस्रवंतु नः। वै
श्वानरस्यरूपं पृथिव्यां परिस्रसा। स्योनमाविशंतु नः॥११॥ य
द्दिदंदिवोयद्दहः पृथिव्याः संजग्मानेरोदसी संबभूवतुः। उषा

त्कूर्मपृष्ठतुल्यमूर्धा ॥ ६ ॥ होभयोर्यस्त्रिषु मार्गेषु मिश्राः ॥ श्रुतौ कुर्व

णो यस्य पृथिवी मञ्चरः ॥ गुहाकारं मा स्वरूपं श्रुतीत्य ॥ तन्मे न्यक्षमि

द संभरेत ॥ १ ॥ तं जीवे मनो रहः सर्वाः ॥ ऊर्जं पृथिव्या रसमाभ

रेत ॥ २ ॥ तं जीवे मनो रहः पुरूचीः ॥ २ ॥ वृक्षैभिरत्तुवित्तं गुहासु

श्रोत्रैतत्तु अर्थवधिराभवाम ॥ प्रजापतिसृष्टानां प्रजानां ॥ क्षुधो

पहत्यै सुवितं नो अस्तु ॥ उपप्रभिंन्नमिषमूर्जं प्रजाभ्यः ॥ सूर्येगृ

हेभ्यो रसमाभराभि ॥ यस्य रूपं बिभ्रदिमामविंदत ॥ गुहा प्रवि

शं सरिरस्य मध्ये। तस्येहं विहितमाभरंतां अहं छंबट्कारमस्यां विधे॥ ३॥ यस्य येयं पंथ्यसरिरस्य मध्ये। ऊर्ध्वमपंथ्य ऊर्जगतः प्रतिष्ठां। ततस्य अकरस्यायते नादिजातं। पूर्णाय स्त्रियः प्रतिष्ठानं हराम्या। भिरहूर्जगतः प्रतिष्ठां। उर्वी मिमां विभूजनस्यं भर्त्रीं तानः



शिवाः शर्कराः संतु सर्वाः। अग्नेरेतः ख्यं हिरण्यं। अद्भ्यः संभृतं प्रमृतं प्रजासु। तस्य भरं नुत्तरतो निधाय॥ ४॥ अतिप्रयच्छंदुरितिं तरेयं। अश्वो रूपं कृत्वा यदश्वस्यो तिष्ठः। संवत्सरं देवेभ्यो नि

लाय॥ तत्ते न्यक्रमिह संभरंतः॥२॥ तं जीवेम शरदः सवीराः॥ ऊ
र्जः पृथिव्या अध्युत्थितोसि॥ वनस्पते शतवल्शो विरोह॥ त्वया
वयमिषमूर्जं मदंतः॥ रायस्पोषेण समिषा मदेम॥ गायत्रिया ह्रि
यमाणस्य यत्ते॥५॥ पूर्णमपतत्तृतीयस्यै दिवोधि॥ सोयं पूर्णः सो
म पूर्णाद्विजातः॥ ततो हरामि सोमपीथस्यावरुध्यै॥ देवानां ब्रह्म
वादं वदतां यत्॥ उपाशृणोः सुश्रवा वै श्रुतोसि॥ ततो मामाविश
तु ब्रह्मवर्चसं॥ तत्संभरंस्तदवरुंधीय साक्षात्॥ यया ते सृष्ट

स्याग्नेः। हेति मत्वां मयस्त्वं प्रजापतिः। तामिमामव्रंहाहाय।। हा।। हा
मीं‌ऽस्त्वां त्वैहराम्युहं। यत्तैसृष्टस्य यतः। विकंकतं भाओऽर्जना
तवेदः। तयाभासासंमितः। उरुं नो लोकमनुप्रभाहि। यत्तेतां
तस्य हृदयमाच्छिदं जातवेदः। मरुतोऽद्भिः स्तमयित्वा। एतत्तेतद
ग्नेः संभरामि। सात्मा अग्ने सहृदयो भवेह। चित्रियादश्वत्थात्सं
भृताबृहत्यः।।७।। शरीरमभिसंस्कृतास्य। प्रजापतिनायज्ञमु
खेन संमिताः। तिस्रः स्त्रिवृद्भिर्मिथुनाः प्रजात्यै। अश्वत्थाद्व्यवा

हा द्विजातं। अग्ने स्तनं यज्ञियाः संभरामि। शांतयोनिं ॥७॥ शमी
गर्भं। अग्नये प्रजनयितवै। यो अश्वत्थः शमीगर्भः। आरुरोह त्वे
सचा। तं ते हरामि ब्रह्मणा ॥८॥ यज्ञियैः केतुभिः सह। यं त्वा सम
भरं जातवेदः। यथा शरीरं भूतेषु न्यक्तं। स संभृतः सीद शिवः प्र
जाभ्यः। उरुं नो लोकमनुनेषि विद्वान्। प्र वेधसे कवये मेध्याय व
चो वंदारु वृषभाय वृष्णे। यतो भयमभयं तन्नो अस्तु। अव देवान्यजे हे
ड्यान्। समिधाग्निं दुवस्यत ॥९॥ घृतैर्बोधयतातिथिं। आस्मिन्हव्या

जुहोत न । उपत्वाग्ने हविष्मतीः। घृताचीर्यन्तु हर्यत । जुषस्व समिधो
मम । तं त्वा समिद्भिरंगिरः। घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ।
समिध्यमानः प्रथमो नु धर्मः। समक्तुभिरज्यते विश्ववारः ॥१०॥ शो
चिष्केशो घृतनिर्णिक्पावकः। सुयज्ञो अग्निर्यजथाय देवान् । घृत
प्रतीको घृतयोनिरग्निः। घृतैः समिद्धो घृतमस्यान्नं । घृतप्रुषस्त्वा
सरितो वहंति । घृतं पिबन्त्सुयजा यक्षि देवान् । आयुर्दा अग्ने हवि
षो जुषाणः। घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं ।

पितेव पुत्रमभिरक्षतादिमं ॥१९॥ त्वामग्ने समिधानं यविष्ठ देवा
दूतं चक्रिरे हव्यवाहं । उरुज्रयसं घृतयोनिमाहुतं । त्वेषं चक्षुर्द
धिरे चोदयन्मति । त्वामग्ने प्रदिव आहुतं घृतेन । सुम्नायवः सुष
मिधा समीधिरे । स वावृधान ओषधीभिरुक्षितः । उरु ज्रयांसि
पार्थिवा वितिष्ठसे । घृतप्रतीकं व ऋतस्य धूर्षदं । अग्निं मित्रं न स
मिधान ऋंजते ॥१२॥ इंधानो अक्रो विदथेषु दीद्यत् । शुक्रवर्णा
मुदु नो यंसते धियं । प्रजा अग्ने संवासय । आशाश्च पशुभिः सह ।

राष्ट्राण्यस्मा आ धेहि। यान्यासन्त्सवितुः सवे। मही विश्पत्नी सदने ऋ
तस्य। अर्वाची एतं धरुणे रयीणां। अंतर्वत्नी जन्यं जातवेदसं। अ
ध्वराणां जनयथः पुरोगां॥१३॥ आरोहतं दशतं शक्वरीर्मम। ऋ
तेनाग्न आयुषा वर्चसा सह। ज्योग्जीवंत उत्तरामुत्तरां समां। दर्श
महं पूर्णमासं यज्ञं यथा यजै। ऋत्वियवती स्थो अग्निरेतसौ। गर्भं
दधाथां ते वामहं ददे। तत्सत्यं यद्वीरं बिभृथः। वीरं जनयिष्यथः।
ते मत्प्रातः प्रजनिष्येथे। ते मा प्रजाते प्रजनयिष्यथः॥१४॥ प्रज

नं

यां पृथुभिर्ब्रह्मवर्चसे सुवर्गे लोके। अनृतात्सत्यमुपैमि। मानुषा
द्दैव्यमुपैमि। दैवीं वाचं यच्छामि। राक्षैरग्निमिंधानः। उभौ लोकौ
सनेमहं। उभयोर्लोकयोर्ऋध्वा। अति मृत्युं तराम्यहं। जातवेदो
भुवनस्य रेतः। इह सिंच तपसो यज्जनिष्यते॥१५॥ अग्निमश्वत्था
दधि हव्यवाहं। शमीगर्भाज्जनयन्यो मयोभूः। अयं ते योनिर्ऋ
त्वियः। यतो जातो अरोचथाः। तं जानन्नग्न आरोह। अथा नो वर्ध

तृवि

या रयिं। अपेत वीत वि च सर्पतातः। ये त्र स्थ पुराणा ये च नूतनाः। अ

हार्द्दिं पमोवसानं पृथिव्याः। अक्रन्निमं पितरो लोकमस्मै॥१६॥ अ
ग्नेर्भस्मास्यग्नेः पुरीषमसि। संज्ञानमसि कामधरणं। मयि ते का
मधरणं भूयात्। सं वः सृजामि हृदयानि। संसृष्टं मनो अस्तु व
ः। संसृष्टः प्राणो अस्तु वः। सं या वः प्रियास्तनुवः। संप्रिया हृद
यानि वः। आत्मा वो अस्तु संप्रियः। संप्रियास्तनुवो मम॥१७॥ क
स्त्वं ता द्यावापृथिवी। कस्त्वं तामापओषधीः। कस्त्वं तामग्नयः हृ
र्य कः। मम ज्येष्ठायु सव्रताः। ये ग्नयः समनसः। अंतरा द्यावापृ

थिव्याः । वासंतिका ऋतवअभिकल्पमानाः । इंद्रमिव देवा अभि
संविशंतु । दिवस्त्वा वीर्येण । पृथिव्यै महिम्ना ॥१७॥ अंतरिक्षस्य
पोषेण । सर्वपशुमादधे । अजीजनं त्वा मृतं मर्त्यासः । अस्रेमाणं
तरणिं वीडुजंभं । दश स्वसारो अग्रुवः समीचीः । पुमांसं जा
तमभिसंरभंतां । प्रजापतेस्त्वा प्राणेनाभिप्राणिमि । पूष्णःपोषे
ण मह्यं । दीर्घायुत्वाय शतशारदाय । शतं शरद्भ्य आयुषे वर्च
से ॥१८॥ जीवातवे पुण्याय । अहं त्वदस्मि मदसि त्वमेतत् । ममासि

योनिस्त्वं योनिरस्मि। ममैव सन्वेह हव्यान्यग्ने। पुत्रः पित्रे लोककृज्जा
तवेदः। प्राणे त्वामृतमादधामि। अन्नादमन्नाद्याय। गोप्तारं सुत्यै। सु
गार्हपत्यो वितहन्नरातीः। उषसः श्रेयसीः श्रेयसीर्दधत्॥२०॥ अ
ग्ने सपत्नां अपबाधमानः। रायस्पोषमिषमूर्जमस्मासु धेहि। इमा
न्तु मामुपतिष्ठन्तु रायः। आभिष्ट्वा जाभिरिह संवसेय। इहो इडोति ष्ठ
तु विश्वरूपी। मध्ये वसोर्दीदिहि जातवेदः। ओजसे बलाय त्वोद्य
च्छे। वृषणे शुष्मायायुषे वर्चसे। सपत्नतूरसि वृत्रतूः। यस्ते देवेषु महि

मासुवर्गः॥२१॥ यस्ते आत्मा पशुषु प्रविष्टः। पृथिव्यां ते मनुष्येषु प
प्रविष्टः। तया नो अग्ने जुषमाण एहि। दिवः पृथिव्याः पर्यन्तरिक्षात्। वाता
त्पशुभ्यो अध्योषधीभ्यः। यत्रयत्र जातवेदः संबभूथ। ततो नो अ
ग्ने जुषमाण एहि। प्राचीमनु प्रदिशं प्रेहि विद्वान्। अग्नेरग्ने पुरो अ
ग्निर्भवेह। विश्वा आशा दीद्यानो विभाहि॥२२॥ ऊर्जं नो धेहि द्विपदे
चतुष्पदे। अन्वग्निरुषसामग्रमख्यत्। अन्वहानि प्रथमो जातवे
दाः। अनु सूर्यस्य पुरुत्रा च रश्मीन्। अनु द्यावापृथिवी आततान।

विक्रमस्व महाँ असि । वेदिषन्मानुषेभ्यः । त्रिषु लोकेषु जागृहि ।
यदिदं दिवो यददः पृथिव्याः । संविदाने रोदसी संबभूवतुः ॥ २८ ॥
तयोः पृष्ठे सीदतु जातवेदः । शंभूः प्रजाभ्यस्तनुवे स्योनः । प्राणं त्वा
मृतआदधामि । अन्नादमन्नाद्याय । गोप्तारं गुप्त्यै । यत्ते शुक्र शुक्रं व
र्चः शुक्रा तनूः । शुक्रं ज्योतिरजस्रं । तेन मे दीदिहि तेन त्वादधे । अग्नि
नाग्ने ब्रह्मणा । आनशे व्यानशे सर्वमायुर्व्यानशे ॥ २९ ॥ नर्य प्रजां
मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते स

त्ये प्रतिष्ठितां । अथर्वप्रितुं मे गोपाय ॥ २ ॥ सुमन्त्रमिहायुषे । अदब्ध्या
योशीततनो । अविषन्नः प्रितुं कृणु ॥ ३ ॥ ६ स्यं पुरुषं मे गोपाय । द्विपादो
ये चतुष्पदः ॥ ५ ॥ अथान्तरी फाम्भुयइहाग्नौ । येन्चे कंरा फाआ मुगाः ।
सर्वं यसुभां मे गोपाय । ये च सभ्याः सभासदः । तानिन्द्रियावतः कु
रु । सर्वमायुरुपासतां । अहे बुध्निय मंत्रं मे गोपाय । यमृषयस्त्रयि
विदा विदुः । ऋचः सामानि यजूंषि । सा हि श्री रमृता सतां ॥ ८ ॥ च
तुः शिखंडा युवतिः सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । मर्मृज्य

मोनामहृतेसौभगाय। महेधुक्ष्वयजमानायकामान्। इहैवसंतत्रस
तोवोअस्तयः। प्राणेनवाचामनसाबिभर्मि। तिरोमासंतमायुर्माप्रहा
सीत्। ज्योतिषावोवैश्वानरेणोपतिष्ठे। पंचधानीन्व्यक्रामत्। विराट्
सृष्टाप्रजापतेः। ऊर्ध्वारोहद्रोहिणी। योनिरग्नेः प्रतिष्ठितिः॥२७॥ वि
शंतुनःपुरूचीर्विधेमनिधायुयत्तेप्रदाहायबृहत्योब्रह्मणाऽऽवस्य
तविश्ववारइमंमृंजतेपुरोगांप्रजनयिष्यथोजनिष्यतेस्मेममंम
हिम्नावर्चसेदधत्सुवर्गेभाह्रिसंबभूवतुरायुर्मानरोचतुष्पदः

सतांप्रजापतेर्ईचं॥१॥नवैतान्यहानिभवंति।नवुवैसुवुर्गलोकाः॥यदेतान्यहोन्युपयंति।नुवस्वैवतसुवुर्गेषुलोकेषुसत्रिणःव्रतितिष्ठंतोयंति।अग्निष्टोमाःपरःसामानःकार्यइत्याहुः॥अग्निष्टोमसंमितःसुवुर्गोलोकइति।द्वादशाग्निष्टोमस्यस्तोत्राणि।द्वादशमासाःसंवत्सरः।तत्रेनसूक्ष्यं।उक्थ्याएवसप्तदशाःपरःसामानःकार्याः॥१॥पुरावोवाउक्थ्यानि।पशूनामवरुध्ये।विश्वजिदभिजितावग्निष्टोमौ।उक्थ्याःसप्तदशाःपरःसामानः।तेसंस्तुताविराजमभिसं

ब्रा. षू.
३४

पद्यंते। द्वे च र्चौ व्यतिरिच्येते। एकया गौरतिरिक्तः। एकयायुरूनः। सु
वर्गो वै लोको ज्योतिः। ऊर्ग्विराट्॥२॥ सुवर्गमेवैतेन लोकमभिजयंति
। यत्सरं रथंतरं। तत्प्रथमेऽहन्कार्यं। बृहद्द्वितीये। वैरूपं तृतीये। वै
राजं चतुर्थे। शाक्वरं पंचमे। रैवतं षष्ठे। तदु पृष्ठेभ्यो न यंति। संत
नेय एते ग्रहा गृह्यंते॥३॥ अतिग्राह्याः परःसामसु। इमानेवैतैर्लोका
न्त्संतन्वंति। मिथुना एते ग्रहा गृह्यंते। अतिग्राह्याः परःसामसु। मि
थुनमेवैते यजमाना अवरुंधते। बृहत्पृष्ठं भवति। बृहद्वै सुवर्गो लो

कः। बृहते वसु वर्गं लोकं यंति। त्रयस्त्रिंशं त्रि नामु साम। माध्यंदिने प
वमाने भवति॥४॥ त्रयस्त्रिंशद्वै देवताः देवता एवावरुंधते। ये वा
इतः परांचं संवत्सरमुपयंति। न हैनं ते स्वस्ति समश्नुवते। अथ ये
मुतोर्वांचमुपयंति। ते हैनं स्वस्ति समश्नुवते। एतद्वा अमुतोर्वांच
मुपयंति। यदेवं। यो ह खलु वाव प्रजापतिः। स उ वेवेंद्रः। तदु देवेभ्यो
नयंति॥५॥ कार्यं वैराजं ह्येतं तु पवमाने भवती द्व एकं च॥६॥ संतति
र्वा एते ग्रहाः। यत्स्वरः सामानः। विषूवान् दिवाकीर्त्यं। यथा शालायै पक्ष

सी।एवंसंवत्सरस्यपक्षसी।यद्द्वेतेनगृह्येरन्।विषूचीसंवत्सरस्य
पक्षसीअवस्त्रंसेयातां।आर्तिमार्छेयुः।यद्द्वेतेगृह्यंते।यथाशालो
यैपक्षसीमध्यमंवंश्यमभिसमायच्छति॥१॥एवंसंवत्सरस्यप
क्षसीदिवाकीर्त्यमभिसंतन्वंति।नार्तिमार्छंति।एकविंशमहर्भव
ति।शुक्लाग्रायह्रागृह्यंते।प्रत्युल्लब्धैसयुत्वाय।सौर्यएतदहःप्रसुरा
लंभ्यते।सौर्यातिग्राह्यौगृह्यते।अहरेवरूपेणसमर्धयंति।अथो
अल्कएवैषबालिक्रियते।सुतेतदहहरतिग्राह्यौगृह्यंते॥२॥सप्तवे

न्शी षूण्याः ङ्माणाः । असावा    द्धित्यः शिरः पूजानां न्शी षन्तेवपूजा
नां प्राणां दधाति । तस्मात्सुपवशी र्षंप्राणाः । इंद्रो वृत्रं हत्वा । असुरा
न्पराभाव्य । सइमांल्लोकानभ्यजयत् । तस्यासौ लोको नभिजितआ
सीत् । तंविश्वकर्माभुत्वाभ्यजयत् । यदैश्वकर्मणो गृह्यते । असुव
र्गस्यलोकस्याभिजित्यै । पवाएतेस्माल्लोकाच्यवंते । ये वैश्वकर्मणं
गृह्णते । आदित्यस्थो गृह्यते । इयंवाअदितिः । अस्यामेवप्रतितिष्ठंति
। अन्योन्यो गृह्येते । विश्वान्येवान्येनुकर्माणि कुर्वाणा यंति । अस्याम

आ. ब्र.
३६

न्येनु प्रतितिष्ठति। तावा परार्धात्संवत्सरस्यान्योन्यो गृह्येते। तावुभौ
सह महाव्रते गृह्येते। युक्तस्यैवां तं गत्वा। उभयोर्लोकयोः प्रतितिष्ठति
। अकर्यमुक्थं भवति। अन्नाद्यस्यावरुध्यै॥४॥ समायच्छत्यति ग्राह्या
गृह्यन्ते गृह्यते संवत्सरस्यान्यौ गृह्येते पंच च॥५॥ एकविंशो वा एष भ
वति। एतेन वै देवा एकविंशेन। आदित्यमितउत्तमं सुवर्गं लोक
मारोहयन्। स वा एष एकविंशः। तस्य दश वस्तादहानि। दश
परस्तात्। स वा एष विराड्युभयतः प्रतिष्ठितः। विराजि हि वा एष उभ

न्यो

३६

यतः प्रतिष्ठितः। तस्मादं तु रेमो लोको यन्न। सर्वेषु सुवर्गेषु लोकेष्वभित
पन्नेति॥९॥ देवा वा आदित्यस्य सुवर्गस्य लोकस्य। पराचोतिपाद्वादबि
भयुः। तं छंदोभिरदृंहन्धृत्यै। देवा वा आदित्यस्य सुवर्गस्य लोकस्य
। अवाचोवपाद्वादबिभयुः। तं पंच भीरश्मिभिरुदवयन्न। तस्मादेक
विंशो हन्त्यं चहीवाकीर्त्यानि क्रियंते। रुन्म यो वेदिवाकीर्त्यानि। ये गा
यत्रे। ते गायत्री षूत्तर योः पवमानयोः॥२॥ मुहादिवाकीर्त्यंहोतुः पृ
ष्ठं। विकर्णं ब्रह्मसाम। भासोग्निष्टोमः। अथैतानि परांणि। परे वै देवा

आ० प्र०
२७

आदित्यं सुवर्गं लोकमपारयन्नयदपारयन्। तत्स्वराणां पुरत्वं। पारयंत्येनं परारणि। यएवं वेद। अथैतानि स्वराणि। स्वरैर्वै देवा आदित्यं सुवर्गं लोकमस्पारयन्। यदस्पारयन्। तत्स्वराणां स्परत्वं। स्पारयंत्येनं स्वराणि। यएवं वेद॥ ३॥ एते पवमानयोः स्वराणि पंचचग॥ ४॥ अव्रतिभ्यां वा एते गच्छंति। येषां संवत्सरेनाप्तेय। एकादशिन्याप्यते। वैष्णवं वामनमालभंते। यज्ञो वै विष्णुः। यज्ञमेवालभंते प्रतिष्ठित्यै। ऐंद्राग्नमालभंते। इंद्राग्नी वै देवानामयातयामानौ। यएवं देवते अ

२७

यांतयाम्नी। तेऽएवालभंते॥१॥ वैश्वदेवमालभंते। देवताएवावरुंधते

। द्यावापृथिव्यां धेनुमालभंते। द्यावापृथिव्योरेवप्रतितिष्ठंति। वायव्यं

वत्समालभंते। वायुरेवैभ्योयथायतनाद्देवताअवरुंधे। आदित्या

मविंवशामालभंते। इयंवाअदितिः। अस्यामेवप्रतितिष्ठंति। मैत्रा

३ वरुणीमालभंते॥२॥ मित्रेणैवयज्ञस्यस्विष्टंशमयंति। वरुणेनदु

रिष्टं। प्राजापत्यंतूपरंमहाव्रतआलभंते। प्राजापत्योतिरात्रोर

ह्यते। अहरेवरूपेणसमर्द्धयंति। अथोअह्नएवैषबलिःक्रियते। अ

ब्रा० प्र०
३८

ग्नेयमालभंते प्रतिप्रज्ञात्यै। अजं पुत्वान्वा एते पूर्वैर्मासैरवरुंधते। यद्देतेगव्याः पुरा वआलभ्यंते। उभयेषां पशूनामवरुध्यै॥३॥ यइतिरिक्तामेकादशिनीमालभेरन्। अप्रियं भ्रातृव्यमभ्यतिरिच्येत। यद्वै द्वौ पशू समस्येयुः। कनीयआयुः कुर्वीरन्। यद्देते ब्राह्मणवंतः पुरा वआलभ्यंते। नाप्रियं भ्रातृव्यमभ्यतिरिच्यते। न कनीयआयुः कुर्वते॥४॥ तेएवालभंते मैत्रावरुणीमालभंते वरुध्यै सहत्वै॥५॥ प्रजापतिः प्रजाः सृष्ट्वा वृत्तोशयत्। तं देवा भूतानां रसं तेजः

३८

संभृत्य। तेनैनमभिषज्यन्। महानेव वृत्र इति। तन्महाव्रतस्य महा
व्रतत्वं। महद्व्रतमिति। तन्महाव्रतस्य महाव्रतत्वं। महतो व्रतमिति
त्वं । तन्महाव्रतस्य महाव्रत पंचविंशः स्तोमो भवति॥१॥ चतुर्विंश
त्यर्धमासः संवत्सरः। यद्वा एतस्मिन्संवत्सरेऽधि प्राजायत। तदन्नं
पंचविंशमभवत्। मध्यतः क्रियते। मध्यतो ह्यन्नमशितं धिनोति
। अथो मध्यत एव प्रजानामन्नं धीयते। अथो यद्वा इदं मध्यतः क्रियते। य
तस्मादिदं ते प्रजाः समेधंते। अंततः क्रियते प्रजननाय। ये वा त्रिवृच्छिरो

भवति॥२॥त्रेधाविहितꣳहिशिरः।त्वोमंछुवीरस्थि।पराचास्तुवंति।
तस्मात्तत्सहगेव।नमेद्युतोनुमेद्यति।नकृश्यतोनुकृश्यति।पंचदशो
न्यःपक्षोभवति।सप्तदशोन्यः।तस्माद्वयाꣳस्यन्यतरमर्द्धमभिपर्या
वर्त्तंते।अन्यतरतोहितज्जरीयःक्रियते॥३॥पंचविꣳशआत्माभवति
।तस्मान्मध्यतःपशवोवरिष्ठाः।एकविꣳशंपुच्छं।द्विपदास्तुवंति
प्रतिष्ठित्यै।सर्वेणसहस्तुवंति।सर्वेणह्यात्मनात्मन्वी।सहोत्सतंति
।एकैकामुच्छिꣳषंति।आत्मन्नंगानिवृक्षानि।नचाएतेनसर्वःपुरुषः

॥४॥ यद्दितईतोलोमानिदृतोनुखान्। पुरिमार्दःक्रियंते। तान्येवते
नुप्रत्युप्यंते। औडुंबरःस्तल्पोभवति। ऊर्ग्वाअन्नमुडुंबरः। ऊर्जए
वान्नाद्यस्यावरुध्यै। यस्यैतत्सुसद्यमनभिजितꣳस्यात्। सदेवाना
ꣳसाम्यक्षे। तत्सुसद्यमभिजयानीतितस्मैमारुत्योजायेत। तत्सुस
द्यमेवाभिजयति॥५॥ यस्यैतत्सुसद्यमभिजितꣳस्यात्। सदेवाना
ꣳसांम्यक्षे। तत्सुसद्यंमापराजेषीतितस्मैमारुत्योजायेत। नतत्सु
सद्यंपराजयते। क्षुंखेनाꣳसति। महोवैलक्षुरवः। महःसएवान्नाद्यस्या

श्रा॰ प्र॰
५०

वेरुध्ये। देवासुराः संयत्ता आसन्। त आदित्ये व्यायच्छंत। तं देवाः सम
जयन्॥६॥ ब्राह्मणश्च शूद्रश्च चर्मकर्त्ते व्यायच्छेते। दैव्यो वै वर्णो ब्राह्म
णः। असुर्यः शूद्रः। इमेरात्सुरिमे सुभूतमक्रन्नित्यन्यतरो ब्रूयात्
।इमऊवासीकारिण इमेउ भूतमक्रन्नित्यन्यतरः। यदेवैषां सुकृ
तं या राद्धिः। तदन्यतरोऽभिश्रीणाति। यद्वैषां दुष्कृतं या राद्धिः। तद
न्यतरोऽपहंति। ब्राह्मणः संजयति। अमुमेवादित्यं भ्रातृव्यस्य संवि
दंते॥७॥ भवति भवति क्रियते पुरुषो जयत्यजयं जयत्येकं च॥८॥

उद्धन्यमानं नैवैतानि संततिरेकविं॰ २ । एषो वा तिष्ठां प्रजापतिः प्रजा
:सृष्ट्वा पूतः षट् ॥६॥ उद्धन्यमानं॰ श्रोचि क्रैरो मे सु पत्नानति शाखां
वै स्वदैवमालभेते पंचाशत् ॥५०॥ ॥हरिः ॐ॥ ॥देवासुराःसंयत्ता
आसन् । ते देवा विजयमुपयंतः । अग्नीषोमयोस्तेजस्विनीस्तनूः सन्न्य
दधत । इदमु नो भविष्यति । यदि नो जेष्यंतीति । तेनाग्नीषोमावपाक्रा
मतां । ते देवा विजित्या । अग्नीषोमावन्वैच्छन् । तेग्निमन्वविंदन्नृतुषु स
नं । तस्य विभक्तीभिस्तेजस्विनीस्तनूरवारुंधत ॥१॥ तेसोममन्ववि

हन्। तमेघ्नन्। तस्यैयथाभित्तायैतन्न्यैरक्षत। तेग्रहाअभवन्। तद्ग्र
हाणांग्रहत्वं। यस्यैवंविदुषोग्रहागृह्यंते। तस्युत्वेवगृहीताः। नानाग्नेयं
पुनराधेयेकुर्यात्। यदनाग्नेयंपुनराधेयेकुर्यात्। व्यृद्धमेवतत्॥२॥
अनाग्नेयंवाएतत्क्रियते। यत्समिधस्तनूनपातमिडोबर्हिर्यजति
।उभावाग्नेयावाज्यभागौस्यातां। अनाज्यभागोभवतीत्याहुः। य
दुभावाग्नेयावृत्रंचावितिं। अग्नयेपवमानायोत्तरस्यात्। यत्पवमा
नाय। तेनाज्यभागः। तेनसौम्यः। अनुधेन्वत्याग्नेयस्याज्यभागस्यपु

रोनुवाक्याभवति॥३॥ यथासुहंबोधयति। ताहगेवतत्। अग्निर्व्यं
क्ताःपत्नीसंयाजानामर्चःस्युः। तेनाग्नेयंसर्वंभवति। एकधातेज
स्विनींदेवतामुपैतीत्याकुः। सैनमीश्वराप्रदहइति। नेतिब्रूयात्। प्र
जननंवाअग्निः। प्रजननमेवोपैतीति। कृतयजुःसंभृतसंभारइत्या
कुः॥४॥ नसंभृत्याःसंभाराः। नयजुःकार्यमिति। अथोखलुसंभृत्या
एवसंभाराः। कार्यंयजुः। पुनराधेयस्यसमृध्यै। तेनोपांशुप्रचरति
। एव्यइववाएषः। यत्पुनराधेयः। यथोपांशुनष्टमिच्छति॥५॥ ताहगे

ा.ग्र.
४२

वतत।उच्चैः स्विष्टकृतमुत्सृजति। यथानुष्टुत्वाह्वायमिति। तादृगे
वतत।एकधा तेजस्विनौ देवतामुपेतीत्याकुः। सेनमीश्वराप्रदहइ
ति। तत्र यानो पैति। प्रयाजानूयाजेषु वविभक्तीः कुर्यात्। यथापूर्वमा
ज्यभागौ स्याताम्। एवं पत्नीसंयाजाः॥६॥ तद्वैश्वानरवत्सुजनंनवत्तर
मुपेतीति। तदाहुः। यद्द्वा एतत्। आग्नेयं वा एतत्क्रियतइति। नेति
ब्रुयात्। अग्निं प्रथमं विभक्तीनां यजति। अग्निमुत्तमं पत्नीसंयाजानां
। तेनाग्नेयं। तेन समर्द्धं क्रियतइति॥७॥ अरुंधते वतन्न वतिसंभृत

४३

संभार इत्योकुरिछति पत्नीसंयाजानवेंच ॥ १ ॥ देवा वै यथादर्शं यज्ञा
नाहरंत। योग्निष्टोमं। य उक्थ्यं। योतिरात्रं। ते सहैव सर्वे वाजपेयमपश्य
न्। ते। अन्योन्यस्मै नातिष्ठंत। अहमनेन यजा इति। ते ब्रुवन्। आजिम
स्य धावामेति ॥ १ ॥ तस्मिंनाजिमधावन्। तं बृहस्पतिरुदजयत्। तेनाय
जत। स स्वाराज्यमगच्छत्। तमिंद्रोब्रवीत्। मामनेन याजयेति। तेनें
द्रमयाजयत्। सोग्रं देवतानां पर्यैत्। अगच्छत्स्वाराज्यं। अतिष्ठंतास्मै
ज्यैष्ठ्याय ॥ २ ॥ य एवं विद्वान्वाजपेयेन यजते। गच्छति स्वाराज्यं। अग्रं

समानानां पर्येति। तिष्ठंते स्वे ज्यैष्ठ्याय। स वा एष ब्राह्मणस्यैव राजन्यस्य
च यज्ञः। तं वा एतं वाजपेय इत्याचक्षते। वाजाप्यो वा एषः। वाजं ह्येतेन देवा
ऐप्सन्। सोमो वै वाजपेयः। यो वै सोमं वाजपेयं वेद॥३॥ वाज्येवैनं पी
त्वा भवति। आस्य वाजी जायते। अन्नं वै वाजपेयः। य एवं वेद। अत्त्यन्नं
।आस्यान्नादो जायते। ब्रह्म वै वाजपेयः। य एवं वेद। अत्ति ब्रह्मणान्नं।
आस्य ब्रह्मा जायते॥४॥ वाग्वै वाजस्य प्रसवः। य एवं वेद। करोति वाचा
वीर्यं। ऐनं वाचा गच्छति। अपिवतीं वाचं वदति। प्रजापतिर्देवेभ्यो यज्ञा

न्यादित्यात् । स आत्मन्वाजपेयमधत्त । तं देवा अब्रुवन् । एष वा वयुक्त
ः । यद्वाजपेयः ॥ ५ ॥ अपि वै नोऽत्रास्त्विति । तेभ्य एता उज्जितीः प्रायच्छ
त् । ता वा एता उज्जितय इत्याचक्षते । यत्तस्य सर्वत्वाय । देवतानाम
निर्भागाय । देवा वै ब्रह्मणश्चान्नं तस्य चुरामन्नमपाघ्नन् । यद्ब्रह्मणः
शमलमासीत् । सा गाथा नाराशंस्यभवत् । यदन्नस्य । सा सुरा ॥ ६ ॥
तस्माज्जायतश्चमत्तस्य चुनत्रतिगृह्यं । यत्प्रतिगृह्णीयात् । शमलं प्र
तिगृह्णीयात् । सर्व्वा वा एतस्य वाचोऽवरुद्धाः । यो वाजपेययाजी । याह

थिव्यां याग्नौ यारथंतरे। यांतरिक्षे या वायौ या वामदेव्ये। या दिवि यादि
त्ये या बृहति। याप्सु यौषधीषु या वनस्पतिषु। तस्माद्वाजपेययाज्यार्त्वि
जीनः। सर्वा ह्यस्य वाचोवरुद्धाः॥७॥ धा वा मेति ज्येष्ठ्यायु वेदं ब्रह्माजं
यते वाजपेयः सुरार्त्विजीनं रकंच॥२॥ देवा वै यदन्यैर्ग्रहैर्यज्ञस्य ना
वारुंधत। तदतिग्राह्यैरतिगृह्यावारुंधत। तदतिग्राह्याणामतिग्राह्य
त्वं। यदतिग्राह्या गृह्यंते। यदेवान्यैर्ग्रहैर्यज्ञस्य नावरुंधे। तदेवैतैरति
गृह्यावरुंधे। पंच गृह्यंते। पांक्तो यज्ञः। यावानेव यज्ञः। तमाप्त्वावरुंधे

॥१॥ सर्वशीर्ब्राह्मभवन्ति। एकधैव यजमान इन्द्रियं दधाति। स प्रह्व इन्द्राग्नी प्रजा

पत्या गृहा गृह्यन्ते। स प्रह्व इन्द्र प्रजापतिः प्रजापतेरास्ये। एकं युञ्चरिन्द्र

ति। एकधैव यजमाने वीर्यं दधाति। सोमग्रहाः स्वर्गसुराग्रहाः स्वर्ग

ह्लाति। एतद्वै देवानां परमत्वं मन्नं। यत्सोमः॥२॥ एतन्मनुष्याणां। यत्सु

रा। परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्धे। सोमग्रहाशेह्ला

ति। ब्रह्मणो वा एतत्तेजः। यत्सोमः। ब्रह्मण एव तेजसा तेजो यजमा

ने दधाति। सुराग्रहान्गृह्लाति। अन्नस्य वा एतच्छमलं। यत्सुरा॥३॥

ब्रा. ख.
४५

अन्तस्थे वरा मंसेनुरा मंस्तुं यजमाना ह पहंति। सोमग्रहाꣳश्चैर्गृह्णाति
। पुमान्वै सोमः। स्त्री सुरा। तन्मिथुनं। मिथुनमेवास्य तद्यज्ञे करोति प्रज
ननाय। आत्मानमेव सोमग्रहैः स्पृणोति। जायाꣳ सुराग्रहैः। तस्माद्वाज
पेययाज्यमुष्मिंल्लोके स्त्रियꣳ संभवति। वाजपेयाभिजितꣳ ह्यस्य। ५। पू
र्वे सोमग्रहा गृह्यन्ते। अपरे सुराग्रहाः। पुरोक्षꣳ सोमग्रहान्त्सादयति। प
श्चादक्षꣳ सुराग्रहान्। पाप्मवस्यसस्य विधृत्यै। एष वै यजमानः। य
त्सोमः। अन्नꣳ सुरा। सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति। अ

श्च

५।

न्नाद्येनैवैनं व्यतिषजति ॥५॥ संपृचस्व सं मा भद्रेण पृङ्ग्धीत्याह। अ
न्नं वै भद्रम्। अन्नाद्येनैवैनꣳ सꣳसृजति। अन्नस्य वा एतच्छमलम्। यत्सु
रा। पाप्मा वै खलु वै शमलम्। पाप्मना वा एनमेतच्छमलेन व्यतिषजति
। यत्सोमग्रहाꣳश्च सुराग्रहाꣳश्च व्यतिषजति। विपृचस्व वि मा पाप्म
ना पृङ्ग्धीत्याह। पाप्मनैवैनꣳ शमलेन व्यावर्तयति ॥६॥ तस्माद्वाजपे
ययाजी पूतो मेध्यो दक्षिण्यः। प्राङुद्द्रवति सोमग्रहैः। अमुमेव तै
र्लोकमभिजयति। प्रत्यङ् सुराग्रहैः। इममेव तैर्लोकमभिजयति
य

।प्रतितिष्ठंति सोमग्रहैः॥ यावदेव सत्यं। तेन सूयते। वाजसृद्भ्यः सुरा
ग्रहान्हरंति। अनृतेनैव विशꣳ सꣳसृजति। हिरण्यपात्रं मधोः पू
र्णं ददाति। मधव्योसानीति। एकधा ब्रह्मण उपहरति। एकधैव यज
मान आयुस्तेजो दधाति॥७॥ आस्वा वरुंधे सोमग्रहैः। रामलं यत्सुराग्रहै
स्यैनं व्यतिषजति व्यावर्त्तयति सृजति चत्वारिंच॥८॥ ब्रह्मवादिनो
वदंति। नाग्निष्टोमो नोक्थ्यः। न षोडशी नातिरात्रः। अथ कस्माद्वाज
पेये सर्वे यज्ञक्रतवो वरुध्यंत इति। पस्तुभिरिति ब्रूयात्। आग्नेयं प

शुमालंभते। अग्निष्टोममेवतेनावरुंधे। ऐंद्राग्नेनोक्थ्यं। ऐंद्रेण षोड
शिनस्तोत्रं। सारस्वत्यातिरात्रं॥ ९॥ मारुत्या बृहत स्तोत्रं। एतावंतो
वैयज्ञक्रतवः। तान्पशुभिरेवावरुंधे। आत्मानमेवस्पृणो त्यग्निष्टो
मेन। प्राणापानावुक्थ्येन। वीर्यं षोडशिना स्तोत्रेण। वाचमतिरात्रे
ण। प्रजां बृहत स्तोत्रेण। इममेवलोकमभिजयत्यग्निष्टोमेन। अंत
रिक्षमुक्थ्येन॥ १०॥ सुवर्गंलोकं षोडशिना स्तोत्रेण। देवयानानेव
पथ आरोहत्यतिरात्रेण। नाकं रोहति बृहत स्तोत्रेण। तेजएवात्मं

ा·प्र·
४७

न्धत्तआग्नेयेनपशुना।ओजोबलमैंद्राग्नेन।इंद्रियमैंद्रेण।वा
चꣳसारस्वत्या।उभावेवदेवलोकंचमनुष्यलोकंचाभिजयतिमा
रुत्यावशया।सप्तदशप्राजापत्यान्पशूनालभते।सप्तदशःप्र
जापतिः॥३॥प्रजापतेराप्त्यै।श्यामाएकरूपाभवंति।एवमिवहि
प्रजापतिःसमृद्ध्यै।तान्पर्यग्निकृतानुत्सृजति।मरुतोयत्तवाजि
घांꣳसन्प्रजापतेः।तेभ्यएतांमारुतींवशामालभत।तयैवैनान
शमयत।मारुत्याप्रचर्य।एतान्त्संतर्पयेत।मरुतएवशमयित्वा

४९

॥४॥ एतैः प्रचरति। यज्ञस्याघातायै। एककपालाव् पाजुह्नोति। एकदेवत्या हि। एते। अथो एकधैव यजमाने वीर्यं दधाति। नैवारेण सप्तदशशरावेण। एतद्धि प्रचरति। एतत्सुरोडाशानाऽघे ते। अथो पशूनामेव छिद्रमपि दधाति। सारस्वत्योत्तमया प्रचरति। वाग्वै सरस्वती। तस्मात्प्राणानां वागुत्तमा। अथो प्रजापतावेव यज्ञं प्रतिष्ठापयति। प्रजापतिर्हि वाक्। अपन्नदती भवति। तस्मान्मनुष्याः सर्वां वाचं वदन्ति॥५॥ अतिरात्रमन्तरिक्षमुक्थ्येन प्रजापतिः सामयित्वोत्तमया प्रचरति षट् च॥

॥४॥ सावित्रं जुहोति कर्मणःकर्मणः पुरस्तात्। कस्तद्वेदेत्याहुः। यद्वाजपेयस्य पूर्वं यदपरमिति। सवितृप्रसूत एव यथापूर्वं कर्माणि करोति। सर्वेनेसर्वने जुहोति। आक्रमणमेव तत्सेतुं यजमानः कुरुते। सुवर्गस्य लोकस्य समष्ट्यै। वाचस्पतिर्वाचं मद्य स्वदाति न इत्याह। वाग्वै देवानां पुराऽन्नमासीत्। वाचमेवास्मा अन्नꣳ स्वदयति॥१॥ इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा न पाहीत्याह॥ ... वाजस्य नु प्रसवे मातरं महीमित्याह। यच्चैवेयम्। यच्चास्यामधि। तदेवावरुन्धे। अथो तस्मि

त्वेवोभयेऽभिषिच्यते। अप्स्वंतरमृतमप्सु भेषजमित्यश्वमभ्यवनयति
।अप्सु वा अश्वस्य तृतीयं प्रविष्टं। तदेनु वेनन्त्व व[illegible]वते। यदप्सुप
त्यभ्यवनयति॥२॥ यद्वेवास्याप्सु प्रविष्टं। तदेवावरुंधे। वृकु वा अश्वोमि
ध्यमुपगच्छति। यदप्सुपत्यभ्यवनयति। मेध्योन्नेवैनान्करोति। वायुर्वा
त्वामनुवर्त्त्वित्याह। एता वा एतं देवता अग्रे अश्वमयुंजन्। ताभिरे
वैनान्युनक्ति। सवस्योज्जित्यै। यजुषा युनक्ति व्यावृत्त्यै॥३॥ अपान्न
पाहाप्सुहेमृन्नितिसंमार्ष्टि। मेध्यानेवैनान्करोति। अथोस्तौत्येवैना

नाजिꣳ सरिष्यतः। विष्णुक्रमान्क्रमते। विष्णुरेव भूत्वेमांल्लोकानभि
जयति। वैष्णुर्देवो वै रथः। अंकौ न्यंकावभितो रथं यावित्याह। या एव
देवता रथे प्रतिष्ठाः। ताभ्य एव नमस्करोति। आत्मनो नार्त्यै। अजरामर
यं भावुको स्य रथो भवति। य एवं वेद॥४॥ स्वदयति पल्पूलयति व्या
हेत्या अनार्त्यै देवे॥५॥ देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाज
जिता वाजं जेषमित्याह। सवितृप्रसूत एव ब्रह्मणा वाजमुज्जयति
। देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ

रुहेयुमित्याह। सुवित्तंचैस्तत एव ब्रह्मणा वर्षिष्ठं नाकंरोहति। चा
त्वाले रथचक्रं निमितंरोहति। अतो वा अंगिरस उत्तमाः सुवर्गं
लोकमायन्। साक्षादेव यजमानः सुवर्गं लोकमेति। आवेष्टयति।
वज्रो वै रथः। वज्रेणैव दिशोभिजयति॥१॥ वाजिनांसामगायते।
अन्नं वै वाजः। अन्नमेवावरुंधे। वाचो वै देवेभ्यो पाक्रामत्। तद्व
नस्पतीन्प्राविशत्। सैषा वाग्वनस्पतिषु वदति। या दुंदुभौ। तस्माद्दुं
दुभिः सर्वां वाचोतिवदति। दुंदुभीन्त्समाघ्नंति। परमा वा एषा वाक्॥र

ब्र.
५०

॥ याउँ डुभौ। परमयैववाचावरुंवाचमवरुंधे। अथोवाचएववर्ष्मयज
मानोवरुंधे। इंद्रोयुवाचंवदतेंद्रं वाजंजापयतेंद्रोवाजमजयिदित्याह
। एषवाएतद्दँद्रः॥ योयजते। यजमानएववाजमुज्जयति। सप्तदश
प्रव्याधानाजिंधावंति। सप्तदशः स्तोत्रंभवति। सप्तदशासप्तदश
दीयंते॥ ३॥ सप्तदशः प्रजापतिः॥ प्रजापतेराप्त्यै। अर्वासिसप्तिरसि
वाज्यसीत्याह। अग्निर्वाअर्वा। वायुःसप्तिः। आदित्योवाजी॥ एताभिरे
वास्मैदेवताभिर्देवरथंयुनक्ति। पृष्टिवाहिनंयुनक्ति। पृष्टिवाहीवै

हैवर्यः। देवरथमेवास्मै युनक्ति॥४॥ वाजिनो वाजं धावत काष्ठां
गच्छतेत्याह। सुवर्गो वै लोकः काष्ठा। सुवर्गमेव लोकं यन्ति। सुव
र्गं वा एते लोकं यन्ति। य आजिं धावन्ति। प्राञ्चो धावन्ति। प्राङिव हि सु
वर्गो लोकः। चतसृभिरनुमन्त्रयते। चत्वारि छन्दांसि। छन्दोभिरेवै
नान्त्सुवर्गं लोकं गमयति॥५॥ प्र वा एतेऽस्माल्लोकाच्च्यवन्ते। य आजिं
धावन्ति। उदञ्च आवर्तन्ते। अस्मादेव तेन लोकान्न यन्ति। रथविमोच
नीयं जुहोति प्रतिष्ठित्यै। आ मा वाजस्य प्रसवो जगम्यादित्याह। अन्नं स्प

वै वाजः। अन्नमेवावरुंधे। यं यं लोकं वा एत उज्जयंति। य आजिं धावंति
॥६॥ कृष्णलं कृष्णलं वाजसृद्भ्यः प्रयच्छति। यमेव ते वाजं लोकमुज्जयं
ति। तं परिक्रीयावरुंधे। एकधा ब्रह्मण उपहरति। एकधैव यजमाने
वीर्यं दधाति। देवा वा ओषधीष्वाजिमयुः। ता बृहस्पतिरुदजयत्। स
नीवारान्निरवृणीत। तन्नीवाराणां नीवारत्वं। नैवारश्चरुर्भवति॥७॥
॥एतद्वै देवानां परममन्नं। यन्नीवाराः। परमेणैवास्मा अन्नाद्येनाव
रमन्नाद्यमवरुंधे। सप्तदशशरावो भवति। सप्तदशः प्रजापतिः। प्र

जापते राष्ट्रे। क्षीरे भवति। ऊर्जमेवास्मिन्दधाति। सर्पिष्वान्भवति मेध्यु
त्वाय। बार्हस्पत्यो वा एष देवतया॥८॥ यो वाजपेयेन यजते। बार्हस्पत्य
एष चरुः। अश्वान्सरिष्यतः सस्तुषश्वावघ्रापयति। यमेव ते वाजं लो
कमुज्जयंति। तमेवावरुंधे। अजीजिपत वनस्पतय इंद्रं वाजं विमुच्य
ध्वमिति। दुंदुभीन्विमुंचति। यमेव ते वाजं लोकमिंद्रियं दुंदुभय उज्ज
यंति। तमेवावरुंधे॥९॥ अभिजेयत्ति वा एषा वाग्धीयंते स्मेयुनक्ति गम
यति। य आजिं धावंति भवति देवतया श्लोकश्च॥१०॥ तार्प्यं यजमानं परि

धापयति। यज्ञो वै तार्प्यं। यज्ञेनैवैनꣳ समर्द्धयति। दर्भमयं परिधापयति
। पवित्रं वै दर्भाः। पुनात्येवैनं। वाजं वा एषोऽवरुरुत्सते। यो वाजपेयेन
यजते। ओषधयः खलु वै वाजः। यद्दर्भमयं परिधापयति॥१॥ वाजस्या
वरुध्यै। जाय एहि सुवो रोहावेत्याह। पत्निया एवैष यज्ञस्यान्वारंभो
नवच्छित्त्यै। सप्तदशारत्निर्यूपो भवति। सप्तदशः प्रजापतिः। प्रजाप
तेराप्त्यै। तूपरश्चतुरश्रिर्भवति। गोधूमं चषालं। न वा एते व्रीहयो न
यवाः। यद्गोधूमाः॥२॥ एवमिव हि प्रजापतिः समृध्यै। अथो अमुमेवा

स्मै लोकमन्नवंतं करोति। वासोभिर्वेष्टयति। एष वै यजमानः। यद्यूप

ः। सर्वदेवत्यं वासः। सर्वाभिरेवैनं देवताभिः समर्द्धयति। अथो आक्र

मणमेव तत्सेतुं यजमानः कुरुते। सुवर्गस्य लोकस्य समष्ट्यै। द्वादश

वाजप्रसवीयानि जुहोति। ३। द्वादश मासाः संवत्सरः। संवत्सर

मेव प्रीणाति। अथो संवत्सरमेवास्मा उपदधाति। सुवर्गस्य लोकस्य

समष्ट्यै। दशभिः कल्पै रोहति। नव वै पुरुषे प्राणाः। नाभिर्दशमी।

प्राणानेव यथास्थानं कल्पयित्वा। सुवर्गं लोकमेति। एतावद्वै पुरुष

स्वस्तं॥४॥ यावत्प्राणाः। यावदेवास्यास्ति। तेन सह सुवर्गं लोकमेति
।सुवर्देवां॒ अगन्मेत्याह। सुवर्गमेव लोकमेति। अमृता अभूमेत्याह
।अमृतमिव हि सुवर्गो लोकः। प्रजापतेः प्रजा अभूमेत्याह। प्राजाप
त्यो वा अयं लोकः। अस्मादेव तेन लोकान्नैति॥५॥ सम॒हं प्रजया सं
मया प्रजेत्याह। आशिषमेवैतामाशास्ते। आसपुटैर्घ्नंति। अन्नं वा
इयं। अन्नाद्येनैवैनं॒ समर्द्धयंति। ऊषैर्घ्नंति। एते हि साक्षादन्नं। य
दूषाः। साक्षादेवैनमन्नाद्येन समर्द्धयंति। पुरस्तात्प्रत्यंचं घ्नंति॥६॥

पुरस्ताद्धिरण्यं प्रतीचीनमन्नमद्यते। शीर्षतो घ्नन्ति। शीर्षतो ह्यन्नमद्यते।
दिग्भ्यो घ्नन्ति। दिग्भ्य एवास्मा अन्नाद्यमवरुन्धते। ईश्वरो वा एष परां
ङ् प्रदघः। यो यूपꣳ रोहति। हिरण्यमध्यवरोहति। अमृतं वै हिरण्यं
। अमृतꣳ सुवर्गो लोकः॥ ७॥ अमृत एव सुवर्गे लोके प्रतितिष्ठति।
शतमानं भवति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रति
तिष्ठति। पुष्ट्यै वा एतद्रूपं। यदजा। त्रिः संवत्सरस्यान्यान्प्रसूय परि
प्रजायते। बस्ताजिनमध्यवरोहति। पुष्टिमेव प्रजननं प्रतितिष्ठ

ति॥ ॥ परिधापयति॥ गोधूमाञ्जुहोति स्वनैति सुत्यंचं घ्नति लोको नवंच
॥७॥ सप्तान्नहोमाञ्जुहोति। सप्त वा अन्नानि। यावंत्येवान्नानि। तान्ये
वावरुंधे। सप्त ग्राम्या ओषधयः। सप्तारण्याः। उभयीषामवरुध्यै। अ
न्नस्यान्नस्य जुहोति। अन्नस्यान्नस्यावरुध्यै। यद्वाजपेययाज्यनवरु
द्धस्याश्नीयात्॥१॥ अवरुद्धेन व्यृध्येत। सर्वस्य समवदाय जुहोति। अ
नवरुद्धस्यावरुध्यै। औदुंबरेण स्रुवेण जुहोति। ऊर्ग्वा अन्नमुदुंब
रः। ऊर्ज एवान्नाद्यस्यावरुध्यै। देवस्य त्वा सवितुः प्रसव इत्याह।

सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरभिषिंचति। अन्नस्यान्नस्या
भिषिंचति। अन्नस्यान्नस्यावरुध्यै ॥२॥ पुरस्तात्प्रत्यंचमभिषिंचति
। पुरस्ताद्धि प्रतीचीनमन्नमद्यते। शीर्षतोऽभिषिंचति। शीर्षतो ह्यन्नम
द्यते। आमुखादन्ववस्रावयति। मुखत एवास्मा अन्नाद्यं दधाति। अग्ने
स्त्वा साम्राज्येनाभिषिंचामीत्याह। एष वा अग्नेः सवः। तेनैवैनमभिषिं
चति। इंद्रस्य त्वा साम्राज्येनाभिषिंचामीत्याह ॥३॥ इंद्रियमेवास्मिन्ने
तेन दधाति। बृहस्पतेस्त्वा साम्राज्येनाभिषिंचामीत्याह। ब्रह्म वै देवा

नांबृहस्पतिः। ब्रह्मणैवैनमभिषिंचति। सोमग्रहांश्चावहानीयानि
चर्त्विग्भ्यउपहरंति। अमुमेवतैलोकमन्नवंतंकरोति। सुराग्रहांश्चा
नवहानीयानिचवाजसृद्भ्यः। इममेवतैलोकमन्नवंतंकरोति। अथो
उभयीष्वेवाभिषिच्यते। विमाथंकुर्वतेवाजसृतः॥४॥ इंद्रियस्याव
रुध्यै। अनिरुक्ताभिःप्रातःसवनेस्तुवते। अनिरुक्तःप्रजापतिः।
प्रजापतेराप्त्यै। वाजवतीभिर्माध्यंदिने। अन्नंवैवाजः। अन्नमेवाव
रुंधे। शिपिविष्टवतीभिस्तृतीयसवने। यज्ञोवैविष्णुः। पशवःशिपिः

।यज्ञ एव पुष्टिषु प्रतितिष्ठति। ब्रह्महंत्वै भवति। अंतमेवैनꣳ श्रीयै
गमयति॥५॥ अग्नीयाहं नस्यानुस्यावरुध्याइंद्रस्य त्वासाम्राज्येना
भिषिंचामीत्याह वाजस्तृतः शिपिस्त्राणि च॥६॥ नृषदं त्वेत्याह। प्र
जा वै नृनः। प्रजानामेवैतेन सूयते। द्रुषदमीत्याह। वनस्पतयो वै द्रु
। वनस्पतीनामेवैतेन सूयते। भुवनसदमित्याह। यद्दा वै वसीया
भवति। भुवनमगन्निति वै तमाहुः। भुवनमेवैतेन गच्छति॥७॥
अप्सुषदं त्वा घृतसदमित्याह। अपामेवैतेन घृतस्य सूयते। व्योम

स हृमित्याह। यद्वावैवसीयान्भवति। व्योमागन्निति वै तमाहुः। व्योमै
वैतेनगछंति। पृथिविविषद्वत्वांतरिक्षसदमित्याह। एषामेवैतेनलो
कानां स्तृयते। तस्माद्वाजपेययाजी न कंचन प्रत्यवरोहति। अपी
व्रहिदेवतानां स्तृयते॥२॥ नाकसहृमित्याह। यद्वावैवसीयान्भव
ति। नाकमगन्निति वै तमाहुः। नाकमेवैतेनगछति। येग्रहाः पंचज
नीना इत्याह। पंचजनानामेवैतेनस्तृयते। अपां रसमुद्वयसमित्या
ह। अपामेवैतेनरसंस्पृणुते। सूर्यरश्मिं समाभृतमित्याहसधु


कृत्वाय॥४॥ गच्छति स्वयत्तेन वंच॥५॥ इंद्रो वृत्रं हत्वा। असुरान्प
राभाव्य। सोमामावास्यां हत्वा गच्छत्। ते पितरः पूर्वेद्युरागच्छन्। पितॄ
न्यज्ञो गच्छत्। तं देवाः पुनरयाचंत। तमेभ्यो न पुनरददुः। ते ब्रुव
न्वरं वृणामहै। अथ वः पुनर्दास्यामः। अस्मभ्यमेव पूर्वेद्युः क्रियाता
इति॥६॥ तमेभ्यः पुनरददुः। तस्मात्पितृभ्यः पूर्वेद्युः क्रियते। यत्पि
तृभ्यः पूर्वेद्युः करोति। पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनु
ते। सोमाय पितृपीताय स्वधा नम इत्याह। पितुरेवाधि सोमपीथम

ब्रा॰ पृ॰
५७

वं रुंधे । न हि प्रिताप्रमीयमाणआरेषसोमपीयइति । इंद्रियं वै सोमपीथः । इंद्रियमेव सोमपीथमवरुंधे । तेनैंद्रियेण द्वितीयां जायामभ्यश्नुते ॥ २ ॥ एतद्वै ब्राह्मणं पुरा वाजश्रवसा विद्वामक्रन् । तस्मात्ते द्वे द्वे जाये अभ्याक्षत । य एवं वेद । अभि द्वितीयां जायामश्नुते । अग्नये कव्यवाहनाय स्वधा नम इत्याह । य एव पितृणामग्निः । तं प्रीणाति । तिस्र आहुतीर्जुहोति । त्रिर्निदधाति । षट् संपद्यंते ॥ ३ ॥ षड्वा ऋतवः । ऋतूनेव प्रीणाति । तूष्णीं मेक्षणमादधा

ति। अस्ति वा हि षष्ठ ऋतुर्न वा। देवान्वै पितॄन्प्रीतान्। मनुष्याः पितरोऽनु
प्रपिपते। तिस्र आहुतीर्जुहोति। त्रिर्निदधाति। षट्संपद्यन्ते। षड्वा ऋत
वः॥४॥ ऋतवः खलु वै देवाः पितरः। ऋतूनेव देवान्पितॄन्प्रीणाति। ता
न्प्रीतान्। मनुष्याः पितरोऽनु प्रपिपते। सकृदाच्छिन्नं बर्हिर्भवति। सकृ
दिव हि पितरः। त्रिर्निदधाति। तृतीये वा इतो लोके पितरः। तानेव प्री
णाति। पराङावर्तते॥५॥ ह्रीका हि पितरः। ओष्मणो व्यावृत उपास्ते
। उष्मभागा हि पितरः। ब्रह्मवादिनो वदन्ति। प्राश्यां३ न प्राश्या३मि

ति। यस्त्रोस्त्रीयात्। जन्यमन्त्रमघात्। प्रमायुकः स्यात्। यन्न त्रोस्त्रीस्यात्
। अहं चिस्यात्॥६॥ पितृभ्य आवृश्च्येत। अवघ्रेयमेव। तन्नेव त्राति
तन्नेव त्रातितं। वीरं वा वै पितरः प्रयंतो हरंति। वीरं वा ह हरति। हृत्वा छि
नत्ति। हरणभागा हि पितरः। पितृन्नेव निरवदयते। उत्तसूआयुषी
लोमछिंदीत। पितृणां ह्येतर्हि नेदीयः॥७॥ नमस्करोति। नमस्का
रो हि पितृणां। नमो वः पितरो रसाय। नमो वः पितरः शुष्माय। नमो वः पि
तरो जीवाय। नमो वः पितरः स्वधायै। नमो वः पितरो मन्यवे। नमो वः पि

तरो घोराय। पितरो नमो वः। यएतस्मिंल्लोके स्थ॥ ६॥ युष्मांस्तेनु। येस्मि
न्लोके मां तेनु। यएतस्मिंल्लोके स्थ। यूयं तेषां वसिष्ठा भूयास्त। येस्मि
न्लोके अहं तेषां वसिष्ठो भूयासमित्याह। वसिष्ठः समानानां भवति
। यएवं विद्वान्पितृभ्यः करोति। एष वै मनुष्याणां यज्ञः॥ ९॥ देवानां वा इ
तरे यज्ञाः। तेन वा एतर्हि तल्लोके चरति। यत्पितृभ्यः करोति। स ईश्व
रः प्रमेतोः। प्राजापत्ययर्चा पुनरेति। यज्ञो वै प्रजापतिः। यज्ञेनैव स
ह पुनरेति। न प्रमायुको भवति। पितृलोके वा एतद्यजमानश्चरति

।यस्मितभ्यंः कुरोति।सईश्वर आर्त्तिमार्त्तोः।प्रजापतिस्त्वावैनंततउ
न्नेतुमर्हति।त्वोकुः।यस्त्वोजापत्ययुर्चापुनरैति।प्रजापतिरेवैनंतत
उन्नयति।नार्त्तिमार्छति यजमानः॥९॥इत्यस्मुते पच्यंते पर्यंते षड्वाक्र
तवोवर्त्तेतेहविस्यान्नेहि।यस्ययस्तोयजमानस्वरातियस्मितभ्यंःकुरो
तिपंचच॥१०॥देवासुराअग्निषोमयोर्देवावैयथादर्शोदेवावैयहस्मे
र्गेहैंव्रह्मवादिनोनाग्निहोमोनसावित्रंदेवस्याहंतापर्यंसहासंनेहो
मानुषहंत्वेंद्रोहृत्रंरुत्वाहरा॥१०॥देवासुराव्राज्येवैनंतस्मात्राज

पेयु याजी हि वस्याहं वाजस्यावरुध्या इंद्रियमेवास्मिन्नक्रीकाहिं पितर

: पंच षष्टिः ॥ ६५ ॥ ॥ हरिः ॐ मू ॥ ॥ उभये वा एते प्रजापतेरध्यस

ज्यंत। देवाश्चासुराश्च। तान्न व्यजानात्। इमेन्य इमेन्य इति। स देवान्

ॐ शुनेकरोत्। तानभ्यषुणोत्। तान्पवित्रेण पुनात्। तान्पुरस्तात्सु

वित्रस्य व्यगृह्णात्। ते ग्रहा अभवन्। तद्ग्रहाणां ग्रहत्वं। देवता वा

स्य ए ता यजमानस्य गृहे गृह्यंते। यद्ग्रहाः। विदुरेनं देवाः। यस्यैवं विदुष

ए ते ग्रहा गृह्यंते। एषा वै सोमस्याहुतिः। यदुपांशुः। सोमेन देवां॥

स्तेपर्याणीतिखलुवैसोमेनयजते।यदुपाꣳशुंजुहोति।सोमेनै
वतद्देवाꣳस्तेपर्यति।यद्ग्रहंजुहोति॥१॥देवाएवतद्देवान्गच्छति
।यच्चमसंजुहोति।तेनैवानुरूपेणयजमानःसुवर्गंलोकमेति।
किन्त्वेतदग्रआसीदित्याहुः।यत्पात्राणीति।इयंवाएतदग्रआसी
त्।मृन्मयानिवाएतान्यासन्।तेदेवानव्याहृतमगच्छन्।तएतानि
दारुमयाणिपात्राण्यपश्यन्।तान्यकुर्वत॥२॥तेवैतिव्याहृतम
गच्छन्।यद्दारुमयाणिपात्राणिभवंति।व्याहृतमेवतैर्यजमानोग

छति। यानि दारुमयाणि पात्राणि भवंति। अमुमेव तैर्लोकमभिजंय
ति। यानि मृन्मयानि। इममेव तैर्लोकमभिजयति। ब्रह्मवादिनो वदं
ति। कास्मात्सत्यात् स्थालीर्वायुव्याः सोमग्रहणारिति। देवा वै पृश्निमदुक्
न्॥४॥ तस्याएतेस्तना आसन्। इयं वै पृश्निः। तामादित्या आदित्ये
स्थाल्या चतुष्पदः पशूनदुक्षन्। यदादित्यस्थाली भवति। चतुष्प
द एव तया पशून्यजमान इमां दुहे। तामिंद्र उक्थ्य स्थाल्येंद्रियमदु
हत। यदुक्थ्य स्थाली भवति। इंद्रियमेव तया यजमान इमां दुहे। तां

आ॰ प्र॰
६१

विश्वेदेवा आग्रयणस्थाल्योर्जमदुक्रन्न् । यदाग्रयणस्थाली भवति ॥५
॥ऊर्जमेव तया यजमानऽमांडुहे । तां मनुष्यांडुवस्थाल्यासुरऽदुक्रन्न्
। यत्डुवस्थाली भवति । आयुरेव तया यजमानऽमांडुहे । स्थाल्या गृ
ह्णाति । वायव्येन जुहोति । तस्मादन्येन पात्रेण पशुं दुहंति । अन्येन
प्रतिगृह्णंति । अथो व्यावृतमेव तद्यजमानो गच्छति ॥६॥ गृह्णत्यग्र
हां जुहोत्यकुर्वता दुक्रन्नाग्रयणस्थाली भवति नव च ॥१॥ युवं सु
राममश्विना । नमुचावासुरे सचा । विपिपाना शुभस्पती । इंद्रं कर्मे

धृ
परशुन्
६१

त्वावतं।पुत्रमिवपितरावश्विनोभा।इंद्रावतंकर्मणादꣳसनाभिः।
यत्सुरामंव्यपिबः।शचीभिः।सरस्वतीत्वामघवन्नभीष्णक्।अहांव्य
ग्नेहविरास्येते।स्रुचीवघृतंचम्वीवसोमः॥१॥वाजसनिꣳरयिमस्मे
सुवीरं।प्रशस्तंधेहियशसंबृहंतं।यस्मिन्नश्वासऋषभासउक्षणः।
वशामेषाअवसृष्टासआहुताः।कीलालपेसोमपृष्ठायवेधसे।हृदा
मतिंजनयचारुमग्नये।नानाहिवांदेवहितꣳसदोमितं।मासꣳसृक्षा
थांपरमेव्योमन्।सुरात्वमसिशुष्मिणीसोमएषः।मामाहिꣳसीःस्वां

ा॰प्र॰
६२

योनिमाविशान्त॥२॥ यदत्त्वंशिशुः रसि नः सुतस्य। यदिन्द्रो अपिबच्छचीभिः। अहं तदस्य मनसा शिवेन। सोमः राजानमिह भक्षयामि। द्वे स्रुती अशृणवं पितॄणां। अहं देवानामुत मर्त्यानां। ताभ्यामिदं विश्वं भुवनं समेति। अंतरा पूर्वमपरं च केतुं। यस्ते देव वरुण गायत्रछंदाः पाशाः तं तएतेनावयजे॥३॥ यस्ते देव वरुण त्रिष्टुप्छंदाः पाशाः तं तएतेनावयजे। यस्ते देव वरुण जगतीछंदाः पाशाः। तं तएतेनावयजे। सोमो वा एतस्य राज्यमादत्ते। यो राजासन्राज्यो वा सोमेन य

६२

जं ते। देवसुवामेतानि हवींषि भवन्ति। एतावन्तो वै देवानां सवाः

। त एवास्मै सवान्प्रयच्छन्ति। त एनं पुनः सुवन्ते राज्याय। देवसूराजा

भवति॥४॥ सोमं आविन्नान्यं जेराज्यायैकं च॥५॥ उद्दस्याहे व्यदि

तिर्विश्वरूपी। आयुर्यज्ञपतावधात्। इन्द्राय रुण्वतीभागं॥ मित्राय

वरुणाय च। इयं वा अग्निहोत्री। इयं वा एतस्य निषीदति। यस्याग्नि

होत्री निषीदति। तामुत्थापयेत्। उद्दस्याहे व्यदितिरिति। इयं वै दे

व्यदितिः॥६॥ इमामेवास्मा उत्थापयति। आयुर्यज्ञपतावधादित्या

ह। आयुरेवास्मिन्दधाति। इंद्राय रुष्वती भागं मित्राय वरुणाय
चेत्याह। यथायजुरेवैतत्। अवर्तिं वा एषैतस्य पाप्मानं प्रतिख्या
युनिषीदति। यस्याग्निहोत्र्युपसृष्टा निषीदति। तां दुग्ध्वा ब्राह्मणा
य दद्यात्। यस्यान्नं नाद्यात्। अवर्तिमेवास्मिन्पाप्मानं प्रतिमुञ्च
ति॥२॥ दुग्ध्वा दद्याति। न ह्यहष्टा दक्षिणा दीयते। पृथिवी वा एत
स्य पयः प्रविशति। यस्याग्निहोत्रं दुह्यमानं स्कंदति। यद्दधदु
ग्धं पृथिवीमसक्त। यदोषधीरप्यसरत्। यदपः। पयो गृहेषु पयो

१ ओषधीयासु । पयो वत्सेषु पयो अस्तु तन्मयीत्याह । पय एवात्मन्गृहेषु पशु
षु धत्ते । अप उपसृजति ॥३॥ अग्निर्वै नदाश्नोति । यो वै यज्ञस्यार्त्तेनाना
र्त्तं संसृजति । उभे वै ते तर्ह्यार्छतः । आर्छति खलु वा एतदग्निहोत्रं य
दुह्यमानं स्कंदति । यदभिदुह्यात् । आर्त्तेनानार्त्तं यज्ञस्य संसृजेत् ।
तदेव यादृक्की होतव्यं । अथान्यां दुग्ध्वा पुनर्होतव्यं । अनार्त्तेनैवार्त्तं यज्ञ
स्य निष्करोति ॥४॥ यद्युद्धुतस्य स्कंदेत् । यत्ततो कुत्वा पुनरेयात् । यत्तं वि
छिंद्यात् । यत्र स्कंदेत् । तं निषद्य पुनर्गृह्णीयात् । यत्रैव स्कंदति । तत ए

ब्रा॰ प्र॰
६४

वैनुत्सृज्यश्रीणाति। तद्देव यादृक्कीदृक्क होतव्यं। अथान्यां दुग्ध्वा पुनर्हो
तव्यं। अनार्त्त्यै नैवार्त्तिं यज्ञस्य निष्करोति॥५॥ वि वा एतस्य यज्ञश्छिद्य
ते। यस्याग्निहोत्रेऽधिश्रिते श्वान्तराधावति। रुद्रः खलु वा एषः। यदग्नि
ः। यजामन्वत्यावर्त्तयेत्। रुद्राय पशूनपिदध्यात्। अपशुर्यजमान
ःस्यात्। यदपोऽन्वतिषिञ्चेत्। अनाद्यमग्नेरापः। अनाद्यमोभ्यामपि
दध्यात्। गार्हपत्याद्भस्माहाय। इदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहव
नीयाध्वꣳसयन्नुद्द्रवेत्। यज्ञो वै विष्णुः। यज्ञेनैव यज्ञꣳ संतनोति। भ

स्मिन्नापुरमपिवपतिरां स्यै ॥६॥ वेदेर्व्यहितिमुंचंति सजतिकरोतिक
रोत्याभ्यामपिदधात्पंचंच ॥२॥ निवाएतस्याहवनीयो गार्हपत्यंका
मयते। निगार्हपत्यआहवनीयं। यस्याग्निमनुद्धरंत्सूर्योभिनिम्रो
चति। दर्भेणहिरण्यंप्रबध्यपुरस्ताद्धरेत्। अथाग्निं। अथाग्निहोत्रं। य
द्धिरण्यंपुरस्ताद्धरति। ज्योतिर्वेहिरण्यं। ज्योतिरेवैनं पश्यन्नुद्धरति
। यद्दग्निं पूर्वंहरत्यथाग्निहोत्रं ॥ भागधेयेनैवैनं प्रणयति। ब्रा
ह्मणआर्षेयउद्धरेत्। ब्राह्मणोवैसर्वादेवताः। सर्वाभिरेवैनंदेवता

भिरुद्वराति। अग्निहोत्रमुपसाद्य तमितोरासीत। व्रतमेवद्वृतमनुम्रियते। अंतं वा एष आत्मनो गच्छति। यस्तां म्यति। अंतमेष यज्ञस्य गच्छति। यस्याग्निमनुद्धृतं सूर्यो भिनिम्रोचति॥२॥ पुनः समन्यं जुहोति। अंतेनैवांतं यज्ञस्य निष्करोति। वरुणो वा एतस्य यज्ञं गृह्णाति। यस्याग्निमनुद्धृतं सूर्यो भिनिम्रोचति। वारुणं चरुन्निर्वपेत्। तेनैव यज्ञं निष्क्रीणीते। नि वा एतस्याहवनीयो गार्हपत्यं कामयते। नि गार्हपत्य आहवनीयं। यस्याग्निमनुद्धृतं सूर्यो भ्युदेति। चतुर्गृहीतमाज्यं पुरस्ता

मो।

६६।

हरेत॥३॥अथाग्निं।अथाग्निहोत्रं।यदाज्यंपुरस्ताद्धरति।एतद्वाअ
ग्नेःप्रियंधाम।यदाज्यं।प्रियेणैवैनंधाम्नासमर्धयति।यद्दग्निंपूर्वंहर
त्यथाग्निहोत्रं।भागधेयेनैवैनंप्रवर्णयति।ब्राह्मणआर्षेयउद्धरेत।
ब्राह्मणोवैसर्वादेवताः॥४॥सर्वाभिरेवैनंदेवताभिरुद्धरति।पराची
वाएतस्मैव्युच्छंतीव्युच्छति।यस्याग्निमनुद्धृतंसूर्योभ्युदेति।उषाः
केतुनाजुषतां।यज्ञंदेवेभिरन्वितं।देवेभ्योमधुमत्तमंस्वाहेतिप्र
त्यङ्ङिषद्याज्येनजुहुयात्।प्रतीचीमेवास्मैविवासयति।अग्निहोत्र

ा॰ब्र॰
६६

सुपसाद्यातमितोरासीत। वृतमेवहृतमनुम्रियते। अंतं वा एष आत्मनो गच्छति॥५॥ यस्तां म्यति। अंतमेष यत्तस्य गच्छति। यस्याग्निमनुद्धृतं सूर्योभ्युदेति। पुनः समन्यंजुहोति। अंतेनैवांतं यत्तस्य निष्क्रीणाति। मित्रो वा एतस्य यत्तं गृह्णाति। यस्याग्निमनुद्धृतं सूर्योभ्युदेति। मैत्रं चरुं निर्वपेत्। तेनैव यत्तं निष्क्रीणाति। यस्याहवनीयेनुद्वाते गार्हपत्यमुद्वायेत्॥६॥ यदाहवनीयमनुद्वाप्य गार्हपत्यं मंथेत्। विछिंद्यात्। भ्रातृव्यमस्मै जनयेत्। यदेव यत्तस्य वास्तुमत्क्रियते। तद्

तु रुद्रो विचरति । यत्पूर्वमन्ववस्येत् । वास्तव्यमग्निमुपासीत । रुद्रो
स्य पशून्घातुकः स्यात् । आहवनीयमुद्वाप्य । गार्हपत्यं मंथेत ॥७॥
इतः प्रथमं जज्ञे अग्निः । स्वाद्योनेरधिजातवेदाः । स गायत्रिया त्रिष्टु
भा जगत्या । देवेभ्यो हव्यं वहतु प्रजानन्निति । छंदोभिरेवैनं स्वाद्यो
नेः प्रजनयति । गार्हपत्यं मंथति । गार्हपत्यं वा अन्वाहिताग्नेः पशव उ
पतिष्ठंते । स यदुद्वायति । तदनु पशवो पक्रामंति । इषे रय्यै रमस्व ॥८॥
॥ सहसे द्युम्नाय । ऊर्जे पत्यायेत्याह । पशवो वै रयिः । पशूनेवास्मै रम

यति। सारस्वतौ त्वोत्सौ समिंधातामित्याह। ऋक्सामे वै सारस्वतावुत्सौ
।ऋक्सामाभ्यामेवैनꣳ समिंधे। संम्राडसि विराडसीत्याह। रथंतरं वै
संम्राट्। बृहद्विराट्॥९॥ ताभ्यामेवैनꣳ समिंधे। वज्रो वै चक्रं। वज्रो
वा एतस्य यज्ञं विछिनत्ति। यस्यानो वा रथो वांतराग्नी याति। आहव
नीयमुद्वाप्य। गार्हपत्यादुद्धरेत्। यदग्ने पूर्वं प्रभृतं पदꣳ हि ते। सूर्य
स्य रश्मीनन्वाततान। तत्र रयिष्ठामनुसंभरैतां। सन्नः सृज सुमत्या वा
जवत्येति॥१०॥ पूर्वेणैवास्य यज्ञेन यज्ञमनुसंतनोति। त्वमग्ने सप्रथा

असीत्याह। अग्निः सर्वा देवताः। देवताभिरेव यज्ञꣳ संतनोति। अ

ग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्। अग्निमेव पथिकृतꣳ

ꣳ स्वेन भागधेयेनोपधावति। स एवैनं यज्ञियं पंथा मपिनयति। अ

प नड्वान्दक्षिणा। वही ह्येष समृद्ध्यै॥ ९॥ हरत्यथाग्निहोत्रं निर्मोचंति हरे दे

वता गच्छत्युद्घायेन्मंथेन्द्रमस्व बृहद्गिराडिति नवेच॥ ४॥ निर्वे पूर्वत्रो

णि निर्मोचंति दर्भेण यद्धिरण्यमग्निहोत्रं पुनर्वरुणो वारुणं निर्वा

एतस्याभ्युदेति चतुर्गृहीतमाज्यं पराज्यं परांच्छुषाः पुनर्मित्रो मे

ऐ० ब्रा० ६८

त्रेयस्याहवनीयेजुह्वतिगार्हपत्येन्वेद्धे॥ ॥यस्यत्रातःसवनेसोमोतिरि

च्यते।माध्यंदिनंसवनंकामयमानोभ्यतिरिच्यते।औद्धयत्तिमरुत्वा

मितिधयद्दतीषुकुर्वंति।हि नास्तिवैसंध्यधीतं।संधीवृखलुवाएतत्

।यत्सर्वंनस्यातिरिच्यते।यद्धयद्दतीषुकुर्वंति।संधेःसांत्यै।गायत्रं

सामभवतिपंचदशःस्तोमः।तेनैवप्रातःसवनान्नयंति॥१॥मरुत्व

तीषुकुर्वंति।तेनैवमाध्यंदिनात्सवनान्नयंति।होतुरुक्थमुपसमन्नयं

ते।होतान्नुशंसति।मध्यतएवयज्ञंसमादधाति।पस्यमाध्यंदिने

सर्वं नु सोमोतिरि च्यंते। आदित्यं तृतीयसवनं कामयमानोभ्यतिरि
च्यते। गौरिवीतं साम भवति। अतिरिक्तं वै गौरिवीतं। अतिरिक्तं य
त्सर्वं न स्यातिरिच्यंते॥२॥ अतिरिक्तस्य शांत्यै। बण्महाँ असि सू
र्येति कुर्वंति। यस्यैवादित्यस्य सर्वं न स्यकामेनातिरिच्यंते। तेनैवैनं
कामेन समर्द्धयंति। गौरिवीतं साम भवति। तेनैव माध्यंदिनात्सव
नादन्नयंति। सृग्वद्वरास्तोमः। तेनैव तृतीयासवनादन्नयंति। होतुश्च
मसमन्नयंते। होतारं सति॥३॥ मध्यत एव यज्ञं समादधा

ब्रा॰ प्र॰
६९

ति। यस्य तृतीयसवने सोमोऽतिरिच्येत। उक्थ्यं कुर्वीत। यस्योक्थ्येऽतिरिच्येत। अतिरात्रं कुर्वीत। यस्यातिरात्रेऽतिरिच्येत। तद्वै दुष्प्रज्ञानं। यज्ञमानं वा एतत्सुरा वै आसादयंति। बृहत्साम भवंति। बृहद्वा इमांल्लोकान्दाधार॥४॥ वाईताःपुनरावः। बृहद्वा ऐ आसमै पुनरन्दाधार। शिपिविष्टवतीः उकुर्वंति। शिपिविष्टो वै देवानां पुष्टं। पुष्टं वै नं समर्धयंति। होतुस्त्रसमसमन्तनयंते। होतानुवाशंसति। मध्यतएव यज्ञं समादधाति॥५॥ यंति सर्वं नस्यातिरिच्यते राशंसति दाधाराशो च॥५॥ एकैको वै जन

६
९
६

प्य

तीयामिंद्रः॥१॥एकं वा एतानिंद्र मभिसंसुनुतः॥ यो द्वौ संसुनुतः॥ प्र
जापतिर्वा एष वितायते। यद्यज्ञः॥ तस्य ग्रावाणो दंताः॥ अन्यतरं वा
एते संसुन्वतोर्निर्बप्सति। पूर्वेणो पसृत्यादेवता इत्याहुः॥ पूर्वोप
सृतस्य वै श्रेयान्भवति। एति वृत्याज्यानि भवंत्यभिजित्यै॥२॥ मरु
त्वतीः प्रतिपदः॥ मरुतो वै देवानामपराजितमायतनं। देवानामेवा
पराजित आयतने यतते। उभे बृहद्रथंतरे भवतः॥ इयं वाव रथंतरं
। असौ बृहत्। आभ्यामेवैनमंतरेति। वाचश्च मनसश्च। प्राणाच्चापा

आ॰ सु॰
७०

नान्तं। दिवश्च पृथिव्याश्च ॥२॥ सर्वस्माद्वित्त्वाद्वेष्यात्। अभिवर्त्तो ब्रह्मसा
मं भवति। सुवर्गस्य लोकस्याभिवृत्त्यै। अभिजिद्भवति। सुवर्गस्य लोक
स्याभिजित्यै। विश्वजिद्भवति। विश्वस्य जित्यै। यस्य भूयांसो यज्ञक्र
तव इत्याहुः। स देवतां वृङ्क्त इति। यद्यग्निष्टोमः सोमः परस्तात्स्यात् ॥
३॥ उक्थ्यं कुर्वीत। यद्युक्थ्यः स्यात्। अतिरात्रं कुर्वीत। यज्ञक्रतुभिरे
वास्य देवतां वृङ्क्ते। यो वै छन्दोभिरभिभवति। स सं सुन्वतोऽभिभव
ति। संवेशायत्वोपवेशाय त्वेत्याह। छन्दांसि वै संवेशउपवेशाः। छं

रोभिरेवास्य छंहाᳲस्यभिर्भवति। इष्टर्गो वा ऋत्विजामध्वर्युः ॥४॥ इष्टर्ग
ःखलु वै पूर्वोऽर्युः क्षीयते। प्राणापानौ मृत्योर्मा पातमित्याह। प्राणापान
योरेव श्रयते। प्राणापानौ मा मा हासिष्टमित्याह। नैनं पुरायुषः प्राणा
पानौ जहितः। आर्तिं वा एते नियंति। येषां दीक्षितानां प्रमीयते। तं यदेव
वर्जेयुः। क्रूरकृतामिवैषां लोकः स्यात्। आ हर दहेति ब्रूयात्॥५॥ तं द
क्षिणतो वेद्यै निधाय। सर्पराज्ञिया ऋग्भिः स्तुयुः। इयं वै सर्पतो राज्ञी।
अस्या एवैनं परिहरति। व्यर्धं तरित्याहुः। यत्स्तुतमनेनुशास्तमिति।

होता प्रथमः प्राचीनावीती मार्ज्जालीयं परीयात्। यामीरनुब्रुवन्। सर्प
राज्ञीनां कीर्तयेत्। उभयोरेवैनं लोकयोः परिददति॥६॥ अथो ध्रुवत्ये
वैनं। अथो न्येवास्मै ह्नुवते। त्रिः परियंति। त्रय इमे लोकाः। एभ्य एवैनं
लोकेभ्यो धुवते। त्रिः पुनः परियंति। षट् संपद्यंते। षड्वा ऋतवः। ऋतु
भिरेवैनं धुवते। अग्न आयूंषि पवस इति प्रतिपदं कुर्वीरन्। रथंत
रसामैषां सोमः स्यात्। आयुरेवात्मंदधते। अथो पाप्मानमेव विज
हतो यंति॥७॥ अभिजित्येष्टिव्याश्वस्याद्ध्वर्युर्ब्रूयाल्लोकयोः प

रिंहरतिकुर्वरं३रं५स्त्रीणिच॥६॥ असुर्यंवाएतस्माद्वर्णंकृत्वा। पुरावीवी
र्यमपक्रामंति। यस्यय़्पोविरोहति। त्वाष्ट्रंबंकुरूपमालभेत। त्वष्टा
वैरूपाणामीशे। यएवरूपाणामीशे। सोस्मिन्नस्मन्वीर्यंयच्छति। ना
स्मांत्पुरावीर्वीर्यमपक्रामंति। आर्तिंवाएतेनियंति। येषांदीक्षितानां
मग्निरुद्वायंति॥१॥ यदाहवनीयंमुद्वायेत। यत्तंमंथेत। विच्छिंद्यात्।
भ्रातृव्यमस्मैजनयेत्। यदाहवनीयंमुद्वायेत। आग्नीध्राउद्धरेत। य
दाग्नीध्रंमुद्वायेत। गार्हपत्याउद्धरेत। यदागार्हपत्यमुद्वायेत। अतएव

तनुवास्तं मर्दयति। गार्हपत्यं मंथति॥३॥ गार्हपत्यो वा अग्नेर्योनिः। स्वादेवैनं ३

ब्रा·प्र·
७२

वपुनर्मथेत्॥४॥ अत्र वाव सनिलयते। यत्र खलु वै निलीनमुत्तमं पश्यं

ति। तद्देनमिच्छंति। यस्माद्द्वारो रुहायेत्। तस्यारणी कुर्यात्। क्रुमुकमपि

कुर्यात्। एषा वा अग्नेः प्रिया तनूः। यत्क्रुमुकः। प्रिययैवैनं योनेर्जनय

ति। नास्य भ्रातृव्यं जनयति। यस्य सोममुपदस्येत्। सुवर्णं हिरण्यं

द्वेधा विछिद्य। ऋजीषेन्यद्धं धूनुयात्। जुहुयादन्यत्। सोममेवाभि

षुणोति। सोमं जुहोति। सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुद

क्रामत्॥५॥ तत्सुवर्णं हिरण्यमभवत्। यत्सुवर्णं हिरण्यं कुर्वंति ७:

।प्रियय्यैवैनंतत्तनुवासमर्दयंति।यस्याक्रीतंसोममपहरेयुः।क्रीणी
यादेव।सैवततःप्रायश्चित्तिः।यस्यक्रीतमपहरेयुः।आदाराश्चफा
ल्गुनानिचाभिषुणुयात्।गायत्रीयंसोममाहरत्।तस्ययोंशुःप
रापतत्।।५।।तआदाराअभवन्।इंद्रोवृत्रमहन्।तस्यवल्कःपराप
तत्।तानिफाल्गुनान्यभवन्।पुरावोवैफाल्गुनानि।पुरावुःसोमो
राजा।यद्यादाराश्चफाल्गुनानिचाभिषुणोति।सोममेवराजानमभि
भिषुणोति।सुतेनेप्रातःसवनेप्रीणीयात्।हधामध्यंदिने।।हानी

तमिश्रेणतृतीयसवने।अग्निष्टोमःसोमःस्याद्रथंतरसामा।यएवर्त्विजो
वृतास्युःतएनंयाजयेयुः।एकांगांदक्षिणांदद्यात्तेभ्यएव।पुनःसोमंक्री
णीयात्तायत्तेनैवतद्युक्तमिच्छति।सैवततःप्रायश्चित्तिः।सर्वाभ्योवाए
षदेवताभ्यःसर्वेभ्यःपृष्ठेभ्यआत्मानमागुरते।यःसत्रायागुरते।एता
वान्खलुवैपुरुषः।यावदस्यवित्तं।सर्ववेदसेनयजेत।सर्वपृष्ठोस्यसो
मःस्यात्।सर्वाभ्यएवदेवताभ्यःसर्वेभ्यःपृष्ठेभ्यआत्मानंनिष्क्रीणी
ते।।७।।उद्गायतिमंथेन्मंथत्यक्रामत्परापतन्मध्यंदिनआगुरतेपंच

च॥७॥पवमानः सुवर्जनः।पवित्रेण विचर्षणिः।यः पोता स पुनातु मा

।पुनन्तु मा देवजनाः।पुनन्तु मनवो धिया।पुनन्तु विश्व आयवः।जातवे

दः पवित्रवत्।पवित्रेण पुनाहि मा।शुक्रेण देव दीद्यत्।अग्ने क्रत्वा

क्रतूꣳरनु॥८॥यत्ते पवित्रमर्चिषि।अग्ने विततमन्तरा।ब्रह्म तेन पु

नीमहे।उभाभ्यां देव सवितः।पवित्रेण सवेन च।इदं ब्रह्म पुनीमहे

।वैश्वदेवी पुनती देव्यागात्।यस्यै बह्वीस्तनुवो वीतपृष्ठाः।तया म

ध दन्तः सधमाद्येषु।वयꣳस्याम पतयो रयीणाम्॥९॥वैश्वानरो रश्मिभिर्मा

पुनातु वातः प्राणेनेषिरो मयोभूः। द्यावापृथिवी पयसा पयोभिः। ऋता
वरी यज्ञिये मा पुनीतां। बृहद्भिः सवितस्तृभिः। वर्षिष्ठैर्देव मन्मभिः। अ
ग्ने दक्षैः पुनाहि मा। येन देवा अपुनत। येनापो दिव्यं कशः। तेन दिव्येन
ब्रह्मणा। ३। इदं ब्रह्म पुनीमहे। यः पावमानीरध्येति। ऋषिभिः संभृ
तं रसं। सर्वं स पूतमश्नाति स्वदितं मातरिश्वना। पावमानीर्यो अ
ध्येति। ऋषिभिः संभृतं रसं। तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधू
दकं। पावमानीः स्वस्त्ययनीः। ४। सुदुघा हि पयस्वतीः। ऋषिभिः सं

भृतोरसः॥ ब्राह्मणेषुमृतंहितं॥ पावमानीर्दिशंतुनः॥ इमंलोकम
थोअमुं॥ कामांत्समर्धयंतुनः॥ देवीर्देवैःसमाभृताः॥ पावमानीःस्व
स्त्ययनीः॥ सुदुघाहिघृतश्चुतः॥ ऋषिभिःसंभृतोरसः॥ ५॥ ब्राह्म
णेषुमृतंहितं॥ येनदेवाःपवित्रेण॥ आत्मानंपुनतेसदा॥ तेनस
हस्रधारेण॥ पावमान्यःपुनंतुमा॥ प्राजापत्यंपवित्रं॥ शतोद्यामं
हिरण्मयं॥ तेनब्रह्मविदोवयं॥ पूतंब्रह्मपुनीमहे॥ इंद्रःसुनीतीसह
मापुनातु॥ सोमःस्वस्त्यावरुणःसमीच्या॥ यमोराजाप्रमृणाभिःपुना

आ॰ ब्र॰
७५

तु मा। जात वेदो मो ऽर्जयन्त्या पुनातु॥६॥ अनु रयीणां ब्रह्मणा स्वस्य येनीः सुदुघा हि घृतश्चुतऋषिभिः संभृतो रसः पुनातु त्रीणि च॥८॥ ऋजा वै सत्रमासत तपस्तप्यमाना अजुकतीः॥ हे वा अपत्त्यं च मसंघृतस्य पूर्णं स्वधां। तमुपोदतिष्ठन्त मजुहवुः। ते नार्द्धमास ऊर्जमवोरुंधत। तस्मादर्धमासे देवा ईज्यन्ते। पितरो पत्त्यं च मसंघृतस्य पूर्णं स्वधां। तमुपोदतिष्ठंत मजुहवुः। ते नमास्यूर्जमवारुंधत। तस्मान्मासि पितृभ्यः क्रियते। मनुष्या अपत्त्यं चमसं घृतस्य पूर्णं

स्वधां॥१॥ तमुपोदतिष्ठं तमजुह्वुः॥ तेनेष्ट्वयीमूर्जमवारुंधत॥ तस्मा
द्विरह्नो मनुष्येभ्य उपक्रियते॥ प्रातश्च सायं च॥ पुरा वा पत्रयं च मसं
घृतस्य पूर्णं ऽ स्वधां॥ तमुपोदतिष्ठं तमजुह्वुः॥ तेनेत्त्रयीमूर्जमवा
रुंधत॥ तस्मात्त्रिरह्नः पुरा वः पेरति॥ प्रातः संगवे सायं॥ असुरा अ
पत्रयं च मसं घृतस्य पूर्णं ऽ स्वधां॥२॥ तमुपोदतिष्ठं तमजुह्वुः॥ ते
न संवत्सर ऊर्जमवारुंधत॥ ते देवा अमन्यंत॥ अमी वा इदमभूवन्
॥ यद्वयं स्म इति॥ त एतानि चातुर्मास्यान्यपश्यन्॥ तानि निरवपन्

।तैरेवैषांतान्नूर्जमवृंजत। ततोहैवाअभवन्। परासुराः॥३॥यद्य
जंते। यामेवदेवाऊर्जमवारुंधत। तांतेनावरुंधे। यत्पितृभ्यःकरो
ति। यामेवपितरऊर्जमवारुंधत। तांतेनावरुंधे। यदावसथेन्नंह
रंति। यामेवमनुष्याऊर्जमवारुंधत। तांतेनावरुंधे। यद्दक्षिणांह
रति॥४॥यामेवपशवऊर्जमवारुंधत। तांतेनावरुंधे। यच्चातुर्मा
स्यैर्यजंते। यामेवासुराऊर्जमवारुंधत। तांतेनावरुंधे। भवत्यात्म
ना। परास्यभ्रातृव्योभवति। विराजोवाएषाविक्रांतिः। यच्चातुर्मा

मसुराअ प ञ्यं चमसंघ तस्य पूर्णं स्वधा २

स्यानि। वैश्वदेवेनास्मिंल्लोके प्रत्यतिष्ठत्। वरुणप्रघासैरंतरिक्षे।
साकमेधैरमुष्मिंल्लोके। एष ह त्वा वै तत्सर्वं भवति। य एवं विद्वांश्चा
तुर्मास्यैर्यजते॥ ५॥ मनुष्या अपरस्यं चमसं घृतस्य पूर्णं स्वधाम
सुरा ददात्यतिष्ठच्चत्वारि च॥ ६॥ अग्निर्वाव संवत्सरः। आदित्यः परि
वत्सरः। चंद्रमा इदावत्सरः। वायुरनुवत्सरः। यद्वैश्वदेवेन यजते। अ
ग्निमेव तत्संवत्सरमाप्नोति। तस्माद्वैश्वदेवेन यजमानः। संवत्सरीणा
ं स्वस्तिमाशास्त इत्याशासीत। यद्वरुणप्रघासैर्यजते। आदित्यमेव

तस्य परिवत्सरमाप्नोति ॥ ३ ॥ तस्माद्वरुणप्रघासैर्यजमानः परिवत्सरी
णां स्वस्तिमाशास्त इत्याशासीत । यत्साकमेधैर्यजते । चन्द्रमसमेव
तदिडावत्सरमाप्नोति । तस्मात्साकमेधैर्यजमानः इडावत्सरीणां स्व
स्तिमाशास्त इत्याशासीत । यत्पितृयज्ञेन यजते । देवानेव तदन्ववस्य
ति । अथ वा अस्य वायुमानुवत्सरम्प्राप्नोता वुछिद्यते । यच्छुनासीरी
येण यजते ॥ ४ ॥ वायुमेव तदनुवत्सरमाप्नोति । तस्माच्छुनासीरीयेण
यजमानः अनुवत्सरीणां स्वस्तिमाशास्त इत्याशासीत । संवत्स

१८

रं वा एष ईप्सतीत्याहुः। यश्चातुर्मास्यैर्यजत इति। एष ह त्वै संवत्स
रमाप्नोति। य एवं विद्वांश्चातुर्मास्यैर्यजते। विश्वेदेवाः समयजंत। ते
ऽग्निमेवायजंत। त एतं लोकमजयन्॥३॥ यस्मिन्नग्निः। य वैश्वदे
वेन यजते। एतमेव लोकं जयति। यस्मिन्नग्निः। अग्नेरेव सायुज्यमु
पैति। यु हा वैश्वदेवेन यजते। अथ संवत्सरस्य गृहपतिमाप्नोति।
यु हा संवत्सरस्य गृहपतिमाप्नोति। अथ सहस्रयाजिनमाप्नोति।
यु हा सहस्रयाजिनमाप्नोति॥४॥ अथ गृहमेधिनमाप्नोति। यु हा

ब्रा॰ष्ठ॰
७८

र्द्धमृद्धिं प्राप्नोति । अथाग्निर्भवति । पुराग्निर्भवति । अथ पुरोगो भवति । एषा वै वैश्वदेवस्य मात्रा । एतावा एतेषामवमं । अतो तो वा उत्तराणि श्रेयांसि भवंति । यद्विश्वे देवाः समयजंत । तद्वैश्वदेवस्य वैश्वदेवत्वं ॥ ५ ॥ अथादित्यो वरुणं राजानं वरुणप्रघासेरयजत । स एतं लोकमजयत् । यस्मिन्नादित्यः । यद्वरुणप्रघासैर्यजते । एतमेव लोकं जयति । यस्मिन्नादित्यः । आदित्यस्यैव सायुज्यमुपैति । यदादित्यो वरुणं राजानं वरुणप्रघासैरयजत । तद्वरुणप्रघासानां

वरुणप्रघासत्वं। अथ सोमो राजा छंदांसि साकमेधैर्यजत॥६॥स

एतं लोकमजयन्। यस्मिंश्चंद्रमा विभाति। यत्साकमेधैर्यजते। ए

तमेव लोकं जयति। यस्मिंश्चंद्रमा विभाति। चंद्रमस एव सायुज्य

मुपैति। सोमो वै चंद्रमाः। एष ह त्वै साक्षात्सोमं भक्षयति। य एवं वि

द्वान्त्साकमेधैर्यजते। यत्सोमश्च राजा छंदांसि च समेधंत॥७॥

तत्साकमेधानां साकमेधत्वं। अथ ऋतवः पितरः प्रजापतिं पितरं पि

तरं यज्ञेनायजंत। त एतं लोकमजयन्। यस्मिन्नृतवः। यत्सि(?)त्वय(?)ज्ञेनय

ब्रा॰ ब्र॰
७१

जंते। एतमेव लोकं जयति। यस्मिन्नृतवः। ऋतूनामेव सायुज्यमुपैति
। य ऋतवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजंत। तस्मिंतृयुसस्य
पितृयज्ञत्वं॥ ७॥ अथौषधय इमं देवं त्र्यंबकैरयजंत प्रथेमहीति। त
तो वै ता अप्रथंत। य एवं विद्वांस्त्र्यंबकैर्यजते। प्रथते प्रजया पशु
भिः॥ अथ वायुः परमेष्ठिनं शुनासीरीयेणायजत। स एतं लोकम
जयत्। यस्मिन्वायुः। य शुनासीरीयेण यजते। एतमेव लोकं जयति
। यस्मिन्वायुः॥ ८॥ वायोरेव सायुज्यमुपैति। प्रलवाहिनौ वहंति। ध्रुवा

३

तुर्मास्ययाजीमीयुताऽनमीयुताऽइति। जीवुन्वाएषर्क्तुनप्यैति।
यदिंवुसंतापमीयते। वुसंतोभवति। यदिंग्रीष्मेग्रीष्मः। यदिंवुर्षासुवु
र्षाः। यदिंश्रुरदिंश्रारत्। यदिंहेमर्केमुंतः। र्क्तुर्भूत्वासंवत्सरमप्यै
ति। संवुत्सुरः प्रजापतिः। प्रजापतिर्वावैषः॥१०॥ परिवुत्सुरमाप्नो
ति। शुनासीरीयेणयजंतेजयंत्सहस्रयाजिनमाप्नोति। वैश्वदेवत्व
ऽसाकमेधैरयजंतसमैधंतपितृयज्ञत्वंजयतियस्मिन्वायुर्हेमंत
त्रीणिच॥१०॥उभयेयुवऽंसुरामुमुदस्यान्निवैयस्यप्रातःसवन

ए कैको सुर्यै पवमानः प्रजा वै सत्रमासत तास्त्रिवृत्संवत्सरो द्दरा॥१०
॥उभये वा उ ह स्यात्सर्वाभिर्मध्यतो न्वाव ब्राह्मणे ब्रश्नं ह मेधि नूष
स्तष्टिः॥ ६६॥ ॥हरिः ॐ॥ ॥अग्नेः कृत्तिकाः। शुक्रं परस्ताज्ज्योतिरव
स्तात्। प्रजापते रोहिणी। आपः परस्तादोषधयोवस्तात्। सोमस्ये
न्वका विततानि। परस्ताद्वयंतोवस्तात्। रुद्रस्य बाहू। मृगयवः पर
स्ताद्विक्षारोवस्तात्। अदित्यै पुनर्वसू। वातः परस्तादार्द्रमवस्तात्॥
॥ बृहस्पतेस्तिष्यः। जुह्वतः परस्ताद्यजमानाअवस्तात्। सर्पाणां

सा आश्रेषाः। अभ्यागच्छंतः पुरस्तात्। अभ्यानृत्यंतोऽवस्तात्। पितृणां मघाः। रुदंतः पुरस्तात्। अपभ्रंशोऽवस्तात्। अर्यम्णः पूर्वे फल्गुनी। जाया पुरस्तात्। ऋषभोऽवस्तात्। भगस्योत्तरे। वहतवः पुरस्तात्। वहमाना अवस्तात्॥ २॥ देवस्य सवितुर्हस्तः। प्रसवः पुरस्तात्। सनिरवस्तात्। इंद्रस्य चित्रा। ऋतं पुरस्तात्। सत्यमवस्तात्। वायोर्निष्ट्या व्रततिः पुरस्तात्। असिद्धिरवस्तात्। इंद्राग्नियोर्विशाखे। युगानि पुरस्तात्। मित्रस्यानूराधाः। अभ्यारोहत्पुरस्तात्। अभ्यारूढमवस्तात्॥ ३॥ इंद्रस्य रोहिणी।

कृषमाणा अवस्तात्॥ २

श्रौ॰ सू॰

। श्रुणत्परस्तात्प्रतिश्रुणदवस्तात्। निर्ऋत्यै मूलबर्हणी। प्रतिभंजंतः
परस्तात्प्रतिश्रुण्वंतोवस्तात्। अपां पूर्वा अषाढाः। वर्चः परस्तात्समि
तिरवस्तात्। विश्वेषां देवानामुत्तराः। अभिजयत्परस्तादभिजितम
वस्तात्। विष्णोः श्रोणा पृछमानाः। परस्तात्पंथा अवस्तात्॥४॥ वसू
नां श्रविष्ठाः। भूतं परस्ताद्भूतिरवस्तात्। इंद्रस्य शतभिषक्। विश्व
व्यचाः परस्ताद्विश्वक्षितिरवस्तात्। अजस्यैकपदः पूर्वे प्रोष्ठपदाः। वै
श्वानरं परस्ताद्वैश्वावसवमवस्तात्। अहेर्बुध्नियस्योत्तरे। अभिषिं

चंतः परस्ताद्भिषुण्वंतोवस्तात्। पूष्णो रेवती। गावः परस्ताद्वत्सा अ
वस्तात्। अश्विनोरश्वयुजौ। ग्रामः परस्तात्सेनावस्तात्। यमस्यापभ
रणीः। अपकर्षंतः परस्तादपवहंतोवस्तात्। पूर्णा पश्चाद्यत्ते देवा अ
दधुः॥५॥ आर्द्रमवस्ताद्दहमाना अवस्ताद्भ्यारूढ म वस्तात्संध्या अ
वस्ताद्वत्सा अवस्तात्संचंचः॥१॥ यत्पुण्यं नक्षत्रं। तद्बट्कुर्वीतोपव्युषं।
यदा वै सूर्य उदेति। अथ नक्षत्रं नैति। यावति तत्र सूर्यो गच्छेत्। यत्र
जघन्यं पश्येत्। तावति कुर्वीत यत्कारी स्यात्। पुण्याह एव कुरुते। ए

ब्रा॰ प्र॰
८२

वꣳ हवै यत्तेषु चरात तद्युम्नं च मात्स्यो निरवसाययांचकार ॥४॥ यो
वै नक्षत्रियं प्रजापतिं वेद। उभयोरेनं लोकयोर्विदुः। हस्त एवास्य
हस्तः। चित्रा शिरः। निष्ट्या हृदयं। ऊरू विशाखे। प्रतिष्ठानूराधाः। एष
वै नक्षत्रियः प्रजापतिः। य एवं वेद। उभयोरेनं लोकयोर्विदुः॥२॥ अ
स्मिꣳश्चामुष्मिꣳश्च। यां कामयेत दुहितरं प्रिया स्यादिति। तां निष्ट्या
यां दद्यात्। प्रियैव भवति। नैव तु पुनरागच्छति। अभिजिन्नाम नक्ष
त्रं। उपरिष्टादषाढानां। अवस्ताच्छ्रोणायै। देवासुराः संयत्ता आस

न्। तेदेवास्तस्मिन्नक्षत्रेभ्यजयन्॥३॥ यदभ्यजयन्। तदभिजि
तोभिजित्वं। यंकामयेतानपजय्यंजयेदिति। तमेतस्मिन्नक्षत्रेया
तयेत्। अनपजय्यमेवजयति। पापपराजितमिवतु। प्रजापतिः
पशूनसृजत। तेनक्षत्रंनक्षत्रमुपातिष्ठंत। तेसमावंतएवाभव
न्। तेरेवतीमुपातिष्ठंत॥४॥ तेरेवत्यांप्राभवन्। तस्माद्रेवत्यांप
शूनांकुर्वंति। यत्किंचार्वाचीनंसोमात्। प्रैवभवंति। सलिलंवा
इदमंतरासीत्। यदतरन्। तत्तारकाणांतारकत्वं। योवाइहयजे

ब्रा॰ त्र॰
८३

ते। अमुं स लोकं नक्षते। तन्नक्षत्राणां नक्षत्रत्वं॥५॥देवगृहा वै नक्षत्राणि। य एवं वेद। गृह्येव भवति। यानि वा इमानि पृथिव्याश्चित्राणि। तानि नक्षत्राणि। तस्मादश्लीलनामंश्चित्रे। नावस्येन्न यजेत। यथा पापाहे कुरुते। तादृगेव तत्। देवनक्षत्राणि वा अन्यानि॥६॥ यमनक्षत्राण्यन्यानि। कृत्तिकाः प्रथमं। विशाखे उत्तमं। तानि देवनक्षत्राणि। अनूराधाः प्रथमं। अपभरणीरुत्तमं। तानि यमनक्षत्राणि। यानि देवनक्षत्राणि। तानि दक्षिणेन परियंति। यानि यमनक्ष

त्राणि॥७॥ तान्युत्तरेण। अन्वेषामरात्स्मेति। तदनूराधाः। ज्येष्ठमेषा
मवधिष्मेति। तज्ज्येष्ठघ्नी। मूलमेषामवृक्षामेति। तन्मूलवर्हणी। यन्ना
सहन्त। तदषाढाः। यदश्लोणत। तच्छ्रोणा। यदश्टृणोत्। तच्छ्रविष्ठाः
। यच्छतमभिषज्यन्। तच्छतभिषक्। प्रोष्ठपदेषूदयच्छन्त। रेवत्याम
रवन्त। अश्वयुजोरयुंजत। अपभरणीष्वपावहन्। तानि वा एतानि
यमनक्षत्राणि। यान्येव देवनक्षत्राणि। तेषु कुर्वीत यत्कारी स्यात्।
पुण्याह एव कुरुते॥८॥ चकारं वै देवा हो भयोरनं लोकयोर्विडुरंजय

रेवतीमुपांतिमं। तन्नक्षत्रत्वमन्यानि यानि यमनक्षत्राण्यस्मीणद्य
मनक्षत्राणि त्रीणि च॥२॥ देवस्य सवितुः प्रातः प्रसवः प्राणः॥ वरु
णस्य सायमासवोऽपानः। यत्प्रतीचीनं प्रातस्तनात्। प्राचीनꣳ संग
वात्। ततो देवा अग्निष्टोमं निरमिमत। तत्तदात्तवीर्यं निर्मार्गः। मित्र
स्य संगवः। तत्पुण्यं तेजस्व्यहः। तस्मात्तर्हि पशवः समायंति। यत्प्र
तीचीनꣳ संगवात्॥३॥ प्राचीनं मध्यंदिनात्। ततो देवा उक्थ्यं निर
मिमत। तत्तदात्तवीर्यं निर्मार्गः। बृहस्पतेर्मध्यंदिनः। तत्पुण्यं तेज

स्यहः। तस्मात्तर्हि तिक्ष्णिष्ठं तपति। यत्प्रतीचीनं मध्यंदिनात्। प्राची
नमपराह्णात्। ततो देवाः षोडशिनं निरमिमत। तत्तदात्तवीर्यं निर्मा
र्गः॥२॥ भगस्यापराह्णः। तत्पुण्यं तेजस्व्यहः। तस्मादपराह्णे कुमा
र्यो भगमिच्छमानाश्चरंति। यत्प्रतीचीनमपराह्णात्। प्राचीनं सा
यात्। ततो देवा अतिरात्रं निरमिमत। तत्तदात्तवीर्यं निर्मार्गः। वरु
णस्य सायं। तत्पुण्यं तेजस्व्यहः। तस्मात्तर्हि नानृतं वदेत्॥३॥ ब्राह्म
णो वा अष्टाविंशो नक्षत्राणां। समानस्याह्नः पंच पुण्यानि नक्षत्रा

ब्रा० कृ०
८५

पि। चुत्वार्यश्लीलानि। तानि नव। यच्च पुरस्तान्नक्षत्राणां यच्चावस्तात् ७॥
। तान्येकादश। ब्राह्मणो द्वादशः। य एवं विद्वान्त्संवत्सरं व्रतं चरति
। संवत्सरेणैवास्य व्रतं गुप्तं भवति। समानस्याह्नः पंच पुण्यानि न
क्षत्राणि। चुत्वार्यश्लीलानि। तानि नव। आग्नेयी रात्रिः। ऐन्द्रमहः। ता
न्येकादश। आदित्यो द्वादशः। य एवं विद्वान्त्संवत्सरं व्रतं चरति। सं
वत्सरेणैवास्य व्रतं गुप्तं भवति॥ ४॥ संगवात्षोडशिनं निरमिमत
तत्तद्वात्तवीर्यं निर्मार्गो वैदैन्द्रवति समानस्याह्नः पंच पुण्यानि नक्ष ए

त्राण्युष्टौ च ॥ ३ ॥ ब्रह्मवादिनो वदन्ति । कति पात्राणि यज्ञं वहन्तीति ।
त्रयोदशेति ब्रूयात् । स यद्ब्रूयात् । कस्तानि निरमिमीतेति । प्रजापति
रिति ब्रूयात् । स यद्ब्रूयात् । कुतस्तानि निरमिमीतेति । आत्मन इति ।
प्राणापानाभ्यामेवोपाꣳशुं चान्तर्यामं च निरमिमीत ॥ ४ ॥ व्यानादुपाꣳशु
सवनं । वाच ऐन्द्रवायवं । दक्षक्रतुभ्यां मैत्रावरुणं । श्रोत्रादाश्विनं ।
चक्षुषः शुक्रामन्थिनौ । आत्मन आग्रयणं । अङ्गेभ्य उक्थ्यं । आयु
षो ध्रुवं । प्रतिष्ठाया ऋतुपात्रे । यज्ञं वाव तं प्रजापतिर्निरमिमीत । स

ब्रा॰ प्र॰
८६

निर्मितो नाध्रियत स मंध्रीयत । स एतान्प्रजापतिरपिवापानपश्यत् । ता
न्निरवपत् । तेर्वै स युक्तमप्यवपत् । यदपिवापा भवंति । युक्तस्य धृत्या अ
संस्रंसाय ॥ २ ॥ उपांशुं स्तुयामो निरमिमीत । तामिमीत षड्ढ ॥ ४ ॥ ऋतमेव
परमेष्ठि । ऋतं नात्येति किंचन । ऋते समुद्र आहितः । ऋते भूमिरिय
ꣳ श्रिता । अग्निस्तिग्मेन शोचिषा । तप आक्रांतमुष्णिहा । शिरस्तपस्या
हितं । वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये । सत्येन परिवर्तये
॥ १ ॥ तपसास्यानुवर्तये । शिवेनास्योपवर्तये । शग्मेनास्याभिवर्तये

८६

।तदृतं तत्सत्यं। तद्व्रतं तच्छकेयं। तेन शकेयं तेन राध्यासं। यद्घर्मः पर्य
वर्त्तयत्। अंतान्पृथिव्या दिवः। अग्निरीशान ओजसा। वरुणो धीतिभिः भि
सह॥१॥ इंद्रो मरुद्भिः सखिभिः सह। अग्निस्तिग्मेन शोचिषा। तप आ
क्रांतमुष्णिहा। शिरस्तपस्याहितं। वैश्वानरस्य तेजसा। ऋतेनास्य
निवर्त्तये। सत्येन परिवर्त्तये। तपसास्यानुवर्त्तये। शिवेनास्योपवर्त्त
ये। शग्मेनास्याभिवर्त्तये॥२॥ तदृतं तत्सत्यं। तद्व्रतं तच्छकेयं। तेन
शकेयं तेन राध्यासं। यो अस्याः पृथिव्यास्त्वचि। निवर्त्तयत्योषधीः। अ

ा·ब्र·
८७

ग्निरीशानु ओजसा। वरुणो धीतिभिः सह। इंद्रो मरुद्भिः सखिभिः सह
। अग्निस्तिग्मेन शोचिषा। तप आक्रांतमुष्णिहा॥४॥ शिरस्तपस्या
हितं। वैश्वानरस्य तेजसा। ऋतेनास्य निवर्त्तये। सत्येन परिवर्त्तये
। तपसास्यानुवर्त्तये। शिवेनास्योपवर्त्तये। शग्मेनास्याभिवर्त्तये
। तदृतं तत्सत्यं। तद्व्रतं तच्छकेयं। तेन शकेयं तेन राध्यासं॥५॥ ए
कं मासमुदसृजत्। परमेष्ठी प्रजाभ्यः। तेनाभ्यो मह आवहत्। अ
मृतं मर्त्येभ्यः। प्रजामनु प्रजायसे। तदु ते मर्त्यामृतं। येन मासा अ



८९

ईमासाः। कृतवः। परिवत्सराः। येनते तेप्रजापते। ईजानस्यन्यवर्त्त
यन्॥६॥ तेनाहमस्य ब्रह्मणा। निवर्त्तयामि जीवसे। अग्निस्तिग्मेन
शोचिषा। तपआक्रांतमुष्णिहा। शिरस्तपस्याहितं। वैश्वानरस्यते
जसा। कृतेनास्य निवर्त्तये। सत्येन परिवर्त्तये। तपसास्यानुवर्त्त
ये। शिवेनास्योपवर्त्तये। शग्मेनास्याभिवर्त्तये। तदृतं तत्सत्यं। तद्व्र
तं तच्छकेयं। तेन शकेयं तेन राध्यासं॥७॥ परिवर्त्ते। सहाभिवर्त्त
यदुष्णिहाराध्यासं न्यवर्त्तयन्नुपवर्त्तयिचत्वारिंच॥५॥ देवावेय

ब्रा॰ प्र॰
८८

धूर्त्ते कुर्वत। तदसुरा अकुर्वत। ते सुराऊर्ध्वं दृष्टेभ्यो नापश्यन्। ते के
शान् नग्रेव पंत। अथ श्मश्रूणि। अथोपपक्षौ। ततस्ते वाँचआयन्। प
राभवन्। यस्यैवं वपंति। अवाङेति॥१॥ अथो परैव भवति। अथ
देवा ऊर्ध्वं दृष्टेभ्यो पश्यन्। तउपपक्षावग्रेव पंत। अथ श्मश्रूणि। अ
थ केशान्। ततस्ते भवन्। सुवर्गं लोकमायन्। यस्यैवं वपंति। भव
त्यात्मना। अथो सुवर्गं लोकमेति॥२॥ अथैतन्मनुर्वप्त्रे मिथुनम
पश्यत्। स श्मश्रूण्यग्रेऽवपत। अथोपपक्षौ। अथ केशान्। ततो वै स

सुवस॰ ९

प्राजायत प्रजया पशुभिः । यस्यैवं वेद । प्र प्रजया पशुभिर्मिथुनै
र्जायते । देवासुराः संयत्ता आसन् । ते संवत्सरे व्यायच्छंत । तान्देवा
श्चातुर्मास्यैरेवाभिप्रायुंजत ॥ [illegible] ॥ वैश्वदेवेन चतुरो मासो वृंजतेंद्र
राजानः । तांछीर्षन्निचावर्त्तयंत परि । वरुणप्रघासैश्चतुरो मासो
वृंजत वरुणराजानः । तांछीर्षन्निचावर्त्तयंत परि । साकमेधैश्चतु
रो मासो वृंजत सोमराजानः । तांछीर्षन्निचावर्त्तयंत परि । यासंव
त्सरस्तु प्रज्ञा वासीत् । तामेषामवृंजत । ततो देवा अभवन् । परासुराः

ब्रा॰ त्र॰
८९

॥४॥ य एवं विद्वाꣳश्चातुर्मास्यैर्यजते। भ्रातृव्यस्यैव मासो वृक्त्वा। नी
षन्निर्वर्तयते परि च। ये षां संवत्सरꣳ प्रजा वा। वृङ्क्ते। तां भ्रातृव्य
स्य। क्षुधास्य भ्रातृव्यः पराभवति। लोहितायसेन निर्वर्तयते। यद्वा
ऽमामुत्निर्ऋत्ता वा गते निर्वर्तयति। एतद्वै वैनाꣳ रूपं कृत्वा निर्व
र्तयति। सा ततः श्वः श्वो भूयसी भवंत्येति। प्र॰ प्रजायते। य एवंवि
द्वाल्लोहितायसेन निर्वर्तयते। एतद्वै व रूपं कृत्वा निर्वर्तयते। स त
तः श्वः श्वो भूया भवन्नेति। प्रैव जायते। त्रेण्या रोन्नस्या निर्वर्तयेत।

त्रीणि त्रीणि वै देवानामृध्यानि। त्रीणि छंदांसि। त्रीणि सवनानि। त्रय इमे लोकाः॥६॥ ऋध्यामेव तद्वीर्य एषु लोकेषु प्रतितिष्ठति। यच्चातुर्मास्ययाज्यात्मनो नावद्येत। देवेभ्य आवृश्च्येत। चतुर्षु चैतत्षुमासेषु निवर्त्तयेत। परोक्षमिव तद्देवेभ्य आत्मनोवद्यत्य नोव्रस्काय। देवानां वा एष आनीतः॥ यश्चातुर्मास्ययाजी। य एवं विद्वान्तिच्चवर्त्तयेत परिचा देवता एवाप्येति। नास्य रुद्रः प्रजां पशूननभिमन्यते॥ ७॥ एतैर्वै त्रियुंजतासुरा एति लोका मन्यते॥६॥ आयुषः प्राणं सं

श्री० घ्र०
१०

तनु। प्राणादपानं संतनु। अपानाद्व्यानं संतनु। व्यानाच्चक्षुः संत
नु। चक्षुषः श्रोत्रं संतनु। श्रोत्रान्मनः संतनु। मनसो वाचं संतनु। वा त
च आत्मानं संतनु। आत्मनः पृथिवीं संतनु। पृथिव्या अंतरिक्ष
ं संतनु। अंतरिक्षाद्दिवं संतनु। दिवः सुवः संतनु॥१॥ अंतरिक्ष
ं संतनु देवे॥७॥ इंद्रो दधीचो अस्थभिः। वृत्राण्यप्रतिष्कुतः। जघा
न नवतीर्नव॥ इच्छन्नश्वस्य यच्छिरः। पर्वतेष्वपश्रितं। तद्विदच्छर्यणा
वति। अत्राह गोरमन्वत। नाम त्वष्टुरपीच्यं। इत्था चंद्रमसो गृहे। इं

द्रमिद्गाथिनो बृहत्॥१॥ इंद्रमर्केभिरर्किणः॥ इंद्रं वाणीरनूषत॥ इं
द्र इद्धर्योः सचा॥ संमिश्ल आ वचोयुजा॥ इंद्रो वज्री हिरण्ययः॥ इंद्रो दी
र्घाय चक्षसे॥ आ सूर्यं रोहयद्दिवि॥ वि गोभिरद्रिमैरयत्॥ इंद्र वाजे
षु नो अव॥ सहस्रप्रधनेषु च॥२॥ उग्र उग्राभिरूतिभिः॥ तमिंद्रं
वाजयामसि॥ महे वृत्राय हंतवे॥ स वृषा वृषभो भुवत्॥ इंद्रः स दा
मने कृतः॥ ओजिष्ठः स बले हितः॥ द्युम्नी श्लोकी स सोम्यः॥ गिरा व
ज्रो न संभृतः॥ सबलो अनपच्युतः॥ ववक्षुरुग्रो अस्तृतः॥३॥

शा॰ ब्रा॰
९१

हस्त्वास्त्वतः॥८॥ देवासुराः संयत्ता आसन्। स प्रजापतिरिन्द्रं ज्येष्ठं पुत्रमपन्यधत्त। नेदेनमसुरा बलीयांसो हनन्निति। प्रह्रादो ह वै कायाधवः। विरोचनं स्वं पुत्रमपन्यधत्त। नेदेनं देवा अहनन्निति। ते देवाः प्रजापतिमुपसमेत्योचुः। नाराजकस्य युद्धमस्ति। इन्द्रमन्विच्छामेति। तं यज्ञक्रतुभिरन्वैच्छन्॥९॥ तं यज्ञक्रतुभिर्नान्वविन्दन्। तमिष्टिभिरन्वैच्छन्। तमिष्टिभिरन्वविन्दन्। तदिष्टीनामिष्टित्वम्। एष्टयो ह वै नाम। ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। तस्मा

९१

एतस्मा ग्नावैष्णवमेकादशकपालं दीक्षणीयं निरवपन् । तदं प्रकृत्या
तन्वत । तान्पत्नीसंयाजांतानुपानयन् ॥२॥ ते तदंतमेव कृत्वोदद्रव
न् । ते प्रायणीयमभिसमारोहन् । तदं प्रकृत्यातन्वत । तांछंय्वंतानु
पानयन् । ते तदंतमेव कृत्वोदद्रवन् । त आतिथ्यमभिसमारोहन्
। तदं प्रकृत्यातन्वत । तानिडांतानुपानयन् । ते तदंतमेव कृत्वोदद्र
वन् । तस्माद्धेता एतदंता इष्टयः संतिष्ठंते ॥३॥ एवं ह देवा अकुर्व
त । इति देवा अकुर्वत । इत्यु वै मनुष्याः कुर्वते । ते देवा ऊचुः । यज्ञ इद

।·ब्र·
१२

मुच्चैर्यत्तेनचराम।तंनोसुराःपाप्मानुविवंहंति।उपांऽशूपसदांचरा
म।तथानोसुराःपाप्मानानुवेत्स्यंतीति।तउपांऽशूपसदमतन्वत
।तिस्रएवसामिधेनीरन्वूच्य॥४॥स्रुवेणाघारमाघार्य।तिस्रःपराची
राहुतीर्हुत्वा।स्रुवेणोपसदंजुहवांचक्रुः।उग्रंवचोअपावधीत्त्वे
षंवचोअपावधींस्वाहेति।अशनयापिपासेहवाउग्रंवचः।एन
श्चवैरहत्यंचत्वेषंवचः।एतंहवावतच्चतुर्विहितंपाप्मानंदेवा
अपजघ्निरे।तथोएवैतदेवंविद्यजमानः।तिस्रएवसामिधेनीरनु

च्यं। स्रुवेणाघारमाघार्य॥५॥ तिस्रः प्राचीराहुतीर्हुत्वा। स्रुवेणोप
समं जुहोति। उग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति। अ
शनयापिपासे ह वा। उग्रं वचः। एनश्च वैरहत्यं च त्वेषं वचः। एतमे
व तच्चतुर्धा विहितं पाप्मानं यजमानोपहते। तेभिनीयेवाहः पशुमा
लभंत। अक्रेरेव तद्देवा अवर्त्तिं पाप्मानं मृत्युमपजघ्निरे। तेनोभि
नीयेवै रात्रैः प्राचरन्। रात्रिया एव तद्देवा अवर्त्तिं पाप्मानं मृत्युमप
जघ्निरे॥६॥ तस्मादभिनीयेवाहः पशुमालभेत। अक्र एव तद्यजमा

आ० ब्र०
१३.

नो वर्त्तिं पाप्मानं भ्रातृव्यान् अपनुदते। तेनो अभिनियेव रात्रेः प्रचरेत।
रात्रिया एव तद्यजमानो वर्त्तिं पाप्मानं भ्रातृव्यान् अपनुदते। स एष वै
पवसथीये हन्दिदेवत्यः पशुरालभ्यते। द्वयं वा अस्मिंल्लोके यजमा
नः। अस्थि च मांसं च। अस्थिचैव तेन मांसं च यजमानः संस्कु
रुते। ता वा एताः पंच देवताः। अग्निषोमावग्निर्मित्रावरुणौ। ७। पंच
पंची वै यजमानः। त्वङ्मांसं स्नावास्थि मज्जा। एतमेव तत्संचधा
विहितमात्मानं वरुणपाशात्मुंचति। भेषजताये निर्वरुणत्वाय। त

१३

ऽसप्तभिः छंदोभिः भ्रातरं क्रयन्। तस्मात्सप्त चतुरुत्तराणि छंदांऽ
सि भ्रातरनुवाकेनूच्यंते। तमेतयोपसमेत्योपासीहन्नु उपासेगा
यत्तानरइति। तस्माद्धेतया बहिष्पवमानउपसद्यः॥८॥ ऐछंनुनय
ऽस्तिछंतेनूच्यानूच्येस्तुवेणांघारमाघार्यरात्रियाएवतद्देवाअव
र्त्तिं पाप्मानं मृत्युमपजघ्निरे मित्रावरुणो नवंच॥१॥ देवायजमानोदे
वाहैवायजमानोयजमानःप्राचरन्यचरेहालभंतालभेतमृत्युमप
जघ्निरेभ्रातृव्यान्॥ससमुद्रउत्तरतःप्राज्वलन्धूम्यंतेनो। एषवावस

संमुक्तः॥ यस्मात्तांस्तः॥ एषउवैवसन्नप्यंतः॥ यदैष्युंतः॥ तद्वैतान्निरुक्तंत्रिवृ
रूपं। तस्मात्तंत्रिवितुस्तंखवनंति। ससुवर्णरजुताभ्यांकुम्भीभ्यांपरिगृही
तआसीत्॥ तंयदस्याअध्युजनयन्॥ तस्मादादित्यः॥१॥ अथ्यस्सुवर्ण
रजुताभ्यांकुम्भीभ्यांपरिगृहीतआसीत्॥ सास्यकौशिकता। तंत्रिवृता
भिष्टास्तुवत। तंत्रिवृताददत। तंत्रिवृताहरन्॥ यावतीत्रिवृतोमात्रा
॥ तंपंचदशेनाभिष्टास्तुवत। तंपंचदशेनाददत। तंपंचदशेनाहरन्
॥ यावतीपंचदशस्यमात्रा॥२॥ तंसप्तदशेनाभिष्टास्तुवत। तंस

प्तदशेनादधत। तं सप्तदशेनाहरन्। यावती सप्तदशस्य मात्रा। त
स्य सप्तदशेन क्रियमाणस्य तेजो हरौ पतत्। तमेकविंशेनाभिप्ला
स्तुवत। तमेकविंशेनादधत। तमेकविंशेनाहरन्। यावत्येकवि
ंशस्य मात्रा। ते पत्रिवृतो स्तुवते॥ ३॥ त्रिवृतैव तद्यजमानमादध
ते। तं त्रिवृतैव हरंति। यावती त्रिवृतो मात्रा। अग्निर्वै त्रिवृत्। याव
द्वा अग्नेर्दहतो धूम उदेत्यानुव्येति। तावती त्रिवृतो मात्रा। अग्नेरेवै
नं तत्। मात्रां सायुज्यं सलोकतां गमयंति। अथ पंचदशेन स्तुव

तो पंचदशेनैव तद्यजमानमाहरते ॥४॥ तं पंचदशेनैव हरंति । यावती पंचदशस्य मात्रा । चंद्रमा वै पंचदशः । एष हि पंचदश्यामपक्षीयते । पंचदश्यामापूर्यते । चंद्रमस एवैनं तत् मात्रां सायुज्यं सलोकतां गमयंति । अथ यत्सप्तदशेन स्तुवते । सप्तदशेनैव तद्यजमानमाहरते । तं सप्तदशेनैव हरंति ॥५॥ यावती सप्तदशस्य मात्रा । प्रजापतिर्वै सप्तदशः । प्रजापतेरेवैनं तत् मात्रां सायुज्यं सलोकतां गमयंति । अथ यदेकविंशेन स्तुवते । एकविंशेनैव तद्यजमान

मा ह्वलते। तमेकविꣳशो नैव ह्वरंति। यावत्येकविꣳशस्य मात्रा। असौ
वा आदित्य एकविꣳशः। आदित्यस्यैवैनं तत्॥ ६॥ मात्राꣳ सायुज्य
ꣳ सलोकतां गमयंति। ते कुंभ्यौ। व्यघ्नन्। ते अहोरात्रे अभवतां। अ
हरेव सुवर्णमभवत्। रजता रात्रिः। स यदादित्य उदेति। एतामेव तत्
सुवर्णां कुंभीमनु समेति। अथ यदस्तमेति। एतामेव तद्रजतां
कुंभीमनु संविशति। प्रह्रादो ह वै कायाधवः। विरोचनꣳ स्वं पुत्र
मुदास्यत्। स प्रदरोऽभवत्। तस्मात्प्रदरादुदकं नाचामेत्॥ ७॥ आ

दित्यः पंचदशास्य मात्रास्तुवते पंचदशेनैव तद्यजमानमाहद्दतेस
प्तदशेनैव हरंत्यादित्यस्यैवैनंदिशंति चत्वारिंच॥ ॥ येवै चत्वार
स्तोमाः। कृतंतत्। अथ ये पंच। कलिः सः। तस्माच्चतुष्टोमः स्याच्चतुष्टो
मत्वं। तदाहुः। कतमानि तानि ज्योतींषि। य एतस्य स्तोमा इति। त्रि
वृत्पंचदशः सप्तदश एकविंशः॥ १॥ एतानि वाव तानि ज्योतींषि
। य एतस्य स्तोमाः। सोब्रवीत्। सप्तदशेन क्रियमाणो व्यसेशिषि। भि
षज्यत मेति। तमश्विनौ धानाभिर भिषज्यतां। पूषा करंभेण। भारती

परिवापेण॥ मित्रावरुणो पयस्यया। तदाहुः॥२॥ यद्दधिभ्यो धाना

॥पूषा करंभः। भारत्यै परिवापः। मित्रावरुणयोः पयस्या। कस्मा

देतेषां हविषामिंद्रमेव यजंतीति। एताह्येनं देवता इति ब्रूयात्।

एतेर्हविर्भिरभिषज्यंस्तस्मादिति। तं वसवोष्टाकपालेन प्रातः

सवनेभिषज्यन्। रुद्रा एकादशकपालेन माध्यंदिने सवने। विश्वे

देवा द्वादशकपालेन तृतीयसवने॥३॥ स यदष्टाकपालान्प्रातः

सवने कुर्यात्। एकादशकपालान्माध्यंदिने सवने। द्वादशकपा

लाꣳस्तृतीयसवने।विलोमं तद्यत्तस्यै क्रियेत।एकादशकपालानेव
प्रातःसवने कुर्यात्।एकादशकपालान्माध्यंदिने सवने।एकादशक
पालाꣳस्तृतीयसवने।यत्तस्यै सलोमत्वाय।तद्धाकुः।यद्वसूनां प्रात
:सवनं।रुद्राणां माध्यंदिनꣳसवनं।विश्वेषां देवानां तृतीयसवनं
।अथ कस्माद्देतेषाꣳहविषामिंद्रमेव यजंतीति।एतद्ध्येनं देवता
इति ब्रूयात्।एतर्हि विभिरभिषज्युꣳस्तस्मादिति॥४॥एकविꣳशा
आकुःस्तृतीयसवने प्रातःसवनं पंचेच॥१॥तस्या वाचो वपादा

द्विभयुः। तमेतेषु सप्तसु छंदस्स्वश्रयन्। यदश्रयन्। तच्छ्रायंतीयं
स्य श्रायंतीयत्वं। यद्वारयन्। तद्वारवंतीयस्य वारवंतीयत्वं। तस्मा वा चए
वावपाद्दाद्बिभयुः। तस्मा एतानि सप्त चतुरुत्तराणि छंदांस्युपा
दधुः। तेषामतित्रीण्यरिच्यंत। नत्रीण्युदभवन्॥ १॥ स बृहतीमेवा
स्पृशत्। द्वाभ्यामक्षराभ्यां। अहोरात्राभ्यामेव। तदाहुः। कतमा
सा देवाक्षरा बृहती। यस्यां तत्प्रत्यतिष्ठत्। द्वादश पौर्णमास्यः। द्वा
दशाष्टकाः। द्वादशामावास्याः। एषा वाव सा देवाक्षरा बृहती॥ २॥ य

स्यांतस्तुवतिषडिति। यानिचतुर्विंशतिरत्यरिच्यंत। यानिचनोदभव
न्। तानिनिर्वीर्याणिहीनान्यमन्यंत। साब्रवीद्बृहती। मामेवभूत्वा। मामु
पसंश्रयतेति। चतुर्भिरक्षरैरनुष्टुब्बृहतीनोदभवत्। चतुर्भि
रक्षरैःपंक्तिर्बृहतीमत्यरिच्यत। तस्यामेतानिचत्वार्यक्षराण्यप्रच्छि
द्योदधात्। ते बृहतीएवभूत्वा। बृहतीमुपसमश्रयतां। अष्टाभि
रक्षरैरुष्णिग्बृहतीनोदभवत्। अष्टाभिरक्षरैस्त्रिष्टुब्बृहतीम
त्यरिच्यत। तस्यामेतान्यष्टावक्षराण्यप्रच्छिद्योदधात्। तेबृहतीएव

बृहती

भूत्वा। बृहतीमुपसमश्रयतां। द्वादशाभिरक्षरैर्गायत्री बृहतीनोद
भवत्। द्वादशाभिरक्षरैर्जगतीमत्यरिच्यत। तस्यामेतानि द्वादशा
क्षराण्यपुच्छिद्यादधात्॥४॥ ते बृहती एव भूत्वा। बृहतीमुपसमश्रय
तां। सोऽब्रवीत्प्रजापतिः छंदांसि रथो मे भवत। युष्माभिरहमेत
मध्वानमनुसंचराणीति। तस्य गायत्री च जगती च पक्षावभवतां
।उष्णिक्च त्रिष्टुप् च प्रष्ट्यौ। अनुष्टुप् च पंक्तिश्च धुर्यौ। बृहत्येवोद्धि
रभवत्। स एतं छंदोरथमास्थाय। एतमध्वानमनुसमचरत्। एत

ऽं हवैछंदोरथमास्थाया। एतमध्वानमनुसंचरंति। येनैषएतत्संचरंति

। यएवंविद्वान्त्सोमेनयजते। यउचैनमेवंवेद॥५॥अभवन्नावसाहेवा

क्षराब्दहत्यंहधातद्वाहेत्तणक्षराण्यपुच्छिद्योहधादास्यायुषद्धं॥१॥अ

ग्नेःकृत्तिकायत्सुण्यंहेवस्यसवितुर्बल्लवादिनकृत्यतमेवदेवावाआ

युषइंद्रोहधीचोहेवासुराःसप्रजापतिःससंमुद्रोयेवैचत्वारस्तस्यावा

चोघाहेत्ता॥१॥अग्नेःकृत्तिकादेवगृहाकृतमेवध्यामिवतिस्नःपरा

चीयेवैचत्वारोनवपंचाशत॥५१॥ ॥हरिःॐ॥ ॥अनुमत्यैपुरो

डाना मष्टाकपालं निर्वपति। ये प्रत्यंचुः शम्याया अवृत्री यंति। तं नैर्ऋ
तमेककपालं। इयं वा अनुमतिः। इयं निर्ऋतिः। नैर्ऋतेन पूर्वेण प्रच
रति। पाप्मानमेव निर्ऋतिं पूर्वां निरवदयते। एककपालो भवति
। एकधैव निर्ऋतिं निरवदयते। यदहुत्वा गार्हपत्य ईयुः॥१॥ रुद्रो
भूत्वाग्निरनूत्थाय। अध्वर्युं च यजमानं च हन्यात्। वीहि स्वाहाहु
तिं जुषाण इत्याह। आहुत्यैवैनं शमयति। नार्तिमार्छत्यध्वर्युर्न य
जमानः। एकोल्मुकेन यंति। तद्धि निर्ऋत्यै भागधेयं। इमां दिशं यंति।

स

एषा वै निर्ऋत्यै दिक्। स्वायामेव दिशि। निर्ऋतिं निरवदयते॥२॥ स्व
कृतइरिणे जुहोति प्रदरे वा। एतद्वै निर्ऋत्या आयतनं। स्व एवाय
तने निर्ऋतिं निरवदयते। एष ते निर्ऋते भाग इत्याह। निर्दिशत्यै
वैनां। भूते हविष्मत्यसीत्याह। भूतिमेवोपावर्त्तते। मुंचेममंहस
इत्याह। अंहस एवैनं मुंचति। अंगुष्ठाभ्यां जुहोति॥३॥ अंतत एव
निर्ऋतिं निरवदयते। कृष्णं वासः कृष्णतूषं दक्षिणा। एतद्वै निर्ऋत्यै
रूपं। रूपेणैव निर्ऋतिं निरवदयते। अप्रतीक्षमायंति। निर्ऋत्या अं

तर्हि त्ये। स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति। आकू
त्यै वै नमस्यं तो गार्हपत्यमुपावर्त्तते। अनुमते नञ्चं रति। इयं वा अ
नुमतिः॥४॥ इयमेवास्मै राज्यमनुमन्यते। धेनुर्दक्षिणा। इमामेव धे
नुं कुरुते। आदित्यं चरुं निर्वपति। उभयीष्वेव प्रजास्वभिषिच्यते।
दैवीषु च मानुषीषु च। वरो दक्षिणा। वरो हि राज्यꣳ समृध्यै। आग्नावै
ष्णवमेकादशकपालं निर्वपति। अग्निः सर्वा देवताः॥५॥ विष्णुर्य
ज्ञः। देवताश्चैव यज्ञं चावरुंधे। वामनो वही दक्षिणा। यद्वही। तेनो

आ॰ प्र॰
१०१

त्रेयः। यद्वा मुनः। तेन वैष्णवः समृध्यै अग्नीषोमीयमेकादशकपालं
निर्वपति। अग्नीषोमाभ्यां वा इंद्रो वृत्रमहंनिति। यदग्नीषोमीयमेका
दशकपालं निर्वपति॥६॥ वार्त्रघ्नमेव विजित्यै। हिरण्यं दक्षिणा स
मृध्यै। इंद्रो वृत्रं हत्वा। देवताभिश्चेंद्रियेण च व्यार्ध्यत। स एतमैं
द्रामेकादशकपालमपश्यत्। तं निरवपत्। तेन वै स देवताश्चें
द्रियं चावारुंध। यदैंद्रामेकादशकपालं निर्वपति। देवताश्चै
व तेनेंद्रियं च यजमानोवरुंधे। ऋषभो वहो दक्षिणा॥७॥ यद्वही

।तेनाग्नेयः।यदृषभः।तेनैंद्रः समृद्ध्यै।आग्नेयमष्टाकपालंनिर्व
पति।ऐंद्रंदधि।यदाग्नेयोभवति।अग्निर्वैयज्ञमुखं।यज्ञमुख
मेवर्द्धिंपुरस्ताद्धत्ते।यदैंद्रंदधि।२।इंद्रियमेवावरुंधे।ऋषभो
वही दक्षिणा।यद्वही।तेनाग्नेयः।यदृषभः।तेनैंद्रः समृद्ध्यै।या
वती वैप्रजा ओषधीनामकृतानामाश्नन्।ताः पराभवन्।आ
ग्नेयंभवतिकृताद्यायै।यजमानस्यापराभावाय।२।देवा
वा ओषधीष्वाजिमयुः।ताइंद्राग्नीउदजयतां।तावेतमैंद्रा

ब्रा॰ ग्र॰
१०२

२

ग्नं द्वादशकपालं निरवृणतां। यदैन्द्राग्नो भवत्युज्जित्यै। द्वादशकपा
लो भवति। द्वादश मासाः संवत्सरः। संवत्सरेणैवास्मा अन्नमवरुंधे।
वैश्वदेवश्चरुर्भवति। वैश्वदेवं वा अन्नं। अन्नमेवास्मै स्वदयति॥१०॥ ऋ
षभो वत्सो दक्षिणा समृध्यै। सौम्यं श्यामाकं चरुं निर्वपति। सोमो
वा अकृष्टपच्यस्य राजा। अकृष्टपच्यमेवास्मै स्वदयति। वासो दक्षिणा
। सौम्यं हि देवतया वासः समृध्यै। सरस्वत्यै चरुं निर्वपति। सरस्व
ते चरुं। मिथुनमेवावरुंधे। मिथुनौ गावौ दक्षिणा समृध्यै। एति वा एष

यज्ञमुखादृध्याः । योऽग्नेर्देवताया एति । अष्टावेतानि हवीꣳषि भवं
ति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । तेनैव यज्ञमुखादृध्या अग्नेर्देव
तायै नेति ॥ ३ ॥ ईयुर्निरवदयतेंशुष्टाभ्यां जुहोत्यनुमतिर्देवतानिर्व
पति वृहीदक्षिणा यद्दैंकं दध्य पराभावायस्वदयति गावौ दक्षिणास
मृद्ध्यै षट्‌चं ॥ ९ ॥ वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ताः सृष्टा न प्रा
जायंत । सोऽग्निरकामयत । अहमिमाः प्रजनयेयमिति । स प्रजापतये
शुचमदधात् । सोऽशोचत्प्रजामिच्छमानः । तस्माद्यं च प्रजा भुनक्ति यं

ब्रा॰ ग्र॰
१०३

त्रुन। तावुभौ शोचतः प्रजामिच्छमानौ। तास्त्वग्निमप्यसृजत्। ता अग्नि
रध्यैत्॥१॥ सोमो रेतोऽदधात्। सविता प्राजनयत्। सरस्वती वाचम
दधात्। पूषापोषयत्। ते वा एते त्रिः संवत्सरस्य प्रयुज्यन्ते। ये देवाः पु
ष्टिपतयः। संवत्सरो वै प्रजापतिः। संवत्सरेणैवास्मै प्रजाः प्राजनय
त्। ताः प्रजा जाता मरुतोऽघ्नन्। अस्मानपि न प्रायुक्षतेति॥२॥ स ए
तं प्रजापतिर्मारुतं सप्तकपालमपश्यत्। तं निरवपत्। ततो वै
प्रजाभ्योऽकल्पत। यन्मारुतो निरुप्यते। यज्ञस्य क्लृप्त्यै। प्रजानाम

घ्नोताया सप्तकपालो भवति। सप्तगणा वै मरुतः। गणश एवास्मै
विशं कल्पयति। स प्रजापतिरशोचत्॥३॥ याः पूर्वाः प्रजा असृक्षि
मरुतस्ता अवधिषुः। कथमपराः सृजेयेति। तस्य शुष्मांडं भू
तं निरवर्त्तत। तद्व्युदहरत्। तदपोषयत्। तत्प्राजायत। आंडस्य
वा एतद्रूपं। यदामिक्षा। यद्व्युदहरति॥४॥ प्रजा एव तद्यजमानः
पोषयति। वैश्वदेव्यामिक्षा भवति। वैश्वदेव्यो वै प्रजाः। प्रजा ए
वास्मै प्रजनयति। वाजिनमानयति। प्रजास्वेव प्रजातासु रेतो

द्धाति। द्यावापृथिव्य एककपालो भवति। प्रजा एव प्रजाता द्या
वापृथिवीभ्यामुभयतः परिगृह्णाति। देवासुराः संयत्ता आसन्
। सोग्निरब्रवीत्॥५॥ मामग्रे यजत। मया मुखेनासुराञ्जेष्यथेति
। मां द्वितीयमिति सोमोब्रवीत्। मया राज्ञा जेष्यथेति। मां तृतीयमि
ति सविता। मया प्रसूता जेष्यथेति। मां चतुर्थमिति सरस्वती। इंद्रि
यं वोहं धास्यामीति। मां पंचममिति पूषा। मया प्रतिष्ठया जेष्यथेति
॥६॥ तेग्निना मुखेनासुरानजयन्। सोमेन राज्ञा। सवित्रा प्रसूताः

नौ

। सरस्वतीन्द्रियमदधात्। पूषा प्रतिष्ठासीत्। ततो वै देवा व्यजयन्त।
यदेतानि हविंषि निरुप्यन्ते विजित्यै। उत्तरवेदिमुपवपति। पशवो वा उत्तरवेदिः। अजाता इव ह्येतर्हि पशवः ॥७॥ ऐदित्यशोचरुधुध्यरत्यब्रवीत्प्रतिष्ठयाजेष्वपेत्ये तर्हि पशवः ॥२॥ त्रिवृद्बर्हिर्भवति।
माता पिता पुत्रः। तदेव तन्मिथुनं। उल्बं गर्भो जरायु। तदेव तन्मिथुनं। त्रेधा बर्हिः संनद्धं भवति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रतितिष्ठति। एकधा पुनः संनद्धं भवति। एक इव ह्ययं लोकः ॥१॥ अ

स्मिन्नेव तेन लोके प्रतितिष्ठति। प्रसुवो भवंति। प्रथमजामेव पुष्टि
मवरुंधे। प्रथमजो वत्सो दक्षिणा समृध्यै। दृषद्राज्यं शृह्णाति। पृश्नि
र्वै दृषद्राज्यं। पृश्निमेवावरुंधे। पंचगृहीतं भवति। पांक्ता हि पश
वः। बहुरूपं भवति॥२॥ बहुरूपा हि पशवः समृध्यै। अग्निं मंथं
ति। अग्निमुखा वै प्रजापतिः प्रजा असृजत। यदग्निं मंथंति। अग्नि
मुखा एव तत्प्रजा यजमानः सृजते। नव प्रयाजा इज्यंते। नवानु
याजाः। अष्टौ हवींषि। द्वावाघारौ। द्वावाज्यभागौ॥३॥ त्रिंशत्सं

पंद्यंते। त्रिंꣳश्रदक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुंधे। यजमानो वा एकंकपालः। तेज आज्यं। यदेकंकपालमाज्येमानयति। यजमानमेव तेजसा समर्द्धयति। यजमानो वा एकंकपालः। पशव आज्यं॥ ५॥ यदेकंकपालमाज्यमानयति। यजमानमेव पशुभिः समर्धयति। यद्दत्समानयेत्। अस्माएनं पशवो भुंजंत उप ति ष्ठेरन्। यत्कुंकानयेत्। बहवएनं पशवो भुंजंत उपतिष्ठेरन्। बुकानी या विः ष्ठंकुर्यात्। बहव एवैनं पशवो भुंजंत उपतिष्ठंते। यज

आ॰ प्र॰
१०६

मानो वा एकैककपालः। यद्देकैककपालस्यावद्येत्॥५॥ यजमानस्यावद्ये
त्। उद्वा माद्येद्यजमानः। प्रवा मीयेत। सकृदेव होतव्यः। सकृदिव
हि सुवर्गो लोकः। हुत्वाभिजुहोति। यजमानमेव सुवर्गं लोकं ग
मयित्वा। तेजसा समर्द्धयति। यजमानो वा एकैककपालः। सुवर्गो
लोक आहवनीयः॥६॥ यदेकैककपालमाहवनीये जुहोति। यज
मानमेव सुवर्गं लोकं गमयति। यद्धस्तेन जुहुयात्। सुवर्गाल्लो
काद्यजमानमवविध्येत्। स्रुचा जुहोति। सुवर्गस्य लोकस्य सम

स्थे । यत्प्राङ् पद्येत । देवलोकमभिजयेत् । यद्दक्षिणा पितृलोकं । य
स्त्वत्युक् ॥७॥ रक्षांसि यज्ञं हन्युः । यदुदङ् । मनुष्यलोकमभि
जयेत् । प्रतिष्ठितो होतव्यः । एककपालं वै प्रतितिष्ठन्तं द्यावापृथि
वी अनुप्रतितिष्ठतः । द्यावापृथिवी ऋतवः । ऋतून्यज्ञः । यज्ञं यज
मानः । यजमानं प्रजाः । तस्मात्प्रतिष्ठितो होतव्यः ॥८॥ वाजिनो य
जति । अग्निर्वायुः सूर्यः । ते वै वाजिनः । तानेव तद्यजति । अथो ख
ल्वाहुः । छन्दांसि वै वाजिन इति । तान्येव तद्यजति । ऋक्सामे वा इं

न्द्रस्य हरी सोमपानौ । तयोः परिधय आधानं । वाजिनं भागधेयं ॥ ९ ॥
यदप्रहृत्य परिधीञ्जुहुयात् । अंतराधानाभ्यां घासं प्रयच्छेत् । प्रहृ
त्य परिधीञ्जुहोति । निराधानाभ्यामेव घासं प्रयच्छति । बर्हिषि विषिं
चन्वाजिनमानयति । प्रजा वै बर्हिः । रेतो वाजिनं । प्रजास्वेव रेतो दधा
ति । समुपहूय भक्षयंति । एतत्सोमपीथा ह्येते । अथो आत्मन्नेव रे
तो दधते । यजमान उत्तमो भक्षयति । पशवो वै वाजिनं । यजमान
एव पशून्प्रतिष्ठापयंति ॥ १० ॥ लोको वै कुरूपं भवत्याज्यभागौ प

रावु आज्यमवृधे होहवनीयः प्रत्यक् तस्मात्स्वतिष्ठितो होतुर्ध्यो भा
गधेयमेते चत्वारि च ॥३॥ प्रजापतिः सविता भूत्वा प्रजा असृजत ।
ता एनमत्यमन्यंत । ता अस्मादपाक्रामन् । ता वरुणो भूत्वा प्रजा वरु
णेनाग्राहयत् । ताः प्रजा वरुणगृहीताः । प्रजापतिं पुनरुपाधावंना
थमिच्छमानाः । स एतान्प्रजापतिर्वरुणप्रघासानपश्यत् । तान्निरव
पत् । तैर्वै स प्रजा वरुणपाशादमुंचत् । यद्वरुणप्रघासा निरूप्यंते
॥१॥ प्रजानामवरुणग्राहाय । तासां दक्षिणो बाहुर्न्यक्त आसीत्

।सव्यः प्रसृतः।सएतान्द्वितीयांदक्षिणतोवेदिमुद्दहन्।ततोवैसप्र
जानांदक्षिणंबाहुंप्रासारयत।यद्द्वितीयांदक्षिणतोवेदिंमुद्धंति।प्रजा
नामेवतद्यजमानोदक्षिणंबाहुंप्रसारयति।तस्माच्चातुर्मास्ययाज्य
मुष्मिंल्लोकउभयाबाहुः।युक्ताभिजितंह्यस्य।द्वयमात्राद्वेदीअ
संभिन्नेभवतः॥२॥तस्मात्सपमात्रंव्यंसौ।उत्तरस्यांवेद्यामुत्त
रवेदिमुपवपति।पशवोवाउत्तरवेदिः।पशूनेवावरुंधे।अथोय
त्पुरुषोनंतरित्यै।एतद्ब्राह्मणान्येवपंचहवींषि।अथयत्परं

ग्राग्नो भवति। प्राणापानौ वा एतौ देवानां। यदिंद्राग्नी। यदैंद्राग्नो भ
वति। ३।। प्राणापानावेवावरुंधे। ओजो बलं वा एतौ देवानां। यदिंद्रा
ग्नी। यदैंद्राग्नो भवति। ओजो बलमेवावरुंधे। मारुत्यामिक्षा भव
ति। वारुण्यामिक्षा। मेषी च मेषश्च भवतः। मिथुनादेव प्रजा वरु
णपाशान्मुंचति। लोमशौ भवतो मेध्यत्वाय। ४।। शमीपर्णान्युप
वपति। घासमेवाभ्यामपियच्छति। प्रजापतिमन्नाद्यं नोपानमत्।
स एतेन शतेध्मेन हविषान्नाद्यमवारुंध। यत्सरःशता तानि शतामिष

आ॰ गृ॰
१०९

णानि भवंति। अन्त्या धुस्या वरुध्ये। सौम्यानि वैकरीराणि। सौम्या खलु वा आकुतिर्दिवो वृष्टिं च्यावयति। यत्करीराणि भवंति। सौम्य एवाकुत्यादिवो वृष्टिमवरुंधे। का य एककपालो भवति। प्रजानां कृत्वाय। प्रतिपूरुषं करंभपात्राणि भवंति। जाता एव प्रजा वरुणपाशान्मुंचति। एकमतिरिक्तं। जनिष्यमाणा एव प्रजा वरुणपाशान्मुंचति॥५॥ निरुप्यं ते भवति मेध्यत्वाय रुंधेष॥

भवतो

द्वा॥ध॥ उत्तरस्यां वेद्यामन्यानि हविंषि सादयति। दक्षिणायां

मारुती। अपधुरमेवैनां युनक्ति। अथ यो ओजे एवासामवंहरति। तस्मा
द्दक्षिणस्य क्षत्राद्युविशोन्यतोपक्रमिणीः। मारुत्या पूर्वया प्रचरति।
अन्तमेवावयजते। वारुण्योत्तरया। अंतत एव वरुणमवयजते। ब
र्हे वाध्वर्युः करोति॥ १॥ तत्वेति प्रस्याता करोति। तस्माद्यछ्रेयान्करोति
। न त्वा पीयान्करोति। पत्नीं वाचयति। मेध्यामेवैनां करोति। अथोतप
एवैनामुपनयति। यज्जारं संतं न प्रब्रूयात्। प्रियं ज्ञातिं रुंध्यात्। अ
सौ मे जार इति निर्दिशेत्। निर्हिश्येवैनं वरुणपाशेन ग्राहयति॥ २॥ प्र

घास्यान्ह वा मह इति पत्नीमुदानयति। अकर्तैवैनां। यत्पत्नीपुरोनु
वाक्यामनुब्रूयात्। निर्वीर्यो यजमानस्यात्। यजमानोन्वाह। आत्मं
न्नेव वीर्यं धत्ते। उभौ याज्यां सवीर्यत्वाय। यज्ञामेयदरण्यइत्याह। य
थोदितमेव वरुणमवयजते। यजमानदेवत्यो वा आहवनीयः॥ ३॥
भ्रातृव्यदेवत्यो दक्षिणः। यदाहवनीये जुहुयात्। यजमानं वरुण
पाशेन ग्राहयेत्। दक्षिणे जुहोति। भ्रातृव्यमेव वरुणपाशेन ग्रा
हयति। स्रुपैण जुहोति। अन्यमेव वरुणमवयजते। शीर्षन्नधिनिधा

यज्जुहोति। शीर्षत एव वरुणमवयजते। प्रत्यङ्ति॰ष्ठंजुहोति॥४॥ प्र
त्यङ्ङे॰व वरुणपाशान्निर्मुच्यते। अक्रन्कर्म कर्मकृत इत्याह। देवानृ
णंनिरवदाय। अनृणा गृहानुपप्रेतेति वावैतदाह। वरुणगृहीतं
वा एतद्यज्ञस्य। यद्यजुषा गृहीतस्यातिरिच्यते। तुषाश्च निष्कासश्च
। तुषैश्च निष्कासेन चावभृथमवैति। वरुणगृहीतेनैव वरुणमव
यजते। अपोऽवभृथमवैति॥५॥ अप्सु वै वरुणः। साक्षादेव वरुणम
वयजते। प्रतियुतो वरुणस्य पाश इत्याह। वरुणपाशादेव निर्मुच्य

ते। अग्र एतीषुमायन्ति। वरुणस्यान्तर्हित्यै। एधोऽस्येधिषीमहीत्याह। समिधैवाग्निं नमस्यन्त उपायन्ति। तेजोऽसि तेजो मयि धेहीत्याह। तेज एवात्मन्धत्ते॥४॥ करोति। आह यत्याह वनो पुरिष्ठं जुहोत्यपो वभृथमवैतिधत्ते॥५॥ देवासुराः संयत्ता आसन्। सोऽग्निरब्रवीत्। ममेयमनीकवती तनूः। तां प्रीणीत। अथासुरानभिभविष्यथेति। ते देवा अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निरवपन्। सोऽग्निरनीकवान्स्वेन भागधेयेन प्रीतः। चतुर्धानीकान्यजनयत।

ततो देवा अभवन् । परासुराः ॥ १ ॥ यदग्नयेनीकवते पुरोडाशम
ष्टाकपालं निर्वपति । अग्निमेवानीकवंतं स्वेन भागधेयेन प्रीणा
ति । सोग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः । चतुर्धानीकानि जनय
ते । असौ वा आदित्योग्निरनीकवान् । तस्य रश्मयोनीकानि । साकं
सूर्येणोद्यतानिर्वपति । साक्षादेवास्मा अनीकानि जनयति । ते सुराः
पराजिता यंतः । द्यावापृथिवी उपाश्रयन् ॥ २ ॥ ते देवा मरुद्भ्यः सांत
पनेभ्यः चरुं निरवपन् । तां द्यावापृथिवीभ्यामेवोभयतः समंतप

श्रा॰ ष्ठ॰
११२

न्नायन्मरुद्भ्यः सांतपनेभ्यः श्चरुं निर्वपति। द्यावापृथिवीभ्यामेवत उ
भयतो यजमानो भ्रातृव्यान्त्संतपति। मध्यंदिने निर्वपति। तर्हि हि तेक्ष्णि
ष्ठं तपति। चरुर्भवति। सर्वत एवैनान्त्संतपति। ते देवाश्वो विजयिनः
संतः। सर्वासां दुग्धे गृहमेधीयं चरुं निरवपन्॥ ३॥ आशिता एवाद्यो
पवसाम। कस्यवाहेदं। कस्यं वाश्वो भवितेति। स कृतो भवत्। तस्मा
कुतस्य नाम्नन्। नहि देवा अकृतस्याश्नंति। ते ब्रुवन्। कस्मा इमं हो
ष्याम इति। मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन्। तं मरुद्भ्यो गृहमेधिभ्यो

जुहवुः॥४॥ ततो देवा अभवन्। परासुराः। यस्यैवं विदुषो मरुद्भ्यो गृ

हमेधिभ्यो गृहे जुह्वति। भवत्यात्मना। परास्य भ्रातृव्यो भवति। यद्वै यज्ञ

स्य पाकत्रा क्रियते। पशव्यं तत्। पाकत्रा वा एतत्क्रियते। यन्नेध्मा बर्हि

र्भवति। न सामिधेनीरन्वाह॥५॥ न प्रयाजा इज्यन्ते। नानूयाजाः। य ए

वं वेद। पशुमान्भवति। आज्यभागौ यजति। यज्ञस्यैव चक्षुषी नान्तरे

ति। मरुतो गृहमेधिनो यजति। भागधेयेनैवैनान्त्समर्धयति। अग्नि

ꣳ स्विष्टकृतं यजति प्रतिष्ठित्यै। इडान्तो भवति। पशवो वा इडा। पशु

श्रा. प्र.
१२३

धुवो परिष्ठात्स्वतितिष्ठति॥६॥असुरा अश्रयन्गृहमेधियं चरुं निरव
पन्नजुहवुरन्वाहेडं तोभंतिदेवं॥६॥यस्त्वीगृहमेधीयस्याश्रीयात्
गृहमेध्येव स्यात्। विखैस्य युक्तक्रध्येत। यन्नाश्रीयात्। अगृहमेधी स्या
त्। नास्ये युक्तोव्यर्ध्येत। व्रतिवेरां पच्येयुः। तस्याश्रीयात्। गृहमेध्येव
भवति। नास्ये युक्तोव्यर्ध्यते॥९॥ते देवा गृहमेधीयेनेष्ट्वा। आशिता अ
भवन्। आंजंताभ्यंजत। अनुवत्सानवासयन्। तेभ्यः सुराः क्षुधंभ्रा
हिण्वन्। सा देवेषु लोकमविंत्वा। असुरान्पुनरगच्छत्। गृहमेधीयेन

१६३

ति। तानिंद्रो निहितभागउपावर्त्तत।२

ष्वा। आशिता भवंति। आंजतेऽभ्यंजते॥२॥ अनु वत्सान्वासयंति। भ्रा
तृव्यायैव तद्यजमानः क्षुधं प्रहिणोति। ते देवा गृहमेधीयेनेष्ट्वा। इंद्रा
य निष्कासं न्यदधुः। अस्मानेव स्वं इंद्रो निहितभागउपावर्त्तितो। गृहमे
धीयेनेष्ट्वा। इंद्राय निष्कासं निदध्यात्। इंद्र एवैनं निहितभागउपा
वर्तते। गार्हपत्ये जुहोति॥३॥ भागधेयेनैवैनं समर्धयति। ऋषभ
माह्वयति। वषट्कार एवास्य सः। अथो इंद्रियमेव तद्वीर्यं यजमानो भ्रा
तृव्यस्य वृंक्ते। इंद्रो वृत्रं हत्वा। परां परावतमगच्छत्। अपाराधमिति

आ. प्र.
११.५

मन्यमानः। सोऽब्रवीत्। क इदं वेदिष्यतीति। ते ब्रुवन्मरुतो वरं वृणामहे॥४॥ अथ वयं वेदाम। अस्मभ्यमेव ब्राह्मणं हविर्निरुप्याता इति। तदेनमध्येक्रीडन्। तत्क्रीडिनां क्रीडित्वं। यन्मरुद्भ्यः क्रीडिभ्यः प्रथमं हविर्निरुप्यते विजित्यै। साकं सूर्येणोद्यता निर्वपति। एतस्मिन्वै लोक इन्द्रो वृत्रमहन्त्समर्ध्यौ। एतद्ब्राह्मणान्येव पंच हवींषि। एतद्ब्राह्मण ऐन्द्राग्नः। अथैष ऐन्द्रश्चरुर्भवति॥५॥ उद्धारं वा एतमिन्द्र उदहरत। वृत्रं हत्वा। अन्यासु देवतास्वधि। यदेष ऐन्द्रश्चरुर्भवति। उद्धा

रमेवैतं यजमानमुद्धरति। अन्नास्वु प्रजास्वाधीत्वेभ्यः कर्मण एकैकपा
लोऽभवति। विश्वान्येवैतेन कर्माणि यजमानोऽवरुन्धे॥ ६॥ ऋध्यते भ्यं
जते जुहोति हिरण्मयं हि भवत्यहोचे॥ ७॥ वैश्वदेवेन वै प्रजापतिः प्र
जा असृजत। ता वरुणप्रघासैर्वरुणपाशादमुंचत्। साकमेधैः प्र
त्यस्थापयत्। त्र्यंबकै रुद्रं निरवाहयत्। पितृयज्ञेन सुवर्गं लोकमग
मयत्। यद्वैश्वदेवेन यजते। प्रजा एव तद्यजमानः सृजते। ता वरुण
प्रघासैर्वरुणपाशान्मुंचति। साकमेधैः प्रतिष्ठापयति। त्र्यंबकै रुद्रं

ब्रा॰ष्व॰
११५

निरवदयते ॥१॥ पितृयज्ञेन सुवर्गं लोकं गमयति। दक्षिणतः प्राचीना
वीती निर्वपति। दक्षिणावृद्धि पितॄणां। अनादृत्य तत्। उत्तरत एवोपवी
य निर्वपेत्। उभये हि देवाश्च पितरश्चेज्यंते। अथो यदेव दक्षिणार्धे
धिश्रयति। तेन दक्षिणावृत्। सोमाय पितृमते पुरोडाशं षट्कपालं नि
र्वपति। संवत्सरो वै सोमः पितृमान्॥२॥ संवत्सरमेव प्रीणाति। पितृ
भ्यो बर्हिषद्भ्यो धानाः। मासा वै पितरो बर्हिषदः। मासानेव प्रीणाति। य
स्मिन्वा ऋतौ पुरुषः प्रमीयते। सोस्यामुष्मिंलोके भवति। बहुरूपा धा

नाभवंति। अहोरात्राणांमुभिजित्यै। पितृभ्योग्निष्वात्तेभ्योमंथं।
अर्धमासावैपितरोग्निष्वात्ताः॥३॥अर्धमासानेवप्रीणाति। अभि
वान्यायैदुग्धेभवति। साहिपितृदेवत्यंदुहे। यत्पूर्णं। मनुष्याणां
। उपर्युधोदेवानां। अर्द्धःपितृणां। अर्धउपमंथयति। अर्धोहिपितृ
णां। एकयोपमंथयति॥४॥एकाहिपितृणां। दक्षिणोपमंथयति। दक्षि
णावृद्धिपितृणां। अनारभ्योपमंथयति। तद्धिपितृनाछति। इमांदि
शं वेदिमुद्धंति। उभयेहिदेवाश्चपितरश्चेज्यंते। चतुस्रक्तिर्भवति।

सर्वांस्तुदिशः पितरः। अखाता भवति ॥५॥ खाता हि देवानां मध्यतो
ग्निराधीयते। अन्ततो हि देवानामाधीयते। वर्षीयान्निध्माद्ध्माद्भवति
व्याहृत्यै। परिश्रयति। अन्तर्हितो हि पितृलोको मनुष्यलोकात्। यस्स
रुषि हि नं। तद्देवानां। यदन्तरा। तन्मनुष्याणां ॥६॥ यत्समूलं तत्पि
तृणां। समूलं बर्हिर्भवति व्यावृत्त्यै। दक्षिणा स्तृणाति। दक्षिणावृद्धि
पितृणां। त्रिः पर्येति। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति। त्रि
: पुनः पर्येति। षट्संपद्यन्ते ॥७॥ षड्वा ऋतवः। ऋतूनेव प्रीणाति। य

अस्तरं यजुषा गृह्णीयात् । प्रमायुको यजमानस्स्यात् । यन्न गृह्णीया
त् । अनायतनस्स्यात् । तूष्णीमेव न्यस्येत् । न प्रमायुको भवति । नाना
यतनः । पत्नीन्परिधीन्परिदध्यात् ॥ २ ॥ मृत्युना यजमानं परिगृह्णीया
त् । यन्न परिदध्यात् । रक्षाꣳसि यज्ञꣳ हन्युः । द्वौ परिधी परिदधाति ।
रक्षसामपहत्यै । अथो मृत्योरेव यजमानमुत्सृजति । यत्त्रीणि त्रीणि
हवीꣳष्युदाहरेयुः । त्रयस्त्रय एषाꣳ साकं प्रमीयेरन् । एकैकमनूची
नान्युदाहरन्ति । एकैक एवैषामन्वञ्चः प्रमीयते । कशिपुकशिपूर्वाय

।उपबर्हणमुपबर्हण्याय।आंजनमांजन्याय।अभ्यंजनमभ्यंजन्याय।यथाभागमेवैनान्प्रीणाति॥९॥निरवदयते पितृमाननि घ्रात्वा एकयोर्पमंथत्यखाता भवति मनुष्याणां पर्युंते परिदधान्मीयते पंचेच॥१०॥अग्नयेदेवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहित्यौत्तभयेहिदेवाश्चपितरश्चोज्यंते।एकामन्वाह।एकाहिपितृणां।निरवाह।त्रिर्हिदेवानां।अघाराघारयति।यत्तपरुषोरनंतरित्यै।नार्षेयंवृणीते।नहोतारं॥११॥यदार्षेयंवृणीत।यद्धोतारं।प्रमायुकोयजमा

नः स्यात्। प्रमायुको होता। तस्मान्न र्हंणीते। यजमानस्य होतुर्गोपीथा
य। अपबर्हिषः प्रयाजान्यजति। प्रजा वै बर्हिः। प्रजा एव प्रमयोरुत्सृ
जति। आज्यभागौ यजति। २। यज्ञस्यैव चक्षुषी नांतरेति। प्राचीना
वीती सोमं यजति। पितृदेवत्या ह्येषाहुतिः। पंचकृत्वोवद्यति। पंच
ह्येता देवताः। द्वे पुरोनुवाक्ये। याज्या देवता वषट्कारः। ता एव प्रीणा
ति। संततमवद्यति। ३। ऋतूनां संतत्यै। प्रै वैभ्यः पूर्वया पुरोनुवा
क्ययाह। प्रणयति द्वितीयया। गमयति याज्यया। तृतीये वा इतो लो

केपितरः। अन्त्रहए वैनान्पूर्वया पुरोनुवाक्यया त्यानयति। रात्रियेद्धितीयया। ऐवैनान्याज्यया गमयति। दक्षिणतो वृहाय। उद्दंङ्‌तिक्रामति आर्हत्यै॥४॥ आस्वधेत्या श्रावयति। अस्तुस्वधेति प्रत्याश्रावयति। स्वधानम इति वषट्करोति। स्वधाकारो हि पितृणां। सोमम्प्रथमग्ने यजति। सोमप्रयाजा हि पितरः। सोमं पितृमन्तं यजति। संवत्सरो वै सोमः पितृमान्। संवत्सरमेव तद्यजति। पितॄन्बर्हिषदो यजति॥५॥ ये वै यज्वानः। ते पितरो बर्हिषदः। तानेव तद्यजति। पितॄनग्निष्वात्तान्यजति।

ये वा अयज्वानो गृहमेधिनः। ते पितरोऽग्निष्वात्ताः। तानेव तद्यजति
। अग्निं कव्यवाहनं यजति। य एव पितृणामग्निः। तमेव तद्यजति॥६॥
अथो यथाग्निं स्विष्टकृतं यजेति। तादृगेव तत्। एतन्न्वेतद्यचेत्वा — स
मन्विति तिसृषु स्रक्तीषु निदधाति। तस्मादा तृतीयात्पुरुषान्नाम न
तर — गृह्णंति। एतावंतो हीज्यंते। अत्र पितरो यथाभागं मंदध्वमित्याहाक्री
काहि पितरः। उदंचो निष्क्रामंति। एषा वै मनुष्याणां दिक्। स्वामेव त
द्दिशमनु निष्क्रामंति॥७॥ आहवनीयमुपतिष्ठंते। न्येवास्मै तद्ध्नुवते।

१.प्र.
११९

यत्सत्याहवनीये। अथान्यत्रचरंति। आतमितोरुपतिष्ठंते। अग्निमेवोपद्रष्टारंकृत्वा। प्रितंनिरवद्यंते। अंतंवाएतेप्राणानांगच्छंति। यआतमितोरुपतिष्ठंते। सुसंदृशंत्वावयमित्याह॥२८॥ प्राणोवैसुसंदृक्। प्राणमेवात्मंदधते। योजान्विंद्रतेहरिइत्याह। प्राणमेवपुनरयुक्त। अक्षन्नमीमदंतेतिगार्हपत्यमुपतिष्ठंते। अक्षन्नमीमदंताह्यवोपतिष्ठामहइतिवावैतदाह। अमीमदंतपितरःसोम्याइत्यभिप्रपद्यंते। अमीमदंतपितरोयत्वाभिप्रपद्यामहइतिवावैतदाह। अपःपरि

११९

षिंचति। मार्जयन्त्येवैनान्॥९॥ अथोत्तरं पर्यस्येव। तत्पश्यति प्रजया पशुभिः॥ य एवं वेद। अप बर्हिषावनूयाजौ यजति। प्रजा वै बर्हिः। प्रजा एव मृत्योरुत्सृजति। चतुरः प्रयाजान्यजति। द्वावनूयाजौ। षट् संपद्यंते। षड्वा ऋतवः॥१०॥ ऋतूनेव प्रीणाति। न पत्न्यन्वास्ते। न संयाजयंति। यत्पत्न्यन्वासीत। यत्संयाजयेयुः। प्रमायुका स्यात्। तस्मान्नान्वास्ते। न संयाजयंति पत्न्या गोपीथाय॥११॥ होतारमाज्यभागौ यजति। संततमवद्यति व्याहृत्ये बर्हिषद्दो यजति तमेव तद्यजत्यनु निष्क्रामं

१.ख.
१२०

त्या देवा नान्वतक्षो न ववच॥ ९॥ प्रतिपूरुषमेककपालान्निर्वपति। जा
ता एव प्रजा रुद्रान्निरवदयते। एकमतिरिक्तं। जनिष्यमाणा एव प्र
जा रुद्रान्निरवदयते। एककपाला भवंति। एकधैव रुद्रं निरवदय
ते। नाभिघारयति। यदभिघारयेत्। अंतरवचारिणꣳ रुद्रं कुर्या
त्। एकोल्मुकेन यंति॥ १॥ तद्धि रुद्रस्य भागधेयं। इमां दिशं यंति। ए
षा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते। रुद्रो वा अप
शुका या आहुत्यै नातिष्ठत। असौ ते पशुरिति निर्दिशेद्यं द्विष्यात्

। यमेव द्वेष्टि। तमस्मै पशुनिर्दिशति। यदि न द्विष्यात्। आखुस्ते पशु
रिति ब्रूयात्॥ ५॥ न ग्राम्यान्पशून्हिनस्ति। नारण्यान्। चतुष्पथे जुहो
ति। एष वा अग्नीनां पड्वीशो नाम। अग्निवत्येव जुहोति। मध्यमेन प
र्णेन जुहोति। स्रुग्घ्येषा। अथो खलु। अंतममेवैव होतव्यं। अंतत एव
रुद्रं निरवदयते॥ ६॥ एष ते रुद्र भागः सह स्वस्राम्बिकयेत्याह।
शरद्वा अस्याम्बिका स्वसा। तया वा एष हिनस्ति। यं हिनस्ति। तयैवैन
ं सह शमयति। भेषजं गव इत्याह। यावंत एव ग्राम्याः पशवः। त

भ्यो भेषजं करोति। अवांब रुद्रमदिमहीत्याह। आशिषमेवैतामाशास्ते
॥४॥ त्र्यंबकं यजामह इत्याह। मृत्योर्मुक्षीय मामृतादिति वावैतदाह
। उत्किरंति। भगस्य लीप्संते। मूते कृत्वासजंति। यथा जनं यते वसं क
रोति। तादृगेव तत्। एष ते रुद्र भाग इत्याह निरवत्त्यै। अप्रतीक्षमा
यंति। अपः परिषिंचति। रुद्रस्यांतर्हित्यै। प्र वा एते स्माल्लोकाच्यवं
ते। ये त्र्यंबकैश्चरंति। आदित्यं चरुं पुनरेत्य निर्वपति। इयं वा अदि
तिः। अस्यामेव प्रतितिष्ठंति॥५॥ यं तिब्रूयान्निरवंदयते शास्तसिं

चतिष्ठद्॥१३॥ अनुमत्यै विश्वेदेवेन ताः सृष्टाः । स्विवस्त्रुजापतिः सवि
तोत्तरस्यां देवासुराः सोग्निर्यत्यत्नी विश्वेदेवेनुतावरुणप्रघासैरग्न
येदेवेभ्यः प्रतिपुरुषं दत्तं ॥१०॥ अनुमत्यैः प्रथमजो वृत्सो वकुरू
पाहि पुरा वृत्तस्मात्स्वपमान्नं यदग्नयेनीकवत उद्धारं वा अग्नये दे
वेभ्यः प्रतिपुरुषं पंचं सप्ततिः ॥७५॥ ॥हरिः ॐ॥ ॥एतद्ब्राह्मणा
न्येव पंच हवींषि । अथैंद्रायुशुनासीराय पुरोडाशं द्वादशकपालं
निर्वपति । संवत्सरो वा इन्द्रः शुनासीरः ॥ संवत्सरेणैवास्मा अन्नम

वेरुंधे। वायव्यं पयो भवति। वायुर्वै वृष्ट्यै प्रदापयिता। स एवास्मै वृष्टिं प्र
दापयति। सौर्य एककपालो भवति। सूर्येण वा अमुष्मिँल्लोके वृष्टिर्धृता
। स एवास्मै वृष्टिं नियच्छति॥१॥ द्वादशगवं सीरं दक्षिणा समृद्ध्यै। देवा
सुराः संयत्ता आसन्। ते देवा अग्निमब्रुवन्। त्वया वीरेणासुरानभि
भवामेति। सोऽब्रवीत्। त्रेधाहमात्मानं विकरिष्य इति। स त्रेधात्मानं व्य
कुरुत। अग्निं तृतीयं। रुद्रं तृतीयं। वरुणं तृतीयं॥२॥ सोऽब्रवीत्। क इ
दं तुरीयमिति। अहमितीन्द्रोऽब्रवीत्। सं तु सृजावहा इति। तौ समसृजेतां

तुरी

। स इंद्रस्तुरीयमभवत् । यदिंद्रस्तुरीयमभवत् । तदिंद्रतुरीयस्येंद्रतुरी
यत्वं । ततो वै देवा व्यजयंत । यदिंद्रतुरीयं निरुप्यते विजित्यै ॥ ३ ॥ रोहिणी
धेनुर्दक्षिणा । यद्रोहिणी । तेनाग्नेयी । यद्गौः । तेन रौद्री । यद्धेनुः । तेनैंद्री । य
त्स्त्री सती हंता । तेन वारुणी समृद्ध्यै । प्रजापतिर्यज्ञमसृजत ॥ ४ ॥ तं सृ
ष्टं रक्षांस्यजिघांसन् । स एताः प्रजापतिरात्मनो देवता निरमिमीत
। ताभिर्वै स दिग्भ्यो रक्षांसि प्राणुदत । यत्संचावत्र्यं जुहोति । दिग्भ्य ए
व तद्यजमानो रक्षांसि प्रणुदते । समूढं रक्षः संदग्धं रक्ष इत्याहार

क्षाꣳस्येव संदहति। अग्नये रक्षोघ्ने स्वाहेत्याह। देवताभ्य एव विजिग्या
नाभ्यो भागधेयं करोति। ब्रह्मवादिनो वदन्ति। अत्र वाव पोदक्षिणा सम्मध्ये॥५॥ इंद्रो वृ
त्रꣳहत्वा। असुरान्पराभाव्य। नमुचिमासुरं नालभत। तꣳशच्याग्र
हात्। तौ समलभेतां। सोऽस्मादभि शुनतरो भवत्। सोऽब्रवीत्। संधा
ꣳसंदधावहै। अथ त्वावसृक्ष्यामि। न मा शुष्केण नार्द्रेण हनः॥६॥ न
दिवा न नक्तमिति। स एतमपां फेनमसिंचत्। न वा एष शुष्को नार्द्रो
व्युष्टासीत्। अनुदितः सूर्यः। न वा एतद्दिवा न नक्तं। तस्यैतस्मिन्लो

के।अपांफेनेननमुचेःशिरउदवर्त्तयत्।तद्वैनमन्ववर्त्तत।मित्रद्रुगिति
॥७॥सएतानपामार्गानजनयत्।तानजुहोत्।तेवैसरक्षांस्य
पाहत।यदपामार्गहोमोभवति।रक्षसामपहत्यै।एकोल्मुकेनयं
ति।तद्धिरक्षसांभागधेयं।इमांदिशंयंति।एषावैरक्षसांदिक्।स्वाया
मेवदिशिरक्षांसिहंति।॥८॥स्वकृतइरिणेजुहोतिप्रदरेवा।एतद्वै
रक्षसामायतनं।स्वएवायतनेरक्षांसिहंति।पुर्णमयेनस्रुवेण
जुहोति।ब्रह्मवैपुर्णः।ब्रह्मणैवरक्षांसिहंति।देवस्यत्वासवितुः

प्रसुव इत्याह। सवितृप्रसूत एव रक्षाꣳसि हन्ति। हतꣳ रक्षो वधिष्म रक्ष इत्याह। रक्षसाꣳ स्तृत्यै। यद्वस्ते तद्दक्षिणा निरवत्यै। अप्रतीक्षमायन्ति। रक्षसामन्तर्हित्यै॥ ९॥ यद्छन्ति वरुणं तन्ती यं विजित्या असृजत स मध्येऽहनो मित्रद्रुगिति हन्ति स्तत्यैत्री णि च॥ १॥ धात्रे पुरोडाशं द्वादशकपालं निर्वपति। संवत्सरो वै धाता। संवत्सरेणैवास्मै प्रजाः प्रजनयति। अन्वेवास्मा अनुमतिर्मन्यते। राते राका। प्र सिनीवाली जनयति। प्रजास्वेव प्रजातासु कुह्वा वाचं दधाति। मिथुनौ गा

वो दक्षिणा समृध्यै। आग्नावैष्णवमेकादशकपालं निर्वपति। ऐंद्रावै
ष्णवमेकादशकपालं॥१॥ वैष्णवं त्रिकपालं। वीर्यं वा अग्निः। वीर्यमिं
द्रः। वीर्यं विष्णुः। प्रजा एव प्रजाता वीर्ये प्रतिष्ठापयति। तस्मात्प्रजा वी
र्यावतीः। वामन ऋषभो वही दक्षिणा। यद्वही। तेनाग्नेयः। यदृषभः॥
२॥ तेनैंद्रः। यद्वामनः। तेन वैष्णवः समृध्यै। अग्नीषोमीयमेकादशक
पालं निर्वपति। ऐंद्रासौमीयमेकादशकपालं। सौम्यं चरुं। सोमो वै रेतो
धाः। अग्निः प्रजानां प्रजनयिता। वृद्धानामिंद्रः प्रदापयिता। सोमेन

वास्मै रेतो दधाति॥३॥ अग्निः प्रजां प्रजनयति। वृद्धामिंद्रः प्रयच्छति।
व्रभुर्दक्षिणा समृध्यै। सोमापौष्णं चरुं निर्वपति। ऐंद्रापौष्णं चरुं।
सोमो वै रेतोधाः। पूषा पशूनां प्रजनयिता। वृद्धानामिंद्रः प्रदापयिता
। सोम एवास्मै रेतो दधाति। पूषा पशून्प्रजनयति॥४॥ वृद्धानिंद्रः प्रयच्छ
ति। पौष्णश्चरुर्भवति। इयं वै पूषा। अस्यामेव प्रतितिष्ठति। श्यामो दक्षि
णा समृध्यै। बुकु वै पुरुषो मेध्यमुपगच्छति। वैश्वानरं द्वादशकपालं
निर्वपति। संवत्सरो वा अग्निर्वैश्वानरः। संवत्सरेणैवैनं स्वदयति

।हिरण्यंदक्षिणा॥४॥पवित्रं वै हिरण्यं। पुनात्येवैनं। बभ्रु वै राजन्यो
न्नं तं करोति। उपजाम्येहरति। जिनाति ब्राह्मणं। वदत्यन्नं तं। अन्नं
ते खलु वै क्रियमाणे वरुणो गृह्णाति। वारुणं यवमयं चरुं निर्वपति
। वरुणपाशादेवैनं मुंचति। अश्वो दक्षिणा। वारुणो हि देवतयाश्व
: समृध्यै॥६॥ऐंद्रा वै छ्रुवमेकादशकपालं यदेषभोदधाति पूषाप
श्रूभ्यजनयति हिरण्यं दक्षिणा दक्षिणे। कं च॥२॥रत्निनामेतानि ह
विंषि भवंति। एते वै राष्ट्रस्य प्रदातारः। एते पादातारः। य एव राष्ट्र

ब्रा॰ भ॰
१२६

स्यं प्रदातारः । ये पादातारः । त एवास्मै राष्ट्रं प्रयंति । राष्ट्रमेव भवति । ६
यत्संमाहृत्यं निर्वपेत् । अरत्निं नस्युः । यथापूर्वं निर्वपति रत्नित्वाय ।
१ । यत्सद्यो निर्वपेत् । यावतीमेकेन हविषाशिषमवरुंधे । तावतीम
वरुंधीत । अन्वहं निर्वपति । भूयसीमेवाशिषमवरुंधे । भूयसो यज्ञ
क्रतूनुपैति । बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे । मुखत एवास्मै
ब्रह्म संश्यति । अथो ब्रह्मन्नेव क्षत्रमन्वारंभयति । शितिपृष्ठो दक्षि
णा समृध्ये । २ । ऐंद्रमेकादशकपालं राजन्यस्य गृहे । इंद्रियमेवा

वरुंधे। ऋषभो दक्षिणा समृद्ध्यै। आदित्यं चरुं महिष्यै गृहे। इयं वा अ-
दितिः। अस्यामेव प्रतितिष्ठति। धेनुर्दक्षिणा समृद्ध्यै। भगाय चरुं वा-
वातायै गृहे। भगमेवास्मिन्दधाति। विचित्रगर्भा पष्ठौही दक्षिणा स-
मृद्ध्यै॥३॥ नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं
। पाप्मानमेव निर्ऋतिं निरवदयते। कृष्णा कूटा दक्षिणा समृद्ध्यै। आ-
ग्नेयमष्टाकपालꣳ सेनान्यो गृहे। सेनामेवास्य सꣳश्यति। हिरण्यं द-
क्षिणा समृद्ध्यै। वारुणं दशकपालꣳ सूतस्य गृहे। वरुणसवमेवा

ा.ब्रा.
१२७

वरुंधे।महान्निरष्टोदक्षिणासमृध्यै।मारुतंसप्तकपालंग्रामण्योगृहे
॥४॥अन्नंवैमरुतः।अन्नमेवावरुंधे।पृश्निर्दक्षिणासमृध्यै।सावित्रंद्वा
दशकपालंक्षत्तुर्गृहेप्रसूत्यै।उपध्वस्तोदक्षिणासमृध्यै।आश्विनंद्वि
कपालंसंग्रहीतुर्गृहे।अश्विनौवैदेवानांभिषजौ।ताभ्यामेवास्मैभे
षजंकरोति।सवात्यौदक्षिणासमृध्यै।पौष्णंचरुंभागदुघस्यगृहे॥
५॥अन्नंवैपूषा।अन्नमेवावरुंधे।श्यामोदक्षिणासमृध्यै।रौद्रंगावी
धुकंचरुमक्षावापस्यगृहे।अंततएवरुद्रंनिरवदयते।राजसूय

१२९

रोदक्षिणा समध्ये। द्वादशैतानि हवींषि भवंति। द्वादश मासाः संवत्स
रः। संवत्सरेणैवास्मै राष्ट्रमवरुंधे। राष्ट्रमेव भवति। ६। यन्न प्रतिनि
र्वपेत्। रत्निन आशिषोऽवरुंधीरन्। प्रतिनिर्वपति। इंद्राय सुत्राम्णे
पुरोडाशमेकादशकपालं। इंद्रायांहोमुचे। आशिष एवावरुंधे।
अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्याह। आशिषमेवैता
माशास्ते। मैत्राबार्हस्पत्यं भवति। श्वेतायै श्वेतवत्सायै दुग्धे। ७। बा
र्हस्पत्ये मैत्रमपिदधाति। ब्रह्म चैवास्मै क्षत्रं च समीची दधाति। अथो।

ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति। बार्हस्पत्येन पूर्वेण प्रचरति। मुखत ए
वास्मै ब्रह्म संश्यति। अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति। स्वयंकृ
ता वेदिर्भवति। स्वयंदिनं बर्हिः। स्वयंकृत इध्मः। अनभिजितस्याभि
जित्यै। तस्माद्ध तामरण्यमभिजितं। सैव प्रसृतात्प्रेतवत्सा दक्षिणास
मृध्यै॥ ८॥ एतानि वाव सर्वाणि पशोर्दक्षिणा समृध्यै या प्राप्नोति गृहे भा
ग दुघस्य गृहे भवति दुग्धे भिजित्यै देव॥ ॥ देवसुवामेतानि हवींषि
भवंति। एतावंतो वै देवानां सवाः। त एवास्मै सवान्प्रयच्छंति। त

एनꣳ सुवंते। अग्निरेवैनं गृहपतीनाꣳ सुवते। सोमो वनस्पतीनां।
रुद्रः पशूनां। बृहस्पतिर्वाचां। इंद्रो ज्येष्ठानां। मित्रः सत्यानां॥ १॥ वरु
णो धर्मपतीनां। एतदेव सर्वं भवति। सविता त्वा प्रसवानाꣳ सुवता
मिति हस्तं गृह्णाति प्रसूत्यै। ये देवा देवसुवः स्थेत्याह। यथायजुरेवै
तत्। महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह।
आशिषमेवैतामाशास्ते। एष वो भरता राजा सोमोऽस्माकं ब्राह्मणा
नाꣳ राजेत्याह। तस्मात्सोमराजानो ब्राह्मणाः। प्रति त्यन्नाम राज्य

मं धापयीत्याह॥१०॥राज्य मेवास्मिन्प्रतिदधाति। स्वांतनुवं वरुणोअशि
श्रेरित्याह। वरुणप्रसव मेवावरुंधे। मुंचैमित्रस्यब्रतत्याह। मुंचिमेवे
नंब्रत्यं करोति। अमन्महिमहतऋतस्यनामेत्याह। मनुतएवैनं। स
वैब्राता वरुणस्याभूवन्नित्याह। सर्वब्रातमेवैनं करोति। विमित्रए
वैररातिमतारीदित्याह॥११॥अरातिमेवैनं तारयति। असूषुदंत
यज्ञियाऋतेनेत्याह। स्वदयत्येवैनं। व्युत्रितोजरिमाणंनआनडित्या
ह। आयुरेवास्मिन्दधाति। द्वाभ्यांविमंचति। द्विपाद्यजमानः प्रतिष्ठित्यै

।अग्नीषोमीयस्य चैकादशकपालस्य देवसुवां च हविषामग्नये स्वि
ष्टकृते समवद्यति। देवताभिरेवैनमुभयतः परिगृह्णाति। विष्णुक्र
मान्क्रमते। विष्णुरेव भूत्वेमांल्लोकानभिजयति॥४॥ सत्यानामधायी
त्सोहतारा इत्याह क्रमत एकं च॥४॥ अर्धेतस्येति जुहोति। आक्र
न्त्यैवैनानिष्क्रीय गृह्णाति। अथो हविष्कृतानामेवाभिघृतानां गृह्णा
ति। बर्हतीनां गृह्णाति। एता वा अपां राष्ट्रं। राष्ट्रमेवास्मै गृह्णाति।
अथो श्रियमेवैनमभिवहन्ति। अपांपतिरसीत्याह। मिथुनमेवाकः

।घोषांसुमिरित्याह॥१॥सुरभिमन्तमेवैनंकरोति।वृषसेनोसीत्याह।से
नामेवास्यसंश्यति।अशितस्येत्याह।एतावाअपांविराट्।विराजमे
वास्मैपर्यूहति।मरुतामोजस्येत्याह।अन्नंवैमरुतः।अन्नमेवाव
रुंधे।सूर्यवर्चसस्येत्याह॥२॥सूर्यमेववर्चस्यंकः।सूर्यत्वचस
स्येत्याह।सयंवाएततपद्वर्षति।अन्तंयदातपतिवर्षति।स
त्यानृतेएवावरुंधे।नैनंसत्यानृतेउदितेहिंस्तः।यएवंवेद
।मांदास्येत्याह।राष्ट्रमेवब्रह्मवर्चस्यंकः॥३॥वाशास्येत्याह॥४॥

ष्ट्रमेव वर्चस्यं कः॥ शाक्वरीस्येत्याह। पशवो वै शाक्वरीः॥ पशूनेवावरु
न्धे। विश्वभृतस्येत्याह। राष्ट्रमेव पयस्व्यं कः॥ जनभृतस्येत्याह
। राष्ट्रमेवेन्द्रियाव्यं कः॥ अग्नेस्तेजस्यास्येत्याह॥४॥ राष्ट्रमेव ते
जस्व्यं कः॥ अपामोषधीनां रसस्येत्याह। राष्ट्रमेव मधव्यं कः
। सारस्वतं ग्रहं गृह्णाति। एषा वा अपां पृष्ठं। यत्सरस्वती। पृष्ठमे
वैनं समानानां करोति। षोडशभिर्गृह्णाति। षोडशकलो वै पुरुषः॥ या
वानेव पुरुषः॥ तस्मिन्वीर्यं दधाति। षोडशभिर्जुहोति षोडशभिर्गृह्णा

ति। द्वात्रिंशद्रात्रं संपद्यंते। द्वात्रिंशदक्षरानुष्टुप्। वागनुष्टुप्सर्वाणि
छंदांसि। वाचैवैनं सर्वेभिश्छंदोभिरभिषिंचति॥५॥ कुमारित्याह
सूर्यवर्चसस्येत्याह ब्रह्मवर्चस्यैक स्तेजस्यास्येत्याहैव पुरुषः षट्॥५॥
देवीरापः सं मधुमतीभिः सृज्यध्वमित्याह। ब्रह्मणैवैनाः संसृजति।
अनाधृष्टाः सीदतेत्याह। ब्रह्मणैवैनाः सादयति। अंतरा होतुश्च धिष्णि
यं ब्राह्मणाच्छंसिनश्च सादयति। आग्नेयो वै होता। ऐंद्रो ब्राह्मणाच्छं
सी। तेजसा चैवेंद्रियेण चोभयतो राष्ट्रं परिगृह्णाति। हिरण्येनोपसुना

मधुमती

ति। आकुत्येहि पवित्राभ्यामुत्पुनंति व्याहृत्ये॥१॥व्रात मोनं भवति।
व्रातायुः पुरुषः व्रातेंद्रियः॥ आयुष्ये वेंद्रिये प्रतितिष्ठति। अनिभृष्टम
सीत्याह। अनिभृष्टंह्येतत्। वाचो बंधुरित्याह। वाचोह्येष बंधुः॥ त
पोजाइत्याह। तपोजाह्येतत्। सोमस्यदात्रमसीत्याह॥२॥ सोमस्यह्ये
तद्दात्रं। शुक्रावः शुक्रेणोत्पुनामीत्याह। शुक्राह्यापः। शुक्रंहिरण्यं
। चंद्राश्चंद्रेणेत्याह। चंद्राह्यापः॥ चंद्रंहिरण्यं। अमृतामृतेनेत्या
ह। अमृताह्यापः॥ अमृतंहिरण्यं॥३॥ स्वाहा राजसूयायेत्याह। राज

ब्रा॰ प्र॰
१२२

सूर्यायुद्यैनाउ सुनाति। सधमादो द्युम्निनीरूर्ज एता इति वारुण्य
र्चा गृह्णाति। वरुणसवमेवावरुंधे। एकया गृह्णाति। एकधैव यज
मानेवीर्यं दधाति। क्षत्रस्योल्बमसि क्षत्रस्य योनिरसीति ताप्यं चा
जीषं च प्रयच्छति स योनित्वाय। एकशतेन दर्भपुंजीलैः पवयति
। शतायुर्वै पुरुषः शतवीर्यः। आत्मैकशतः।।४।। यावानेव पुरुषः
। तस्मिन्वीर्यं दधाति। दध्नाश्रायति। इंद्रियमेवावरुंधे। उदुंबरमा
श्रायति। अन्नाद्यस्यावरुध्यै। शष्पाण्याश्रायति। सुरां बलिमेवैनं क

४

१३

रोति। आविद्द एता भवंति। आविदं मे वैनं गमयंति॥५॥ अग्निरे
वैनं गार्हपत्येनावति। इंद्र इंद्रियेण। पूषा पशुभिः। मित्रावरुणौ
प्राणापानाभ्यां। इंद्रो वृत्राय वज्रमुद्यछत्। स दिवमलिखत्। सोर्य
माः पंथा अभवत्। स आविन्ने द्यावापृथिवी धृतव्रते इति द्यावापृथि
वी उपाधावत्। स आभ्यामेव प्रसूत इंद्रो वृत्राय वज्रं प्राहरत्। आ
विन्ने द्यावापृथिवी धृतव्रते इति यदाह॥६॥ आभ्यामेव प्रसूतो य
जमानो वज्रं भ्रातृव्याय प्रहरति। आविन्ना देव्यदितिर्विश्वरूपी

त्याह। इयं वै हैव्य हितिर्विश्वरूपी। अस्यामेव वृतितिष्ठति। आविन्नो
य मुसावौ मुष्याम् युणो स्यां विश्वस्मिं राष्ट्र इत्याह। विशो वै नः राष्ट्रेण स
मर्धयति। महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्या
ह। आशिषमेवैतामाशास्ते। एष वो भरता राजा सोमोस्माकं ब्राह्मणा
नां राजेत्याह। तस्मात्सोमराजानो ब्राह्मणाः॥ ३॥ इन्द्रस्य वज्रोसि वा
र्त्रघ्न इति धनुः प्रयच्छति विजित्यै। शत्रुबाधना स्थेतीषून्। शत्रूनेवा
स्य बाधन्ते। पात मा प्रत्यंचं पात मा तिर्यंचं मन्वंचं मा पातेत्याह। ति

त्रो। वैरूपमाः प्रतीचीति रक्षसन्नृचीः। ताभ्य एवैनं पाति। दिग्भ्यो मा पा
तेत्याह। दिग्भ्य एवैनं पाति। विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्याह। अप
रिमिता हि वै नं पाति। हिरण्यवर्णावुषसौ विरोक इति त्रिष्टुभा बाहू
उद्गृह्णाति। इंद्रियं वै वीर्यं त्रिष्टुप्। इंद्रियमेव वीर्यमुपरिष्टादात्मंधत्ते
॥८॥ व्याहृत्ये द्वात्रमसीत्याह। अमृतं हिरण्यमेकत्रातो गमयंत्स्याह ब्रा
ह्मणा नाष्ट्राभ्यः पातेत्याह चत्वारि च ॥९॥ दिशो व्यास्थापयति। दिशा
मभिजित्यै। यद्वेनुप्रक्रामेत। अभिदिशो जयेत। उन्मादयेत। मन्

आ॰ब्र॰
१३४

सानुष्टुभा मति। अभिदिशोजयति। नोत्सीदति। समिधुमातिष्ठेत्याह। तेजएवावरुंधे॥१॥उष्णिहामातिष्ठेत्याह। इंद्रियमेवावरुंधे। विराजमातिष्ठेत्याह। अन्नाद्यमेवावरुंधे। उदीचीमातिष्ठेत्याह। पशूनेवावरुंधे। ऊर्ध्वामातिष्ठेत्याह। सुवर्गमेवलोकमभिजयति। अन्तर्जिहीते। सुवर्गस्यलोकस्यसमष्ट्यै॥२॥मारुतएषभवति। अन्नंवैमरुतः। अन्नमेवावरुंधे। एकविंशतिकपालोभवति। प्रतिष्ठित्यै। यौरण्येतुवाक्योपन्नः। तंमध्यतउपदधाति। ग्राम्यैरेवपशुभिरा

१३

रण्यान्पशून्परिगृह्णाति । तस्मादारण्यैः पशुभिरारण्याः पशवः परिगृ
हीताः । पृथिर्वैन्यः । अभ्यषिच्यत ॥ ३ ॥ स राष्ट्रं नाभवत् । स एतानि पा
र्थान्यपश्यत् । तान्यजुहोत् । ते वै स राष्ट्रमभवत् । यत्पार्थानि जुहो
ति । राष्ट्रमेव भवति । बार्हस्पत्यं पूर्वेषामुत्तमं भवति । ऐन्द्रमुत्तरेषां
प्रथमं । ब्रह्म चैवास्मै क्षत्रं च समीची दधाति । अथो ब्रह्मन्नेव क्षत्रं
प्रतिष्ठापयति ॥ ४ ॥ षट् पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात्
। द्वादश संपद्यंते । द्वादश मासाः संवत्सरः । संवत्सरः खलु वै देवा

नां प्रः। देवानामेव पुरं मध्यतो व्यवसर्पति। तस्य न कुतश्चनोपाव्याधो भ
वति। भूतानामवेष्टीर्जुहोति। अत्रात्र वै मृत्युर्जायते। यत्र यत्रैव मृत्युर्जा
यते। तत एवैनमवयजते। तस्माद्राजसूयेनेजानः सर्वमायुरेति। सर्वे
ह्यस्य मृत्यवो वेष्टाः। तस्माद्राजसूयेनेजानो नाभिचरितवै। प्रत्यगेन
मभिचारस्स्तृणुते ॥५॥ रुंधे समेष्या असिच्य तस्या पयति जायते पंच च
॥७॥ सोमस्य त्विषिरसि तव मे त्विषिर्भूयादिति शार्दूलचर्मोपस्तृणाति
। यैव सोमे त्विषिः या शार्दूले। तामेवावरुंधे। मृत्योर्वा एष वर्णः। यच्छार्दू

व

सः। अमृतꣳ हिरण्यं। अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति।
अमृतमेव मृत्योरन्तर्धत्ते। शतमानं भवति॥१॥ शतायुः पुरुषः शतेन्द्रि
यः। आयुष्येवेन्द्रिये प्रतितिष्ठति। दिद्योन्मा पाहीत्युपरिष्टाद्धिनिदधा
ति। उभयत एवास्मै शर्म दधाति। अवेष्टा दन्दशूका इति क्लीबꣳ सी
सेन विध्यति। दन्दशूकानेवावयजते। तस्मात्क्लीबं दन्दशूकादꣳशुका
ः। निरस्तं नमुचेः शिर इति लोहितायसं निरस्यति। पाप्मानमेव नमुचिं निर
वदयते। प्राणा आत्मनः पूर्वेऽभिषिच्या इत्याहुः॥२॥ सोमो राजा वरुणः दे

ब्रा॰ प्र॰
१२६

वा धर्मसुवंश्रये। ते ते वाचꣳ सुवं तां ते ते प्राणꣳ सुवं तामित्याह। प्राणा
ने वात्मनः पूर्वं निभिषिंचति। यद्ब्रूयात्। अग्नेस्त्वा तेजसाभिषिंचामीति।
तेजस्व्येव स्यात्। दुश्चर्मा तु भवेत्। सोमस्य त्वा द्युम्नेनाभिषिंचामीत्या
ह। सौम्यो हि देवतया पुरुषः॥३॥ स्वयैवैनं देवतयाभिषिंचति। अग्नेस्ते
जसेत्याह। तेज एवास्मिं दधाति। सूर्यस्य वर्चसेत्याह। वर्च एवास्मिं दधा
ति। इंद्रस्येंद्रियेणेत्याह। इंद्रियमेवास्मिं दधाति। मित्रावरुणयोर्वीर्येणे
त्याह। वीर्यमेवास्मिं दधाति। मरुतामोजसेत्याह॥४॥ ओज एवास्मिं द

धाति। क्षत्राणां क्षत्रपतिरसीत्याह। क्षत्राणामेवैनं क्षत्रपतिं करोति
। अति दिवस्पाहीत्याह। अत्यन्यान्पाहीति वावैतदाह। समावृत्रंन
धरागुदीचीरित्याह। राष्ट्रमेवास्मिं ध्रुवमकः। उच्छेषणेन जुहोति। उ
च्छेषणभागो वै रुद्रः। भागधेयेनैव रुद्रं निरवदयते॥५॥ उदङ्ङ्परेत्या
ग्नीध्रे जुहोति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते।
रुद्र यत्ते क्रयी परं नामेत्याह। यद्वा अस्य क्रयी परं नाम। तेन वा एष हि
नस्ति। यं हिनस्ति। तेनैवैनं सह शमयति। तस्मै हुतमसि यमेष्ट

मसीत्याह। प्रमाहैवास्यैमृत्युमवयजते॥६॥ प्रजापते न त्वदेतान्यन्य इति
तस्यै गृहे जुहुयात्। यं कामयेत राष्ट्रमस्यै प्रजा स्यादिति। राष्ट्रमेवास्यै
प्रजा भवति। पूर्णमयेनाध्वर्युरभिषिंचति। ब्रह्मवर्चसमेवास्मिंस्त्विषिं द
धाति। औदुंबरेण राजन्यः। ऊर्जमेवास्मिन्नन्नाद्यं दधाति। आश्वत्थेन वै
श्यः। विराजमेवास्मिन्पुष्टिं दधाति। नैयग्रोधेन जन्यः। मित्राण्येवास्मै कल्प
यति। अथो प्रतिष्ठित्यै॥७॥ भवत्याकूः पुरुषओजसेत्याह निरवदय
ते यजते जन्योदेन्चै॥८॥ इंद्रस्य वज्रोसि वार्त्रघ्न इति रथमुपावहरति

विजित्यै। मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीत्याह। ब्रह्मणैवैनं देवताभ्यां युनक्ति। प्रष्टिवाह वै देवरथः। देवरथमेवास्मै युनक्ति। त्रयोश्वा भवंति। रथश्चतुर्थः। द्वौ सव्यष्ठसारथी। षट् संपद्यंते। ७। षड्वा ऋतवः। ऋतुभिरेवैनं युनक्ति। विष्णुक्रमान्क्रमते। विष्णुरेव भूत्वेमांल्लोकानभिजयति। यः क्षत्रियः प्रतिहितः। सोन्वारभते। राष्ट्रमेव भवति। त्रिष्टुभान्वारभते। इंद्रियं वै त्रिष्टुक्। इंद्रियमेव यजमाने दधाति। ८। मरुतां प्रसवे जेषमित्याह। मरुद्भिरेव प्रसूत उज्जयति। आप्तं मन इत्या

आ॰ ग्र॰
१३८

ह। यद्देवमनुसे स्यीत्। तदांपत्। राजन्यं जिनाति। अनोक्रांतएवाक्रमते। विवाएषइंद्रियेणवीर्येणर्ध्यते। योराजन्यं जिनाति। समृद्धमिंद्रियेणवीर्येणेत्याह। ३। इंद्रियमेववीर्यमात्मंधत्ते। पशूनां मन्युरसितदेवमेमन्युर्भैयादितिवाराही उपानहावुपमुंचते। पशूनांवाएषमन्युः। यद्वराहः। तेनैवपशूनांमन्युमात्मंधत्ते। अभिवाद्‌यं स्वसुषुवाणंकामयते। तस्यैश्वरेंद्रियंवीर्यमादातोः। वाराही उपानहावुपमुंचते। अस्याएवांतर्धत्ते। इंद्रियस्यवीर्यस्यानात्यै। ४। नमोमात्रेपृथिव्याइत्याहहि

१२

+ऊर्जमेवात्मन्धत्ते (उं) स्विवर्चोस्तिवर्चोमयिधेहीत्याह २।

सा वै। इयंद्रस्यायुरस्यायुर्मेधेहीत्याह। आयुरेवात्मन्धत्ते। ऊर्गस्यूर्जं
मेधेहीत्याहौवर्च एवात्मन्धत्ते। एकधा ब्रह्मण उपहरति। एकधैवय
जमान आयुरूर्जं वर्चो दधाति। रथवीमोचनीयाञ्जुहोति प्रतिष्ठित्यै॥
५॥ त्रयो अश्वा भवन्ति। रथश्चतुर्थः। तस्माच्चतुर्जुहोति। यदुभौ सहावृ
तिष्ठेतां। समानं लोकमीयातां। सहस्रं ग्रहीत्रा रथवाहनेरथमादधाति
। सुवर्गाद्धि वै नं लोकाद्यन्तर्दधाति। हंसः शुचिषदित्यादधाति। ब्रह्म
णैवैनमुपावहरति। ब्रह्मणादधाति। अतिछंदसादधाति। अतिछं

ब्रा.प्र.
१३९

द्वावेसर्वाणिछंदा१ंसि। सर्वैभिरेवैनंछंदोभिराद्धाति। वर्ष्मवाएषाछंदसां। यदतिछंदाः। यदतिछंदसादधाति। वर्ष्मैवैन१ंसमानानांकरोति॥६॥पद्यंतेदधातिवीर्येणत्याहानात्येवातिष्ठिंत्येब्रह्मणातिसप्तच॥१॥मित्रोसिवरुणोसीत्याह।मैत्रंवाअहः।वारुणीरात्रिः।अहोरात्राभ्यामेवैनमुपावहरति।मित्रोसिवरुणोसीत्याह।मैत्रोवैदक्षिणः।वारुणः सव्यः।वैश्वदेव्यामिक्षा।स्वमेवैनौभागधेयमुपावहरति।समहंविश्वैर्देवैरित्याह॥१॥वैश्वदेव्योवैप्रजाः।ताएवाद्याःकुरुते।सुत्रस्यनाभि

दधा

१३।

रसि क्षत्रस्य योनिरसीत्यधीवासमास्तृणाति स योनिरेवास्य। स्योना मा
सीद सुषदा मासीदेत्याह। यथा यजुरेवैतत्। मा त्वा हिंसीन्मा मा हिं
सीरित्याहाहिंसायै। निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्या
य सुक्रतुरित्याह। साम्राज्यमेवैनं सुक्रतुं करोति। ब्रह्मा३ त्वं राज
न्ब्रह्मासि सवितासि सत्यसव इत्याह। सवितारमेवैनं सत्यसवं क
रोति ॥ २ ॥ ब्रह्मा३ त्वं राजन्ब्रह्मासीन्द्रोऽसि सत्यौजा इत्याह। इन्द्रमेवैनं
सत्यौजसं करोति। ब्रह्मा३ त्वं राजन्ब्रह्मासि मित्रोऽसि सुशेव इत्याह।

मित्रमेवैनꣳ सुशेवं करोति । ब्रह्मां३ त्वꣳ राजन्ब्रह्मासि वरुणोसि सत्य
धर्मेत्याह । वरुणमेवैनꣳ सत्यधर्माणं करोति । सवितासि सत्यसव इत्या
ह । गायत्रीमेवैतेनाभिव्याहरति । इन्द्रोसि सत्यौजा इत्याह । त्रिष्टुभमेवै
तेनाभिव्याहरति ॥ ३ ॥ मित्रोसि सुशेव इत्याह । जगतीमेवैतेनाभिव्या
हरति । सत्यमेता देवताः । सत्यमेतानि छंदाꣳसि । सत्यमेवावरुंधे । व
रुणोसि सत्यधर्मेत्याह । अनुष्टुभमेवैतेनाभिव्याहरति । सत्यानृते वा
अनुष्टुप् । सत्यानृते वरुणः । सत्यानृते एवावरुंधे ॥ ४ ॥ नैनꣳ सत्यानृते

उद्दिते हि र्ंस्तः। य एवं वेद। इंद्रस्य वज्रोसि वार्त्रघ्न इति स्फ्यं प्रयछति

।वज्रो वै स्फ्यः।वज्रेणैवास्मा अवरपरꣳ रंधयति।एवꣳहि तच्छ्रेयः।यद

स्मा एते रध्येयुः।दिशोभ्ययꣳ राजाभूदिति पंचाक्षान्प्रयछति।एते वै

सर्वेयाः।अपराजायिनमेवैनं करोति।।५।।ओदनमुद्ब्रुवते।परमेष्ठी

वा एषः।यदोदनः।परमामेवैनꣳ श्रियं गमयति।सुश्लोकां३ सुमंग

लां३ सत्यराजा३ नित्याह।आशिषमेवैतामाशास्ते।शौनःशेपमाख्या

पयते।वरुणपाशादेवैनं मुंचति।परःशतं भवति।शतायुः पुरुषः

त्उतेंद्रियः॥आयुष्येवेंद्रियेप्रतितिष्ठति॥मारुतस्यचैकविंशति
कपालस्यवैश्वदेव्येचामिक्षायाअग्नयेस्विष्टकृतेसमवद्यति॥देव
ताभिरेवैनमुभयतःपरिगृह्णाति॥आपान्नप्रेसाहोजेनिप्रेसाह
ग्नयेगृहपतयेस्वाहेतितिस्रआकुतीर्जुहोति॥त्रयइमेलोकाः॥एष्वे
वलोकेषुप्रतितिष्ठति॥६॥देवैरत्वीहसत्यसंवंकरोतिग्निष्टुभेमे
वैतेनोभिव्याहरतिसत्यानृतेएवावरुंधेकरोतिशतेंद्रियःषष्ठ॥१०
॥एतब्राह्मणानिधात्रेरात्रिनांदेवसुवामघेतोदेवाहेंद्राःसोमस्यं

न्द्रस्य मित्रो हस्तौ ॥१०॥ एतद्ब्राह्मणानि दैक्ष्या वंत्रिकपालमन्त्रं वै पूषा
वाच्याग्नि द्विरू हद्द्ंपूरे त्यब्रह्मां त्वं राजं चतुः षष्टिः ॥६४॥ ॥हरिः
ॐ॥ ॥ॐ वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् तत्स
ं सद्भिरनु समसर्पत् तत्सूं सपां सं सूत्वं अग्निना देवेन प्रथ
मे हन्ननुप्रायुंक् सरस्वत्या वाचा द्वितीये सवित्रा प्रसवेन तृतीये
त्रणा ।पूष्णा पशुभिः चतुर्थे बृहस्पतिना ब्रह्मणा पंचमे इन्द्रेण देवेन
षष्ठे वरुणेन स्वया देवतया सप्तमे ॥१॥ सोमेन राज्ञाष्टमे त्वष्ट्रा

ब्रा. प्र.
१४२

रूपेणनवमे। विष्णुनायज्ञेनोन्नोत। यत्सं॰स्रपो भवंति। इंद्रियमेवतद्वी
र्यंयजमानआप्नोति। पूर्वपूर्वावेदिर्भवति। इंद्रियस्यवीर्यस्यावरुध्यै
। पुंस्त्वाउपसद्रा॰ सोम्येनप्रचरति। सोमोवैरेतोधाः। रेतएवतद्दधा
ति। अंतरात्वाष्ट्रेण। रेतएवहितंत्वष्टारूपाणिविकरोति। उपरिष्टाद्वै
ष्णवेन। यज्ञोवैविष्णुः। यज्ञएवांततः प्रतितिष्ठति॥२॥ सप्तमेदधाति
पंचच॥१॥ जामिवाएतत्कुर्वंति। यत्सद्यो दीक्षयंतिसद्यः सोमंक्रीणंति
। पुंडरिस्रजांप्रयच्छत्यजामित्वाय। अंगिरसः सुवर्गंलोकंयंतः। अप्सु

त

१४२

दीक्षातपसी त्वावैन्द्रायन्त । तत्पुंडरीकमभवत् । यत्पुंडरिस्त्रजां प्रयच्छति
। साक्षाद्देवदीक्षातपसी अवरुंधे । द्वन्द्वाभिवत्सतरे सोमं क्रीणाति । द्वन्द्वा
क्षराविराट् ॥१॥ अन्नं वै विराट् । विराजैवान्नाद्यमवरुंधे । मुक्रुराभवंति
सेंद्रत्वाय । द्वन्द्वापेयो भवति । अन्नाद्यस्यावरुध्यै । त्र्यातं ब्राह्मणाः पिबं
ति । त्रातायुः पुरुषः त्र्यातेंद्रियः । आयुष्येवेंद्रिये प्रतितिष्ठति । सप्तद
शं स्तोत्रं भवति । सप्तदशः प्रजापतिः ॥२॥ प्रजापतेराप्त्यै । प्राकाशाव
ध्वर्यवे ददाति । प्रकाशमेवैनं गमयति । स्रजमुद्गात्रे । सैवास्यैवा

सयति। रुक्मꣳ होत्रे। आदित्यमेवास्मा उन्नयति। अश्वं प्रस्तोतृप्रतिहर्तृभ्यां। प्राजापत्यो वा अश्वः प्रजापतेराप्त्यै। (३) धाद्यरा पोतृभ्यो हीर्ब्रह्मणे। आयुरेवावरुन्धे। धेनुं मैत्रावरुणाय। राष्ट्रमेव वश्यं करोति। ऋषभं ब्राह्मणाच्छꣳसिने। राष्ट्रमेवेन्द्रियावत्कः। वाससी नेष्टापोतृभ्यां। पवित्रे एवास्येते। स्थूरि यवाचितमच्छावाकाय। अन्तत एव वरुणमवयजते॥ ४॥ अनड्वाहमग्नीधे। वह्निर्वा अनड्वान्। वह्निरग्नीत्। वह्निनैव वह्नि यत्तस्यावरुन्धे। इन्द्रस्य सुषुवाणस्य त्रेधेन्द्रियं वीर्यं परापतत्। भृगुस्तृती

यमभवत्। आयुंतीयुंततीयं। सरस्वती। ततीयं। भार्गवोहोताभवति।
आयंतीयं ब्रह्मसामंभवति। वारवंतीयमग्निष्टोमसामं। सारस्वतीरपो
गृह्णाति। इंद्रियस्य वीर्यस्यावरुध्यै। आयंतीयं ब्रह्मसामं भवति। इंद्रि
यमेवास्मिन्वीर्यं श्रयति। वारवंतीयमग्निष्टोमसामं। इंद्रियमेवास्मि
न्वीर्यं वारयति। ५। विराट्प्रजापतिः प्रजापतेराप्तैयजते ब्रह्म
सामंभवति सुप्तचं। ६। ईश्वरोवाएषदिशोऽनून्मदितोः। यंदिशोऽनुव्या
स्थापयंति। दिशामवेष्टयोभवंति। दिक्ष्वेवप्रतितिष्ठत्यनुन्मादाय।

पंच देवतो यजति। पंचदिशः। दिक्ष्वेव प्रतितिष्ठति। हविषो हविष इष्ट्वा
वाजस्य त्यमभिघारयति। यजमानदेवत्यो वै बृहस्पतिः। यजमानमेव
तेजसा समर्द्धयति॥९॥ आदित्यां मलां गर्भिणीमालभते। मारुतीं पृ
श्निं पष्ठौहीं। विशं चैवास्मै राष्ट्रं च समीची दधाति। आदित्यया पूर्वया
प्रचरति। मारुत्योत्तरया। राष्ट्र एव विशमनुबध्नाति। उच्चैरादित्याया
आश्रावयति। उपांशु मारुत्यै। तस्मा राष्ट्रं विशमतिवदति। गर्भिण्या
दित्या भवति॥१०॥ इंद्रियं वै गर्भः। राष्ट्रमेवेंद्रियावत्कः। अगर्भा मारु

ती। विड्वै मरुतः। विशमेव निरिंद्रियामकः। देवासुराः संयत्ता आसन्
। ते देवा अग्निनोः पृषन्वाचः सत्यं संनिधाय। अनृतेनासुरानभ्यभ
वन्। तेऽग्निभ्यां पृह्ले पुरोडाशं द्वादशकपालं निरवपन्। ततो वै ते वा
चः सत्यमवारुंधत। ॥ ३ ॥ यदग्निभ्यां पृह्ले पुरोडाशं द्वादशकपालं नि
र्वपति। अनृतेनैव भ्रातृव्यानभिभूय। वाचः सत्यमवरुंधे। सरस्वते
सत्यवाचे चरुं। पूर्वमेवोदितं। उत्तरेणाभिगृणाति। सवित्रे सत्यप्रस
वाय पुरोडाशं द्वादशकपालं प्रसूत्यै। तूतान्ब्रहिणोति। आविदएता

भवंति।आविद्दमेवैनंगमयंति।अथोदृतेभ्यएवनछिंद्यते।तिस्रध
न्वंशुष्कदृतिर्दक्षिणासमृध्यै॥४॥अर्ध्दुयतिभवत्यरुंधतगमयंति
देवं॥३॥आग्नेयमष्टाकपालंनिर्वपति।तस्माच्छिशिरेकुरुपंचालाःप्रां
चोयांति।सौम्यंचरुं।तस्माद्वसंतंव्यवसायाहयंति।सावित्रंद्वादशाक
पालं।तस्मात्पुरस्ताद्यवानांसवित्राविरुंधते।बार्हस्पत्यंचरुं।सावि
त्रेवविरुध्य।ब्रह्मणायवानादधते।त्वाष्ट्रमष्टाकपालं॥५॥रूपाण्येव
तेनकुर्वते।वैश्वानरंद्वादशाकपालं।तस्माज्जघन्यैनेदाघेप्रत्यंचःकु

सैत्र पसेनैपाच्यंते। आ दृिसेनादधते। २

रुपंचात्मा यांति। सारस्वतं चरुं निर्वपति। तस्मात्सा दक्षिसर्वा श्चोवदंति वा

। पौष्णेन व्यवस्यंति। मैत्रेण कृषंते। वारुणेन विधृता आसते। १। मासि

मास्येतानि हवींषि निरुप्याणीत्याहुः। तेनैव तन्न्वि युंजुः इति। अथो खलु

त्वाहुः। कः संवत्सरं जीविष्यतीति। षडेव पूर्वेद्युर्निरुप्याणि। षडुत्तरे

द्युः। तेनैव तन्न्वि युंजुः। दक्षिणो रथवाहनवाहः पूर्वेषां दक्षिणा। उत्तर

उत्तरेषां। संवत्सरस्येवांतौ युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै। ३।

त्वाष्ट्रमष्टाकपालं दधते युनक्त्येव कंच। ४। इंद्रस्य सुषुवाणस्य दश धे

न्द्रियं वीर्यं परापतत् । स यत्त्रेधा मंनिरष्ठीवत् । तत्कोलमभवत् । यद्द्वितीयं । तद्बदरं । यत्तृतीयं । तत्कर्कन्धु । यन्नस्तः । स सिंहः । यदक्ष्योः ॥ १ ॥ स शार्दूलः । यत्कर्णयोः । स वृकः । यदूर्ध्वः । स सोमः । या वाची । सा सुरा । त्रयाः सक्तवो भवंति । इन्द्रियस्यावरुध्यै । त्रयाणि लोमानि ॥ २ ॥ त्विषिमेवावरुंधे । त्रयो ग्रहाः । वीर्यमेवावरुंधे । नाम्नादशामी । नव वै पुरुषे प्राणाः । नाभिर्दशमी । प्राणा इन्द्रियं वीर्यं । प्राणानेवेन्द्रियं वीर्यं यजमान आत्मन्धत्ते । सीसेन क्लीबाच्छष्पाणि क्रीणाति । न वा एतद्योनहि

र ण्यं ॥ ॥ यत्सीसं। न स्त्री न पुमान्। यत्क्लीबः। न सोमो न सुरा। यत्सौत्रा
मणी समर्धये। स्वाद्वीं त्वा स्वादुनेत्याह। सोममेवैनां करोति। सोमोस्य
स भिर्या पच्यस्वेरस्व से पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्याह। एताभ्यो
ह्येषा देवताभ्यः पच्यते। तिस्रः संसृष्टा भवति॥ ॥ तिस्रो हि रात्रीः क्री
तः सोमो वसति। पुनातु ते परिस्रुतमिति यजुषा पुनाति व्यावृत्त्यै। पवि स
त्रेण पुनाति। पवित्रेण हि सोमं पुनन्ति। वारेण शश्वता तनेत्याह। वारे
ण हि सोमं पुनन्ति। वायुः पूतः पवित्रेणेति। नैतया पुनीयात स्पूर्द्ये

षा। अतिपवित्तस्यैतया पुनीयात्। कुविदङ्गेत्यनिरुक्तया प्राजापत्य
यां गृह्णाति॥५॥ अनिरुक्तः प्रजापतिः। प्रजापतेराप्त्यै। एकयर्चा गृ
ह्णाति। एकधैव यजमाने वीर्यं दधाति। आश्विनं धूम्रमालभते। अ
श्विनौ वै देवानां भिषजौ। ताभ्यामेवास्मै भेषजं करोति। सारस्वतं मे
षं। वाग्वै सरस्वती। वाचैवैनं भिषज्यति। ऐन्द्रमृषभं सैन्द्रत्वाय॥६॥
अश्व्योर्लोमानि हिरण्यं वसतिं गृह्णाति भिषज्यत्येकं च॥५॥ पात्रे
षु सूर्पे षाजभेत। बर्हिर्वस्मादिन्द्रियं वीर्यं दध्यात्। भ्रातृव्यमस्मे ज

नयेत् । एकयूप आलंभते । एकधेवास्मिन्निंद्रियं वीर्यं दधाति । नास्मै
भ्रातृव्यं जनयति । नैतेषां पशूनां पुरोडाशा भवंति । ग्रहपुरोडाशा
ह्येते । युवꣳ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः । सर्वा
एव देवताः प्रीणाति ॥१॥ ब्राह्मणं परिक्रीणीयादुछेषणस्य पातारं । ब्राह्म
णो ह्याहुत्या उछेषणस्य पाता । यदि ब्राह्मणं न विंदेत् । वल्मीकवपायाम
वनयेत् । सैव ततः प्रायश्चित्तिः । यद्वै सौत्रामण्यै व्यृद्धं । तदस्यै समृद्धं । ना
नादेवत्याः पशवश्च पुरोडाशाश्च भवंति समृध्यै । ऐंद्रः पशूनामुत्तमो

ब्रा. प्र.
१४८

भवति। ऐन्द्रः पुरोडाशानां प्रथमः॥२॥ इन्द्रियमेवास्मै समीचीं दधाति। पुर
स्तादनूयाजानां पुरोडाशैः प्रचरति। पशवो वै पुरोडाशाः। पशूनेवाव
रुंधे। ऐन्द्रमेकादशकपालं निर्वपति। इन्द्रियमेवावरुंधे। सावित्रं द्वादशा
कपालं प्रसूत्यै। वारुणं दशकपालं। अंततएव वरुणमवयजते। वड
वा दक्षिणा॥३॥ उत वा एषाश्वं सूते। उताश्वतरं। उत सोमं उत सुरा
। यत्सौत्रामणी समृद्ध्यै। बार्हस्पत्यं पशुं चतुर्थमतिपवितस्यालभते।
ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैव यज्ञस्य व्यृद्धमपि दधाति। पुरोडाशा वा

१४

नेष प्रभुर्भवति। नह्येतस्य गृहं गृह्णाति। सोमवती कापितृमती इति

रातात्मायां ऽसमर्द्धनयति॥४॥ रातायुः पुरुषः रातेंद्रियः। आयुष्ये

वेंद्रिये प्रतितिष्ठति। दक्षिणेनोजुहोति। पापवस्यसस्य व्यावृत्त्यै। हि

रण्यमंतराधारयति। घृतामेवैनां जुहोति। रातमानं भवति। रातायुः

पुरुषः रातेंद्रियः। आयुष्येवेंद्रिये प्रतितिष्ठति। यत्रैव रातात्मांधा

रयति॥५॥ तन्निदधाति प्रतिष्ठित्यै। पितृन्वा एतस्येंद्रियं वीर्यं गच्छति।

यं सोमोऽतिपवते। पितृणां याज्यानुवाक्याभिरुपतिष्ठते। यदेवास्य

प्तिं हृन्निंद्रियंवीर्यंगच्छति। तद्देवावरुंधे। तिसृभिरुपतिष्ठते। तृतीयेवा
इतोलोकेपितरः। तानेवप्रीणाति। अथोत्रीणिवैयज्ञस्येंद्रियाणि। अ
ध्वर्युर्होता ब्रह्मा। तउपतिष्ठंते। यान्येवयज्ञस्येंद्रियाणि। तैरेवास्मैभे
षजंकरोति॥ [illegible] प्रीणातिप्रथमोदक्षिणासमवनयतिधारयंतींद्रिया
णिचत्वारिच॥ [illegible]॥ अग्निष्टोममग्रआहरति। यज्ञमुखंवाअग्निष्टोमः
।यज्ञमुखमेवारभ्यसवमाक्रमते। अथैषोऽभिषेचनीयश्चतुस्त्रिंश
पवमानोभवति। त्रयस्त्रिंशद्वैदेवताः। ताएवाप्नोति। प्रजापतिश्च

तुस्त्रिंऽशाः तमेवाप्नोति। सऽंश्रार एष स्तोमानामयथापूर्वं। यद्विषमाः
स्तोमाः॥१॥ एतावान्वै यज्ञः। यावान्पवमानाः। अंतःश्लेषणं वा अन्य
त्। यत्स्तोमाः पवमानाः। तेनासऽंश्रारः। तेन यथापूर्वं। आत्मन्नेवाग्नि
ष्टोमेनर्ध्नोति। आत्मना पुण्यो भवति। प्रजा वा उक्थानि। पशव उक्थानि
। यदुक्थ्यो भवत्यनुसंतत्यै॥२॥ स्तोमाः पशव उक्थान्येकं च॥३॥ उ
पत्वा जामयो गिर इति प्रतिपद्भवति। वाग्वै वायुः। वाच एवैषोभिषु
कः। सर्वासामेव प्रजानां ऽस्त्रयते। सर्वा एनं प्रजा राजेति वदंति। एत

सुत्यंह्याक्षिपुरित्याहु।आदित्यावैप्रजाः।प्रजानामेवैतेनस्वयते।यं
तिवाएतेयज्ञमुखात्।येसंभार्याअक्रन्॥१॥यद्वाहपवस्ववाचोअ
ग्रियइति।तेनैवयज्ञमुखंनयंति।अनुष्टुक्प्रथमाभवति।अनु
ष्टुगुत्तमा।वाग्वाअनुष्टुक्।वाचैवप्रयंति।वाचोद्यंति।उद्वतीर्भवं
ति।उद्वाअनुष्टुभोरूपं।आनुष्टुभोराजन्यः॥२॥तस्मादुद्वतीर्भ
वंति।सोर्यनुष्टुगुत्तमाभवति।सुवर्गस्यलोकस्यसंतत्यै।योवैस
वादेति।नैनंसवउपनमति।यःसामभ्युएति।पापीयान्सुषुवाणो

भवति। एतानि खलु वै सामानि। यस्य छानि। यस्य छानि भवंति॥ ३॥
तैरेव सर्वान्नेति। यानि देवराजानां सामानि। तैरमुष्मिंल्लोके ऋध्नो
ति। यानि मनुष्यराजानां सामानि। तैरस्मिंल्लोके ऋध्नोति। उभयो
रेव लोकयोर्ऋध्नोति। देवलोके च मनुष्यलोके च। एकविंशेनाभिषे
चनीयस्योत्तमो भवति। एकविंशः कैराव पुनीयस्य स्वब्रह्मसः। सृह
द्रशोदशापेयः॥ ४॥ विड्वा एकविंशः। राष्ट्रं सप्तदशः। विशएव त
न्मध्यतोभिषिच्यते। तस्मात्वा एष विशां प्रियः। विशो हि मध्यतोभिषि

च्यते। यद्वा एनमूर्ध्वो दिशोनुन्यासस्थापयंति। तत्सुवर्गंलोकमभ्यारोहति
। यदिमंलोकंनप्रत्यवरोहेत्। अतिजनंवेयात्। उद्धोमाद्येत्। यदेषप्र
तीचीनस्तोमोभवति। इममेवतेनलोकंप्रत्यवरोहति। अथोअस्मिं
नेवलोकेप्रतितिष्ठत्यनुन्मादाय॥५॥ अक्षन्राजन्योभवंतिदूरापे
योमाद्युत्राणिच॥६॥ इयंवैरजता। असौहरिणी। यद्रुक्मोभवतः।
आभ्यामेवैनमुभयतःपरिगृह्णाति। वरुणस्यवाअभिषिच्यमान
स्यापः। इंद्रियंवीर्यंनिरघ्नन्। तत्सुवर्णंहिरण्यमभवत्। यद्रुक्म

मंतर्दधाति। इंद्रियस्य वीर्यस्यानिर्घाताय। शतमानो भवति। शतक्ष
रः॥१॥ शतायुः पुरुषः शतेंद्रियः। आयुष्येवेंद्रिये प्रतितिष्ठति। आयु
र्वै हिरण्यं। आयुष्या एवैनमभ्यतिक्षरंति। तेजो वै हिरण्यं। तेजस्या
एवैनमभ्यतिक्षरंति। वर्चो वै हिरण्यं। वर्चस्या एवैनमभ्यतिक्षरंति
॥२॥ शतक्षरोष्टौ च॥१०॥ अप्रतिष्ठितो वा एष इत्याहुः। यो राजसूये
न यजत इति। यद्वा एष एतेन द्विरात्रेण यजते। अथ प्रतिष्ठा। अ
र्धसंवत्सरमाप्नोति। यावंति संवत्सरस्याहोरात्राणि। तावतीरेतस्य

स्तोत्रीयाः। अहोरात्रे ष्वेव प्रतितिष्ठति। अग्निष्टोमः पूर्वमहर्भवति। अतिरात्र उत्तरं॥१॥ नानैवाहोरात्रयोः प्रतितिष्ठति। पौर्णमास्यां पूर्वमहर्भवति। व्यष्टकायामुत्तरं। नानैवार्धमासयोः प्रतितिष्ठति। अमावास्यायां पूर्वमहर्भवति। उदृष्ट उत्तरं। नानैव मासयोः प्रतितिष्ठति। अयो खलु। ये एव समानपक्षे पुण्याहे स्यातां। तयोः कार्यं प्रतिष्ठित्यै॥२॥ अपरस्त्र्योद्विरात्र इत्याहुः। द्वे ह्येते छंदसी। गायत्रं च त्रैष्टुभं च। जगतीमंतर्यंति। न तेन जगतीकृतेत्याहुः। यद्वैगांत्रतीयस प्रवनेकु र्वं

तीति। युहावाएषाहीनस्याहर्भजते। साक्रस्यैवासवनं। अथैवजग
तीकृता। अथ पञ्चाग्नेः। व्युष्टिर्वाएषद्विरात्रः। यएवंविद्वांद्विरात्रेणय
जते। व्यैवास्माउच्छति। अपोतमएवापहते। अग्निष्टोमममंततआह
रति। अग्निः सर्वादेवताः। देवतास्वेवप्रतितिष्ठति॥३॥ उत्तरंप्रतिष्ठि
त्यै पञ्चाग्नेः समर्च्च॥१०॥ वरुणस्यजामीप्सुरआग्नेयमिंद्रस्ययत्त्रिष्व
ग्निष्टोममुपलेयंवेरजताप्रेतिष्ठितोदर्शौ॥१०॥ वरुणस्ययद्दृश्विभ्यां
यत्त्रिषुतस्मादुद्वंतीः सप्तत्रिंशद्रातः॥३७॥ ॥हरिः ॐ मृग॥ ॥श्री॥

द्वितीयाष्टकम्

॥.द्वि.
१

॥श्रीगणेशायनमः॥ ॥श्रीसरस्वत्यैनमः॥श्रीवेदपुरुषाय
नमः॥ ॥हरिः ॐ॥ ॥अंगिरसोवैसत्रमासत।तेषांपृश्निर्घ
र्मधुगासीत्।सर्जीषेणाजीवत।तेब्रुवन्।कस्मैनुसत्रमास्म
हे।यैस्याओषधीर्नजनयामइति।ततोदिवोवृष्टिमसृजंत।यावं
तःस्तोकाअवापद्यंत।तावतीरोषधयोजायंत।ताजाताःपि
तरोविषेणालिंपन्॥१॥तासांजग्ध्वारुप्यंत्यैत।तेब्रुवन्।कइ
दमित्थमकरितिं॥वयंभागधेयमिच्छमानाइतिपितरोब्रुव[illegible]

१

न्। किं वो भागधेयमिति। अग्निहोत्र एव नो प्यस्त्वित्यब्रुवन्।
तेभ्य एतद्भागधेयं प्रायच्छन्। यद्धुत्वाग्निं मार्ष्टि। ततो वै त ओ
षधीरस्वदयन्। य एवं वेद ॥२॥ स्वदन्ते स्मा ओषधयः। ते वत्स
मुपावासृजन्। इदं नो हव्यं प्रदापयेति। सोऽब्रवीद्वरं वृणे। द
शो मा रात्रीर्जातं न दोहन्। आ संगवं मात्रा सह चराणीति। त
स्माद्वत्सं जातं दश रात्रीर्न दुहन्ति। आ संगवं मात्रा सह चरति
। वारे वृतꣳ ह्यस्य। तस्माद्वत्सꣳ सꣳसृष्टधयꣳ रुद्रो घातुकः

।अति हि संधां धयति ॥३॥ अग्निं पुनर्वेद घातुकुर एकं च ॥१॥ प्र
जापतिरग्निमसृजत । तं प्रजा अन्वसृज्यंत । तमभाग उपा
स्त । सोस्य प्रजाभिरपाक्रामत् । तमवरुरुत्समानोन्वैत् । त
मवरुधं नाशक्नोत् । स तपोतप्यत । सोग्निरुपारमत । तांप्रि
वैस्य प्रजापतिरिति । स रराटादुदमृष्ट ॥१॥ तद्घृतमभवत् ।
तस्माद्यस्य दक्षिणतः केशा उन्मृष्टाः । तां ज्येष्ठलक्ष्मी प्राजाप
त्येत्याहुः ॥ यद्रराटादुदमृष्ट । तस्माद्रराटे केशा न संति । तद्

ग्नौ त्रागृह्णात्। तद्व्यचिकित्सत्। जुहवानी३ माहौषा३मि
ति। तद्विचिकित्सायै जन्म। य एवं विद्वान्विचिकित्सति॥२॥ व
सीय एव चेतयते। तं वागभ्यवदज्जुहुधीति। सोऽब्रवीत्। क
स्त्वमसीति। स्वैव ते वागित्यब्रवीत्। सोऽजुहोत्स्वाहेति। तत्स्वा
हाकारस्य जन्म। य एवं स्वाहाकारस्य जन्म वेद। करोति स्वाहा
कारेण वीर्यं। यस्यैवं विदुषः स्वाहाकारेण जुह्वति॥३॥ भागधे
यास्य कृतं भवति। तस्या आकृत्ये पुरुषमसृजत। द्वितीयम

ब्रा॰ द्वि॰ जुहोत। सोऽश्वमसृजत। तृतीयं जुहोत। स गामसृजत। चतुर्थं जुहोत। सोऽविमसृजत। पंचमं जुहोत। सोऽजामसृजत॥
२ अ॰ ४॥ सोऽग्निरबिभेत्। आहुतीभिर्वै माप्नोतीति। स प्रजापतिं पुनः प्राविशत्। तं प्रजापतिरब्रवीत्। जायस्वेति। सोऽब्रवीत्। किं भागधेयमभिजनिष्य इति। तुभ्यमेवेदं हूयाता इत्यब्रवीत्। स एतद्भागधेयमभ्यजायत। यदग्निहोत्रं॥ ५॥ तस्मादग्निहोत्रमुच्यते। तद्धूयमानमादित्योऽब्रवीत्। मा हौषीः। उ

म

३

भयोवैनोभूदिति।सोग्निरब्रवीत्।कथंनोहोष्यंतीति।साय
मेवतुभ्यंजुहवन्।प्रातर्मह्यमित्यब्रवीत्।तस्मादग्नयेसायं
हूयते।सूर्यायप्रातः॥६॥आग्नेयीवैरात्रिः।ऐंद्रमहः।यदनु
दितेसूर्येप्रातर्जुहुयात्।उभयमेवाग्नेयंस्यात्।उदितेसू
र्येप्रातर्जुहोति।तथाग्नयेसायंहूयते।सूर्यायप्रातः।रा
त्रिंवाअनुप्रजाःप्रजायंते।अह्नाप्रतितिष्ठंति।यत्सायंजुहो
ति॥७॥प्रैवतेनजायते।उदितेसूर्येप्रातर्जुहोति।प्रत्येवते

ब्रा· द्वि·
४

नतिष्ठति। प्रजापतिरकामयत प्रजायेयेति। सएतदग्निहोत्रं
मिथुनमपश्यत्। तदुदिते सूर्ये जुहोत्। यजुषान्यत्। तूष्णीमु
न्यत्। ततो वै स प्राजायत। यस्यैवं विदुष उदिते सूर्ये ग्निहोत्रं
जुहोति॥ ७॥ प्रैव जायते। अथो यथा दिवा प्रजानं नेति। तादृगे
व तत्। अथो खल्वाहुः। यस्य वै द्वौ पुण्यौ गृहे वसतः। यस्तयोर
न्यं राधयत्यन्यं न। उभौ वाव सता वृच्छतीति। अग्निं वावादित्य
ः सायं प्रविशति। तस्मादग्निर्दूरान्नक्तं ददृशे। उभे हि तेजसी सं

४

पद्येते ॥९॥ उद्यंतं वावादित्यमग्निरनुसमारोहति । तस्मादुधूमए
वाग्नेर्दिवाददृशे । यदग्नये सायं जुहुयात् । आसूर्याय हवृश्चेत
। यत्सूर्याय प्रातर्जुहुयात् । आग्नये हवृश्चेत । देवताभ्यः सम
र्द्धध्यात् । अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेत्येव सायं होतव्यं ।
सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः ॥ तथोभाभ्यां सायं जुहु
यते ॥१०॥ उभाभ्यां प्रातः ॥ न देवताभ्यः समर्द्धधाति । अग्निर्ज्यो
तिरित्याह । अग्निर्वै रेतोधाः ॥ प्रजा ज्योतिरित्याह । प्रजा एवास्मै

आ॰ द्वि॰
५

प्रजनयति। सूर्यो ज्योतिरित्याह। प्रजा स्वेव प्रजाता सुरेतो दधा
ति। ज्योतिरग्निः स्वाहेत्याह। प्रजा एव प्रजाता अस्यां प्रतिष्ठा
पयति॥११॥ तूष्णीमुत्तरामाहुतिं जुहोति। मिथुनत्वाय प्रजा
त्यै। यदुदितेसूर्ये प्रातर्जुहुयात्। यथातिथये प्रद्रुताय शून्या
यावसथायाहार्यं हरंति। तादृगेव तत्। काहतत्तस्तद्भवती
त्याहुः। यत्सनवेद। यस्मैतद्धरंतीति। तस्माद्यदैषसं जुहो
ति। तदेव सं प्रति। अथोयथा प्रार्थमोषसंपरिवेवेष्टि। तादृ

यो

५

गेवत[illegible]त॥१२॥अमृष्टविचिकित्सेत्तिजुकृत्यजामंसृजताग्नि
होत्रंᳫ स्कन्दीयन्नातजुहोतिजुकेतिसंपद्यतेहूयतेस्थापय
तिसंप्रतिदेवं॥२॥रुद्रोवाएषः।यदग्निः।पत्नीस्थाली।यन्म
ध्येग्नेरधिश्रयेत्।रुद्रायपत्नीमपिदध्यात्।प्रमायुकास्यात्
।उदीचोंगारांन्निरूह्याधिश्रयति।पत्नीयेगोपीथाय।व्यंता
न्करोति।तथापत्न्यप्रमायुकाभवति॥१॥घर्मोवाएषोशांत
॥अहरहःप्रवृज्यते।यदग्निहोत्रं।प्रतिषिंचेत्पशुकामस्य।

आ॰ द्वि॰
६

ग्नां तमिव हि प्रत्राव्यं। न प्रतिषिंचेद्ब्रह्मवर्चसकामस्य। समिद्धमि
व हि ब्रह्मवर्चसं। अथो खलु। प्रतिषिच्यमेव। यत्प्रतिषिंचति॥
३॥ तत्संस्राव्यं। यज्जुहोति। तद्ब्रह्मवर्चसि। उभयमेवाकः। प्रच्यु
तं वा एतदस्माल्लोकात्। अगतं देवलोकं। यच्छृतं हविरनभि
घारितं। अभिघारयति। अभ्येवैनद्धारयति। अथो देवत्रैवै
नद्गमयति॥४॥ पर्यग्निकरोति। रक्षसामपहत्यै। त्रिः पर्यग्निक
रोति। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय। यत्प्राचीनमुद्वासयेत्

६

।यजमानꣳ स्रुचार्पयेत्। यद्दक्षिणा। पितृदेवत्यꣳ स्यात्। य
त्प्रत्यक्।४।पत्नीꣳ स्रुचार्पयेत्। उदीचीनमुद्वासयति। एषा
वै देवमनुष्याणाꣳ शान्ता दिक्। तामेवैनदनूद्वासयति। स्वस्त्यै।
वर्त्म करोति। यज्ञस्य संतत्यै। निष्पति। उपैव तत्स्तृणाति। च
तुरुन्नयति। चतुष्पादः पशवः।५।पशूनेवावरुन्धे। सर्वा
न्पूर्णानुन्नयति। सर्वे हि पुण्या राद्धाः। अनूचमुन्नयति। प्रजाया
अनूचीनत्वाय। अनूच्येवास्य प्रजार्धुका भवति। संमृशति

१.द्वि·
७

व्या हृत्यै। नाहोर्ष्युं नु पसा हृयेत। यद्दहोर्ष्युं नु पसा हृयेत्। यथा न्यस्मा उपनिधाय। ।६। । अन्यस्मै प्र यच्छति। तादृगेव तत्। आ सै वृश्चेत्। यद्वेव गार्ह पत्ये धिश्रयति। तेनु गार्ह पत्यं प्रीणाति। अग्निरग्निं भेत्। आकूतयो मा त्यं ष्युं तीति। स एताꣳ समिधमपश्यत्। तामाधत्त। ततो वा अग्ना वाकूतयो द्विय्यंत। ।७। । यद्वैनꣳ सु मयच्छत्। तत्समिधः समित्त्वं। समिधमादधाति। समेवैनं यच्छति। आकूतीनां धृत्यै। अथो अग्निहोत्रमेवेध्मवत्करो

७

ति। आकूतीनां प्रतिष्ठित्यै। ब्रह्मवादिनो वदन्ति। यदेकाᳪं समि
धमाधाय द्वे आकूती जुहोति। अथ कस्याᳪं समिधि द्वितीया
माकूतिं होतीति॥ ॥ यद्वै समिधावाद्ध्यात्। भ्रातृव्यमस्मै

जु

जनयेत्। एकाᳪं समिधमाधाय। यजुषान्यामाकूतिं जुहोति
उभे एव समिद्वती आकूती जुहोति। नास्मै भ्रातृव्यं जनयति
। आहीत्तायां जुहोति। समिद्धमिव हि ब्रह्मवर्चसं। अथो यथा
तिथिं ज्योतिष्कृत्वा परिवेविष्टि। तादृगेव तत्। चतुरुन्नयति।

ग्रा॰ द्वि॰
८ य

द्विर्जुहोति। तस्माद्द्विपाच्चतुष्पादमत्ति। अथो द्विपद्येव चतुष्पदः
प्रतिष्ठापयति ॥९॥ प्रवृत्ति प्रतिषिंचति गमयति प्रत्यकू पद्यावेउ
पत्रिधायाग्नियुं तेति तच्चत्वारि च ॥३॥ उत्तरावतीं वै देवा आकु
तिमजुहवुः। अवाचीमसुराः। ततो देवा अभवन्। परासुराः।
यं कामयेत वसीयान्त्स्यादिति। कनीयस्तस्य पूर्वं कृत्वा। उत्त
रं भूयो जुहुयात्। एषा वा उत्तरावत्याकुतिः। तां देवा अजुहवु
ः। ततस्तेऽभवन् ॥१॥ यस्यैवं जुह्वति। भवत्येव। यं कामयेत पा

८

पीयान्त्स्यादिति। भूयस्तस्य पूर्वं हुत्वा उत्तरं कनीयो जुहुया
त्। एषा वा अवाच्याहुतिः। तामसुरा अजुहवुः। ततस्ते परा भ
वन्। यस्यैवं जुह्वति। परैव भवति॥२॥ हुत्वोपसादयत्यजामि
त्वाय। अथो व्याहृत्यै। गार्हपत्यं व्रतीक्षते। अननुध्यायिनमेवै
नं करोति। अग्निहोत्रस्य वै स्थाणुरस्ति। तं यदृच्छेत्। यज्ञस्था
णुमृच्छेत्। एष वा अग्निहोत्रस्य स्थाणुः। यत्पूर्वाहुतिः। तां यदु
त्तरयाभिजुहुयात्॥३॥ यज्ञस्थाणुमृच्छेत्। अतिहाय पूर्वामा

कूतिं जुहोति। युक्तस्याप्रुमेव परिवृणक्ति। अथो भ्रातृव्यमे
व्यावाप्नातिक्रामति। अवाचीनꣳ सायमुपमार्ष्टि। रेतएव तद्दधा
ति। ऊर्ध्वं प्रातः। प्रजनयत्येव तत्। ब्रह्मवादिनो वदन्ति। चतु
रुन्नयति॥४॥ द्विर्जुहोति। अथ केऽद्य आकूती भवत इति। अ
ग्नौ वैश्वानर इति ब्रूयात्। एष वा अग्निर्वैश्वानरः। यद्ब्राह्मण
॥ कृत्वा द्विः प्राश्नाति। अग्नावेव वैश्वानरे द्वे आकूती जुहोति। द्वि
र्निमार्ष्टि। द्विः प्राश्नाति॥५॥ षट्संपद्यन्ते। षड्वा ऋतवः। ऋतू

द्विर्जुहोति। २

नैव प्रीणाति। ब्रह्मवादिनो वदंति। किंदेवत्यमग्निहोत्रमिति।
वैश्वदेवमिति ब्रूयात्। यद्यजुषा जुहोति। तदैंद्राग्नं। यत्तूष्णीं
। तत्प्राजापत्यं॥६॥ यन्निमार्ष्टि। तदोषधीनां। यद्द्वितीयं। तत्पि
तॄणां। यत्प्राश्नाति। तद्गर्भाणां। तस्माद्गर्भा अनश्नंतो वर्धंते।
यदाचामति। तन्मनुष्याणां। उदङ् पर्यावृत्याचामति॥७॥ आ
त्मनो गोपीथाय। निर्णेनेक्ति स्रुच्यै। निष्टपति स्वगाकृत्यै। उद्दिश
ति। सुहुतकृन्नेव प्रीणाति। दक्षिणा पर्यावर्तते। स्वमेव वीर्यम



नै

त्तुपर्यावर्तते।तस्माद्दक्षिणोर्द्धआत्मनोवीर्यवत्तरः।अथोआ
दित्यस्यैवावृतमनुपर्यावर्तते।कृत्वोपसमिंधे॥७॥ब्रह्मवर्च
सस्यसमिध्यै।नबर्हिरनुप्रहरेत्।असंस्थितोवाएषयज्ञः
।यदग्निहोत्रं।यदनुप्रहरेत्।यज्ञंविछिंद्यात्।तस्मान्नानुप्रह
त्यं।यज्ञस्यसंतत्यै।अपोनिनयति।अवभृथस्यैवरूपमकः॥
१॥अभुवन्भवतिजुकुयान्नंपतिमाष्टिंद्विःप्राश्नातिप्राजापु
त्यमाचामतीघेकः॥४॥ब्रह्मवादिनोवदंति।अग्निहोत्रप्राय

णायुक्ताः। किंत्रायणमग्निहोत्रमिति। वृत्सोवाअग्निहोत्रस्य
प्रायणं। अग्निहोत्रं युक्तानां। तस्यपृथिवीसदः। अंतरिक्षमा
ग्नीध्रं। द्यौर्हविर्धानं। दिव्याआपः प्रोक्षणयः। ओषधयोबर्हिः
॥११॥ वनस्पतयइध्मः। दिशः परिधयः। आदित्योयूपः। यजे
मानः पशुः। समुद्रोवभृथः। संवत्सरः स्वगाकारः। तस्मादाहि
ताग्नेः सर्वमेव बर्हिष्यंदत्तं भवति। यत्सायंजुहोति। रात्रिमे
वतेनदक्षिण्यांकुरुते। यत्प्रातः॥१२॥ अहरेवतेनदक्षिण्यं

कुरुते।यत्ततोददाति।सादक्षिणा।यावंतोवैदेवाअकुत
मादन्।तेपराभवन्।तएतदग्निहोत्रं॰सर्वस्यैवसमव
दायाजुहवुः।तस्मादाहुः।अग्निहोत्रंवैदेवागृहाणांनि
ष्कृतिमपश्यन्निति।यत्सायंजुहोति।रात्रियाएवतद्धुताद्या
य।।२।।यजमानस्यापराभावाय।यत्प्रातः।अह्नएवतद्धु
ताद्याय।यजमानस्यापराभावाय।यत्ततोश्नाति।कृतमे
वतत्।द्वयोःपयसाजुहुयात्सुष्टुकामस्य।एतद्वाअग्निहो

त्रं मिथुनं । य एवं वेद । प्रप्रजया पशुभिर्मिथुनैर्जायते ॥४॥
इमामेव पूर्वया दुहे । अमूमुत्तरया । अधिश्रित्योत्तरमानयति
। योनावेव तद्रेतः सिंचति प्रजननेन । आज्येन जुहुयात्तेजस्काम
स्य । तेजो वा आज्यं । तेजस्व्येव भवति । पयसा पशुकामस्य । ए
तद्वै पशूनाꣳ रूपं । रूपेणैवास्मै पशूनवरुंधे ॥५॥ पशुमाने
व भवति । दध्नेन्द्रियकामस्य । इन्द्रियं वै दधि । इन्द्रियाव्येव भ
वति । यवाग्वा ग्रामकामस्य । ओषधा वै मनुष्याः । भागधेयेनैवा

स्यैसजातानवरुंधे।ग्राम्येव भवति।अयज्ञोवाएषः।योसामा॥६
॥चतुरुन्नयति।चतुरक्षरं१र थंतरं।रथंतरस्यैषवर्णः।उप
रीवहरति।अंतरिक्षंवामदेव्यं।वामदेव्यस्यैषवर्णः।द्विर्जुहो
ति।द्व्यक्षरंबृहत्।बृहतएषवर्णः।अग्निहोत्रमेवतत्सामन्व
त्करोति॥७॥योवाअग्निहोत्रस्योपसदोवेद।उपैनमुपसदो
नमंति।विंदतउपसत्तारं।उन्नीयोपसादयति।पृथिवीमेवप्री
णाति।हुत्वोपसादयति।अंतरिक्षमेवप्रीणाति।कृत्वोप

सादयति । दिवमेवप्रीणाति । एतावाअग्निहोत्रस्योपसदः ॥८॥

यएवंवेद । उपैनमुपसदोनमंति । विंदतउपसत्तारं । योवाअ

ग्निहोत्रस्याश्रावितंप्रत्याश्रावितं होतारं ब्रह्माणं वषट्का

रं वेद । तस्यत्वेवहुतं । प्राणोवाअग्निहोत्रस्याश्रावितं । अपा

नः प्रत्याश्रावितं । मनोहोता । चक्षुर्ब्रह्मा । निमेषोवषट्कारः ॥९

॥ यएवंवेद । तस्यत्वेवहुतं । सायंयावानश्चदेवाः प्रातर्यावा

णश्चाग्निहोत्रिणोगृहमागच्छंति । तान्यन्नतर्पयेत । प्रजयास्य

पशुभिर्वित्तिभिरन्। यत्तर्पयेत्। तृप्ता एनं प्रजया पशुभिस्त
र्पयेयुः। सजूर्देवैः सायंयावभिरिति सायꣳ संमृशति। सजू
र्देवैः प्रातर्यावभिरिति प्रातः। ये चैव देवाः सायंयावानो ये च
प्रातर्यावाणः॥१०॥ तानेवोभयाꣳस्तर्पयति। त एनं तृप्ताः प्र
जया पशुभिस्तर्पयन्ति। अरुणो ह स्माहौपवेशिः। अग्निहोत्र
एवाहꣳ सायंप्रातर्वज्रं भ्रातृव्येभ्यः प्रहरामि। तस्मान्मत्पापी
याꣳसो भ्रातृव्या इति। चतुरुन्नयति। द्विर्जुहोति। समित्सप्तमी

।सुप्त पहाराकेरी।स्णाकुरो वज्रः।अग्निहोत्र एव तत्सायंप्रा
त वज्रं यजमानो भ्रातृव्याय प्रहरति।भवत्यात्मना।परास्य
भ्रातृव्यो भवति॥११॥बर्हिः प्रातरुक्ता द्यौ यजायते रुंधे सामा
करोत्येतावा अग्निहोत्रस्योपसदो वषट्कारस्व प्रातर्यावाणो
वज्रस्त्रीणि च॥१२॥प्रजापतिरकामयतात्मन्वन्मे जायेतेति।
सोऽजुहोत्।तस्यात्मन्वदजायत।अग्निर्वायुरादित्यः।तेऽब्रुवन्
।प्रजापतिरहौषीदात्मन्वन्मे जायेतेति।तस्यैव यमजनिष्म

हि।जायंतान्नआत्मन्वदिति तेजुहवुः।प्राणानामग्निः।तन्नु
वै वायुः॥१॥ चक्षुषआदित्यः।तेषां कृतादजायत गौरेव
।तस्यै पयसि व्यायच्छंत।मम कृतादजनि मम मेति।ते प्रजाप
तिं प्रश्नमायन्।स आदित्योऽग्निमब्रवीत्।यतरो नो जयात्
।तन्नौ सुहासदिति।कस्यैको हौषीदिति। प्रजापतिरब्रवीत्क
स्यैक इति।प्राणानामहमित्यग्निः॥२॥ तन्नुवाअहमिति वायुः
।चक्षुषोऽहमित्यादित्यः।य एव प्राणानामहौषीत्।तस्य कृता

दजनीति। अग्नेर्कुतादजनीति। तदग्निहोत्रस्याग्निहोत्रत्वं।
गौर्वा अग्निहोत्रं। य एवं वेद गोरग्निहोत्रमिति। प्राणापानाभ्यां
मेवाग्निं समर्धयति। अव्यर्धुकः प्राणापानाभ्यां भवति॥३॥ य
एवं वेद। तौ वायुरब्रवीत्। अनु मा भजतमिति। यदेव गार्हप
त्ये धिश्रित्याहवुनीयमभ्युद्द्रवान्। तेन त्वां प्रीणानित्यभूतां
। तस्माद्गार्हपत्ये धिश्रित्याहवुनीयमभ्युद्द्रवति। वायुमेव
तेन प्रीणाति। प्रजापतिर्देवताः सृजमानः। अग्निमेव देवतानां

ब्रा॰ द्वि॰
१५

प्रथममसृजत। सोऽन्यहान्तं भ्यमवित्त्वा ॥४॥ प्रजापतिमभिपु
र्यावर्तत। स मृत्योरबिभेत्। सोऽमुमादित्यमात्मनो निरमिमीत
। तं कृत्वा पराङ् पर्यावर्तत। ततो वै स मृत्युमपाजयत्। अ
प मृत्युं जयति। य एवं वेद। तस्माद्यस्यैवं विदुषः। उतैका ह
मुत द्व्यहं न जुह्वति। हुतमेवास्य भवति। असौ ह्यादित्योऽग्नि
होत्रं ॥५॥ तन्नु वै वायुरग्निर्भूत्वा वित्ताभवत्येकं च ॥६॥ आरो
द्रुगवि। वायव्यमुपसृष्टं। आश्विनं दुह्यमानं। सौम्यं दुग्धं। वा

रुणमधिश्रितं। वैश्वदेवमभिंद्वं। पौष्णमुद्वृतं। सारस्वतं विष्यं
दमानं। मैत्रꣳ शरः। धातुरुद्वासितं। बृहस्पतेरुन्नीतं। सवितु
ः प्रक्रान्तं। द्यावापृथिव्यꣳ ह्रियमाणं। ऐन्द्राग्नमुपसन्नं। अग्नेः पू
र्वाहुतिः। प्रजापतेरुत्तरा। ऐन्द्रꣳ हुतं॥१॥ उद्वासितꣳ सप्त च॥
७॥ दक्षिणत उपसृजति। पितृलोकमेव तेन जयति। प्राचीमाव
र्तयति। देवलोकमेव तेन जयति। उदीचीमावर्त्य दोग्धि। मनुष्य
लोकमेव तेन जयति। पूर्वौ दुह्याज्येष्ठस्य ज्यैष्ठिनेयस्य। यो वा

ग्रा· द्वि·
१६

गतः श्रीस्यात्। अपरोऽड्यात्कत्रि छस्यकानिष्ठिनेयस्य। योवाभु
भ्रुषेत्॥१॥ न संमृशति। पापवस्यसस्य व्यावृत्त्यै। वायव्यं वा ए
तदुपसृष्टं। आश्विनं दुह्यमानं। मैत्रं दुग्धं। अर्यमाउद्वास्य
मानं। त्वाष्ट्रमुन्नीयमानं। बृहस्पतेरुन्नीतं। सवितुः प्रक्रांत
। द्यावापृथिव्यमाह्रियमाणं॥२॥ ऐंद्राग्नमुपसादितं। सर्वा
भ्यो वा एष देवताभ्यो जुहोति। योग्निहोत्रं जुहोति। यथा ख
लु वै धेनुं तीर्थे तर्पयति। एवमग्निहोत्री यजमानं तर्पय

१६

ति। तृप्यति प्रजया पशुभिः। प्र सुवर्गं लोकं जानाति। पश्य
ति पुत्रं। पश्यति पौत्रं। प्र प्रजया पशुभिर्मिथुनैर्जायते। य
स्यैवं विदुषोऽग्निहोत्रं जुह्वति। य उ चैनदेवं वेद॥३॥ बुभुक्
षेद्ध्रियमाणं जायते देवे च॥ ॥ त्रयो वै प्रैष्य मेधा आसन्।
ते षां त्रिरेकोऽग्निहोत्रमजुहोत्। द्विरेकः। सकृदेकः। तेषां यस्त्रिरजु
होत्। स सकृच्चाजुहोत्। यो द्विः। स यजुषा। यः सकृत्। स तूष्णीं॥१॥
यश्च यजुषाजुहोद्यश्च तूष्णीं। तावुभावार्ध्नुताम्। तस्माद्यजुषा कृतिः

पूर्वा होतव्या । तूष्णीमुत्तरा । उभे एव धर्म्ये अवरुंधे । अग्निर्ज्योति
र्ज्योतिरग्निः स्वाहेति सायं जुहोति । रेत एव तद्दधाति । सूर्यो ज्यो
तिर्ज्योतिः सूर्यः स्वाहेति प्रातः । रेत एव हितं प्रजनयति । रेतो वा
एतस्य हितं न प्रजायते ॥२॥ यस्याग्निहोत्रमकृतं सूर्योऽभ्युदेति
। यद्यंते स्यात् । उन्नीय प्राङुदाद्रवेत् । स उपसाद्यातमितोरासी
त । स युहातमियेत । अथ भूः स्वाहेति जुहुयात् । प्रजापतिर्वै भू
तः । तमेवोपासरत् । स एवैनं तत उन्नयति । नार्तिमार्छति यज

मानः॥३॥ तूष्णींजायते यजमानः॥१०॥ यदग्निमुद्धरति। वसव
स्तर्ह्यग्निः। तस्मिन्यस्य तथाविधेजुह्वति। वसुष्वेवास्याग्निहो
त्रंहुतंभवति। निहितोधूपायंछेते। रुद्रास्तर्ह्यग्निः। तस्मिन्य
स्यतथाविधेजुह्वति। रुद्रेष्वेवास्याग्निहोत्रंहुतंभवति। प्र
थममिध्ममर्चिरालभते। आदित्यास्तर्ह्यग्निः॥११॥ तस्मिन्यस्यत
थाविधेजुह्वति। आदित्येष्वेवास्याग्निहोत्रंहुतंभवति। सर्वे
एवसर्वेणइध्मआदीप्तोभवति। विश्वेदेवास्तर्ह्यग्निः। तस्मिन्य

स्य तथा विधे जुह्वति। विश्वेष्वेवास्य देवेष्वग्निहोत्रं हुतं भवति
। नितरामर्चिरुपावैति लोहिनीकेव भवति। इन्द्रस्तर्ह्यग्निः। तस्मि
न्यस्य तथा विधे जुह्वति। इन्द्र एवास्याग्निहोत्रं हुतं भवति॥२॥
अंगारा भवंति। तेभ्योंगारेभ्योर्चिरुदैति। प्रजापतिस्तर्ह्यग्निः। त
स्मिन्यस्य तथा विधे जुह्वति। प्रजापतावेवास्याग्निहोत्रं हुतं
भवति। शरोंगारा अध्यूहंते। ब्रह्म तर्ह्यग्निः। तस्मिन्यस्य तथा
विधे जुह्वति। ब्रह्मन्नेवास्याग्निहोत्रं हुतं भवति। वसुषु रुद्रे

ष्वादित्येषु विश्वेषु देवेषु । इंद्रे प्रजापतौ ब्रह्मन् । अपरिवर्गमे
वास्यैतासु देवतासु कृतं भवति । यस्यैवं विदुषोग्निहोत्रं जु
कति । यउ चैनदेवं वेद ॥९॥ आदित्यास्तर्ह्यग्निरिं कृ एवास्या
ग्निहोत्रं कृतं भवति देवेषु चत्वारि च ॥१०॥ कृतं त्वा सत्येन
परिषिंचामीति सायं परिषिंचति । सत्यं त्वर्तेन परिषिंचामीति
प्रातः । अग्निर्वा ऋतं । असावादित्यः सत्यं । अग्निमेव तदादित्ये
न सायं परिषिंचति । अग्निनादित्यं प्रातः । यावद्वहोरात्रे भ

त्रा॰ द्वि॰
१९

वंतः। तावदस्य लोकस्य। नार्तिर्नरिष्टिः। नांतो न पर्यंतोऽस्ति। य
स्यैवं विदुषोऽग्निहोत्रं जुह्वति। य उ चैनदेवं वेद॥१॥ अस्ति वै च
॥११॥ अंगिरसः प्रजापतिरग्निं रुद्रउत्तरावंती ब्रह्मवादिनो
ग्निहोत्रप्रायणायुक्ताः प्रजापतिरकामयतात्मन्वक्षौदंगवि
दक्षिणतस्त्रयो वै यदग्निमृतं त्वैकाहरा॥१॥ अंगिरसः प्रैव
तेन पुरुषस्त्यन्ति मार्ष्टियो वा अग्निहोत्रस्य दक्षिणतः षष्टिः॥६०
॥हरिः ॐ॥ ॥हरिः ॐ॥ ॥प्रजापतिरकामयत प्रजाः सृजेये

१९

ति। स एतं दशहोतारमपश्यत्। तं मनसानुद्रुत्य दर्भस्तम्बे जुहो
त्। ततो वै स प्रजा असृजत। ता अस्मात्सृष्टा अपाक्रामन्। ता ग्र
हेणागृह्णात्। तद्ग्रहस्य ग्रहत्वं। यः कामयेत प्रजायेयेति। स द
शहोतारं मनसानुद्रुत्य दर्भस्तम्बे जुहुयात्। प्रजापतिर्वै दश
होता॥१॥ प्रजापतिरेव भूत्वा प्रजायते। मनसा जुहोति। मन
इव हि प्रजापतिः। प्रजापतेराप्त्यै। पूर्णया जुहोति। पूर्ण इव हि
प्रजापतिः। प्रजापतेराप्त्यै। न्यूनया जुहोति। न्यूनाद्धि प्रजापतिः

प्रजा असृजत। प्रजानाꣳ सृष्ट्यै॥२॥ दर्भस्तम्बे जुहोति। एतस्मा
द्वै योनेः प्रजापतिः प्रजा असृजत। यस्मादेव योनेः प्रजापतिः प्र
जा असृजत। तस्मादेव योनेः प्रजायते। ब्राह्मणो दक्षिणत उ
पास्ते। ब्राह्मणो वै प्रजानामुपद्रष्टा। उपद्रष्टुमत्येव प्रजायते।
गृही भवति। प्रजानाꣳ सृष्टानां धृत्यै। यं ब्राह्मणं विद्यां विद्वाꣳ
सं यशो नर्छेत॥३॥ सोऽरण्यं परेत्य। दर्भस्तम्बमुद्ग्रथ्य। ब्रा
ह्मणं दक्षिणतो निषाद्य। चतुर्होतॄन्व्याचक्षीत। एतद्वै देवानां

परमं गुह्यं ब्रह्म । यच्चतुर्होतारः । तद्देवप्रकारं गमयति । तदेनं
प्रकारं गतं प्रकारं प्रजानां गमयति । दर्भस्तम्बमुद्यम्या
चष्टे ॥४॥ अग्निर्वा अन्वै दर्भस्तम्बः । अग्निर्वत्येव व्याचष्टे । ब्राह्म
णो दक्षिणत उपास्ते । ब्राह्मणो वै प्रजानामुपद्रष्टा । उपद्रष्टु
मत्येवैनं यशो ऋच्छति । ईश्वरं तं यशोऽर्तोरित्याहुः । यस्यान्तेव्या
चष्ट इति । वरस्तस्मै देयः । यद्वैनं तत्रोपनमति । तद्देवावरु
धे ॥५॥ अग्निमादधानो दशहोत्रारणिमवदध्यात् । प्रजातमे

वैनु माधत्ते। ते नैवो ऽतुत्याग्निहोत्रंजुहुयात्। प्रजातमेवैनंजुहोति। हविर्निर्वप्स्यंस्तरोहोतारंब्याचक्षीत। प्रजातमेवैनंनिर्वपति। सामिधेनीरनुवक्ष्यंस्तरोहोतारंब्याचक्षीत। सामिधेनीरेवस्तृद्वारभ्यप्रतनुते। अथोयुक्तोवैस्तरोहोता। युक्तमेवतनुते॥६॥ अभिचरंस्तरोहोतारंजुहुयात्। नववैपुरुषेप्राणाः। नाभिर्दशमी। सप्राणमेवैनमभिचरति। एतावद्वैपुरुषस्यस्वं यावत्प्राणाः। यावदेवास्यास्ति। तदभिचरति। स्वकृतइ

रिणे जुहोति प्रदरे वा । एतद्वा अस्यै निर्ऋतिगृहीतं । निर्ऋतिगृ
हीत एवैनं निर्ऋत्या ग्राहयति । यद्वाचः क्रूरं । तेन वषट्करोति
। वाच एवैनं क्रूरेण प्रवृश्चति । ताजगार्तिमार्छति । ७ । दशहो
तासस्यां क्रूरछे वाचष्टे रुंध एव तेनुते निर्ऋतिगृहीतं पंच च ॥ ८ ॥
प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति । स एतं चतुर्होता
रमपश्यत् । तं मनसानुद्रुत्याहवनीये जुहोत् । ततो वै स दर्
शपूर्णमासावसृजत । तावस्मात्सृष्टावपाक्रामतां । तौ ग्रहेणा

गृह्णात्। तज्ज्रहस्य ग्रहत्वं। दर्शपूर्णमासावालभमानः। चतुर्हो
तारं मनसानुद्रुत्याहवनीये जुहुयात्। दर्शपूर्णमासावेवसृ
ष्ट्वारभ्य प्रतनुते।।१।। ग्रहो भवति। दर्शपूर्णमासयोः सृष्ट्यै
धृत्यै। सोऽकामयत चातुर्मास्यानि सृजेयेति। स एतं पंचहोतारम
पश्यत्। तं मनसानुद्रुत्याहवनीये जुहोत्। ततो वै स चातुर्मास्या
न्यसृजत। तान्यस्मात्सृष्टान्यपाक्रामन्। तानि ग्रहेणागृह्णात्
। तज्ज्रहस्य ग्रहत्वं। चातुर्मास्यान्यालभमानः।।२।। पंचहोतारं

मनसानुद्रुत्याहवनीयेजुहुयात्। चातुर्मास्यान्येवसंस्थाप्यारभ्य

प्रतनुते। ग्रहोभवति। चातुर्मास्यानांसंस्थानांधृत्यै। सोकाम

यतपशुबंधंसृजेयेति। सएतंषड्ढोतारमपश्यत्। तंमन

सानुद्रुत्याहवनीयेजुहोत्। ततोवैसपशुबंधमसृजत। सो

स्मात्सृष्टोपाक्रामत्। तंग्रहेणागृह्णात्। ३। तद्ग्रहस्यग्रहत्वं।

पशुबंधेनयक्ष्यमाणः। षड्ढोतारंमनसानुद्रुत्याहवनीयेजु

हुयात्। पशुबंधमेवसंस्थाप्यारभ्यप्रतनुते। ग्रहोभवति। पशु

ब्रा॰ द्वि॰
२३

बंधस्यसृष्टस्यधृत्यैसोकामयतसोम्यमध्वरꣳसृजेयेतिसए
तꣳसुप्तहोतारमपश्यत्तंमनसानुद्रुत्याहवनीयेजुहोत्
ततोवैससोम्यमध्वरमसृजत॥४॥सोस्मात्सृष्टोपाक्रामत्तं
ग्रहेणाग्रह्णात्तज्ज्ग्रहस्यग्रहत्वंदीक्षिष्यमाणःसुप्तहोतारं
मनसानुद्रुत्याहवनीयेजुहुयात्सोम्यमेवाध्वरꣳसृष्ट्वारभ्य
प्रतनुतेग्रहोभवतिसोम्यस्याध्वरस्यसृष्टस्यधृत्यैदेवेभ्यो
वैयज्ञोनप्राभवत्तमेतावच्छःसमभरन्॥५॥यत्संभाराः

२३

ततो वै तेभ्यो यज्ञः प्राभवत् । यत्संभारा भवंति । यज्ञस्य प्रभूत्यै । आतिथ्यमासाद्य व्याचष्टे । यज्ञमुखं वा आतिथ्यं । मुखत एव यज्ञꣳ संभृत्य प्रतनुते । अयज्ञो वा एषः । यो ऽपत्नीकः । न प्रजाः प्रजायेरन् । पत्नीर्व्याचष्टे । यज्ञमेवाकः । प्रजानां प्रजननाय । उपसत्सु व्याचष्टे । एतद्वै पत्नीनामायतनं । स्व एवैना आयतने ऽवकल्पयति ॥ ६ ॥ तन्नुत आलभमानो ऽस्माद्दस्सृजताभ रजायेरन्षट्च ॥ २ ॥ प्रजापतिरकामयत प्रजायेयेति । स तपो

तप्यत। सत्रिवृतं स्तोमं मसृजत। तं पंचदशः स्तोमो मध्यत
उदतृणत्। तौ पूर्वपक्षश्चापरपक्षश्चाभवतां। पूर्वपक्षं देवाअ
न्वसृज्यंत। अपरपक्षमन्वसुराः। ततो देवाअभवन्। परासु
राः। यं कामयेत वसीयान्स्यादिति। ॥१॥ तं पूर्वपक्षे याजयेत्।
वसीयानेव भवति। यं कामयेत पापीयान्स्यादिति। तमपरप
क्षे याजयेत्। पापीयानेव भवति। तस्मात्पूर्वपक्षोपरपक्षात्क
रुण्यतरः। प्रजापतिर्वै दशहोता। चतुर्होता पंचहोता। षड्ढो

ताःसु प्र होता । ऋतवः संवत्सरः ॥२॥ प्रजाः पशवः इमे लोका

॥ य एवं प्रजापतिं बहोर्भूयांसं वेद । बहोरेव भूयान्भवति

। प्रजापतिर्देवासुरानसृजत । स इंद्रमपि नासृजत । तं देवा

अब्रुवन् । इंद्रं नो जनयेति । सोऽब्रवीत् । यथाहं युष्मांस्तप

सासृक्षि । एवमिंद्रं जनयध्वमिति ॥३॥ ते तपोऽतप्यंत । त आ

त्मन्निंद्रमपश्यन् । तमब्रुवन् । जायस्वेति । सोऽब्रवीत् । किं भा

गधेयमभिजनिष्य इति । ऋतून्त्संवत्सरं । प्रजाः पशून् । इमांलो

१० दि०
२५

कानीत्यब्रुवन्। तं वैमाकृत्या प्रजनयतेत्यब्रवीत्॥४॥ तं चतु
र्होत्रा प्राजनयन्। यः कामयेत वीरो म आजायेतेति। स चतुर्हो
तारं जुहुयात्। प्रजापतिर्वै चतुर्होता। प्रजापतिरेव भूत्वा प्र
जायते। जुजनुर्दिङ्क्ष्मिन्द्रियायु स्वाहेति ग्रहेण जुहोति। आस्य
वीरो जायते। वीरꣳहि देवा एतया कृत्या प्राजनयन्। आदित्या
श्चाङ्गिरसश्च सुवर्गे लोके स्पर्धन्त। वयं पूर्वे सुवर्गं लोकमियाम
वयं पूर्व इति॥५॥ त आदित्या एतं पञ्चहोतारमपश्यन्। तं पुरा

२५

ग्नीतरनुवाकाहाग्नीध्रेजुहवुः।ततोवैतेपूर्वेसुवर्गंलोकमायन्
।यःसुवर्गकामःस्यात्।सपंचहोतारंपुरग्नीतरनुवाकाहाग्नीध्रे का
जुहुयात्।संवत्सरोवैपंचहोता।संवत्सरःसुवर्गोलोकः।सं
वत्सरएवर्तुषुप्रतिष्ठाय।सुवर्गंलोकमेति।तेब्रुवन्नंगिरस
आदित्यान्।क्वस्था।क्ववःसद्भ्योहव्यंवक्ष्यामइति।छंदःस्वि
त्यब्रुवन्।गायत्रियांत्रिष्टुभिजगत्यामिति।तस्माच्छंदःसुस
द्भ्यआदित्येभ्यः।आंगीरसीःप्रजाहव्यंवहंति।वहंत्यस्मैप्रजा

बृलिं॥ एतमुमप्रतिख्यातं गच्छति॥ य एवं वेद॥ द्वादश मासाः पंच
र्तवः॥ त्रय इमे लोकाः॥ असावादित्य एकविंशः॥ एतस्मिन्वा
एषः श्रितः॥ एतस्मिन्प्रतिष्ठितः॥ य एवमेतं श्रितं प्रतिष्ठितं
वेद॥ प्रत्येव तिष्ठति॥७॥ स्यादिति संवत्सरो जनयद्धूमिती
त्यब्रवीत्सर्व इत्यादित्यान्नृतवः षट्चं॥८॥ प्रजापतिरकामय
त प्रजायेयेति॥ स एतं दशहोतारमपश्यत्॥ तेन दशधात्मा
नं विधाय॥ दशहोत्रातप्यत॥ तस्य चित्तिः स्रुगासीत्॥ चित्तमा

ज्यं। तस्यैतावंत्येव नामासीत्। एतावान्यस्तक्रतुः। सचतुर्हो
तारमसृजत। सोऽनेनं हुत्वा॥१॥ असृक्षि वाङ्‌ममिति। तस्य सोमो
हविरासीत्। सचतुर्होत्रातप्यत। सोऽताम्यत। स भूरिति व्या
हरत्। स भूमिमसृजत। अग्निहोत्रं दर्शपूर्णमासौ यजूंषि।
स द्वितीयमतप्यत। सोऽताम्यत। स भुव इति व्याहरत्॥२॥
सोऽन्तरिक्षमसृजत। चातुर्मास्यानि सामानि। स तृतीयमत
प्यत। सोऽताम्यत। स सुवरिति व्याहरत्। स दिवमसृजत। अ

त्रिष्टोममुक्थ्यमतिरात्रमर्चः। एतावै व्याहृतय इमे लोकाः। इ
मान्खलु वै लोकाननु प्रजाः पशवः छंदाऽँसि प्राजायंत। य ए
वमेताः प्रजापतेः प्रथमा व्याहृतीः प्रजानाति वेद॥३॥ प्र प्रजया
पशुभिर्मिथुनैर्जायते। स पंचहोतारमसृजत। स हविर्नाविं
दत। तस्मै सोमस्तनुवं प्रायच्छत्। एतत्ते हविरिति। स पंचहो
त्रातप्यत। सोताम्यत्। स प्रत्यङ्बाधत। सोसुरानसृजत।
तदस्याप्रियमासीत्॥४॥ तद्दुर्वर्णँ हिरण्यमभवत्। तद्दुर्व

र्णस्य हिरण्यस्य जन्म। स द्वितीयमतप्यत। सोऽताम्यत। स प्रा
ङ्बाधत। स देवानसृजत। तदस्य द्वितीयमासीत्। तत्सुवर्णं
हिरण्यमभवत्। तत्सुवर्णस्य हिरण्यस्य जन्म। य एवं सुवर्ण
स्य हिरण्यस्य जन्म वेद ॥५॥ सुवर्ण आत्मना भवति। दुर्वर्णो
ऽस्य भ्रातृव्यः। तस्मात्सुवर्णं हिरण्यं भार्यं सुवर्ण एव भवति
। एनं प्रियं गच्छति नाप्रियं। स सप्तहोतारमसृजत। स सप्तहो
त्रैव सुवर्गं लोकमैत्। त्रिणवेन स्तोमेनैभ्यो लोकेभ्योऽसुरान्प्रा

।·द्वि·

२८

पुद्दत॥ त्रयस्त्रिꣳशेन प्रत्यतिष्ठत॥ एकविꣳशेन रुचमधत्त॥६
॥सप्तदशेन प्राजायत॥ य एवंविद्वान्त्सोमेन यजते॥ सप्तहोत्रेव
सुवर्गं लोकमेति॥ त्रिणवेन स्तोमेनैभ्यो लोकेभ्यो भ्रातृव्यान्त्र
पुद्दते॥ त्रयस्त्रिꣳशेन प्रतितिष्ठति॥ एकविꣳशेन रुचंधत्ते॥ स
प्तदशेन प्रजायते॥ तस्मात्सप्तदशस्तोमो न निर्हत्यः॥ प्रजाप
तिर्वै सप्तदशः॥ प्रजापतिमेव मध्यतो धत्ते प्रजात्यै॥७॥ अनं

दी

दत्तुवरत्निर्व्याहरद्देवासीदेंधत्तुप्रजात्यै॥४॥ देवा वै वरुणम

याजयन्। स यस्यै यस्यै देवतायै दक्षिणामनयत्। तामम्लीनात्

। तेऽब्रुवन्। व्यावृत्य प्रतिगृह्णाम। तथा नो दक्षिणा न म्लेष्यती

ति। ते व्यावृत्य प्रत्यगृह्णन्। ततो वै तां दक्षिणा नाम्लीनात्। य

एवं विद्वां व्यावृत्य दक्षिणां प्रतिगृह्णाति। नैनं दक्षिणा म्लीनाति

॥४॥ राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यमित्याह।

आग्नेयं वै हिरण्यं। स्वयैवैनद्देवतया प्रतिगृह्णाति। सोमाय वा

स इत्याह। सौम्यं वै वासः। स्वयैवैनद्देवतया प्रतिगृह्णाति। रुद्रा

+ मनवे तल्पमित्याह ॥ मानवो वै तल्पः ॥ स्वयैवैनं देवतया व्रतयति ॥

प्रा॰ द्वि॰ २९

पुगामित्याह । रौद्री वै गौः ॥ स्वयैवैनं देवतया व्रतयति ॥ वरु
णायाश्वमित्याह ॥ २ ॥ वारुणो वा अश्वः ॥ स्वयैवैनं देवतया व्रत
यति ॥ प्रजापतये पुरुषमित्याह ॥ प्राजापत्यो वै पुरुषः ॥ स्व
यैवैनं देवतया व्रतयति ॥ उत्तानायाङ्गीरसायान इत्याह
॥ इयं वा उत्तान आङ्गीरसः ॥ ३ ॥ अनयैवैनं व्रतयति ॥ वै
श्वानरये रथं व्रतयति ॥ वैश्वानरो वै देवतया रथः ॥ स्व
यैवैनं देवतया व्रतयति ॥ तेनामृतत्वमश्यामित्याह ॥ अमृ

तमेवात्मं धत्ते। वयो दात्र इत्याह। वय एवैनं कृत्वा। सुवर्गं लोकं
गमयति। मयो मह्यमस्तु प्रतिग्रहीत्र इत्याह॥४॥ यद्वै शिवं। त
न्मयः। आत्मन एवैषा परीत्तिः। क इदं कस्मा अदादित्याह। प्रजा
पतिर्वै कः। स प्रजापतये ददाति। कामः कामायेत्याह। कामेन
हि ददाति। कामेन प्रतिगृह्णाति। कामो दाता कामः प्रतिग्रहीतेत्या
ह॥५॥ कामो हि दाता। कामः प्रतिग्रहीता। कामं समुद्रमाविशे
त्याह। समुद्र इव हि कामः। नेव हि कामस्यान्तोऽस्ति। न समुद्रस्य।

ब्रा· द्वि·
३०

कामेन त्वा प्रतिगृह्णामीत्याह। येन कामेन प्रतिगृह्णाति। स एवै
नममुष्मिंल्लोके काम आगच्छति। कामैतत्त एषा ते काम दक्षिणे
त्याह। काम एव तद्यजमानोऽमुष्मिंल्लोके दक्षिणामिच्छति। न प्रति
गृहीतरि। य एवं विद्वान्दक्षिणां प्रतिगृह्णाति। अनृणामेवैनां प्र
तिगृह्णाति॥६॥ ज्ञीनात्यम्बुमित्याहांगीरसः प्रतिगृहीत्रे इत्या
ह प्रतिगृहीतेत्याह दक्षिणेत्याह चत्वारि च॥५॥ अंतो वा एष य
त्तस्या। यद्देवा मममहे। दश्वासेदंतस्पर्शातियाकस्मिस्तुवंति। यस्त

३०

स्युवांतैगृत्वा। अन्नाद्यमवरुंधते। तिसृभिः स्तुवंति। त्रयइमेलो
काः। एभ्यएवलोकेभ्योन्नाद्यमवरुंधते। इष्टिवतीर्भवंति। अ
न्नंवैइष्टिः।१। अन्नमेवावरुंधते। मनसाप्रस्तौति। मनसोद्गा
यति। मनसाप्रतिहरति। मनइवहिप्रजापतिः। प्रजापतेराप्त्यै
। देवावैसुपर्णाः। तेषामियंराज्ञी। यत्सर्पराज्ञियाऋग्भिस्तुवंति।
अस्यामेवप्रतितिष्ठंति।२। चतुर्होतॄन्होताव्याचष्टे। स्तुतमनु
शंसति त्रिरात्र्यै। अंतोवाएषयज्ञस्य। यद्दशममहः। एतत्खलु

१.द्वि. वै देवानां परमं गुह्यं ब्रह्म। यच्चतुर्होतारः। दशामेहऽश्चतुर्होतॄ

३१ न्व्याचष्टे। यत्तस्यैवां तं गत्वा। परमं देवानां गुह्यं ब्रह्मलावरुंधे। त

देव प्रकाशं गमयति॥३॥ तदेनं प्रकाशं गतं। प्रकाशं प्रजानां

गमयति। वाचं यच्छति। यत्तस्य धृत्यै। यजमानदेवत्यं वा अहः।

भ्रातृव्यदेवत्या रात्रिः। अहा रात्रिं ध्यायेत्। भ्रातृव्यस्यैव त

ल्लोकं वृङ्क्ते। यदि वा वाचं विसृजेत्। अहर्भ्रातृव्यायोच्छिऽषेत्

। यं नक्तं विसृजेत्। रात्रिं भ्रातृव्यायोच्छिऽषेत्। अधिवृक्षसूर्ये ३१

वाचं विसृजति । एतावंतमेवास्मै लोकमुच्छिंषति । यावदादित्यो
स्तमेति ॥४॥ अग्निमिति छंति गमयति । छिंषेत्र पंच च ॥६॥ प्रजाप
तिः प्रजा असृजत । ताः सृष्टाः समश्लिष्यन् । ता रूपेणानुप्राविश
त् । तस्मादाहुः । रूपं वै प्रजापतिरिति । ता नाम्नानुप्राविशत् । त
स्मादाहुः । नाम वै प्रजापतिरिति । तस्मादप्यामित्रौ संगत्य । ना
म्ना चेद्ध्वयेते ॥१॥ मित्रमेव भवतः । प्रजापतिर्देवासुरानसृज
त । स इंद्रमपि नासृजत । तं देवा अब्रुवन् । इंद्रं नो जनयेति । स अ

ब्रा·द्वि·
३२

त्वं निं क्रमपश्यत । तमसृजत । तं त्रिष्टुग्वीर्यं भूत्वानुव्याविशत् । तस्य वज्रः पंचदशो हस्त आपद्यत । तेनोद्यतेनासुरानभ्यभवत् ॥४॥ य एवं वेद । अभि भ्रातृव्यान् भवति । ते देवा असुरैर्विजित्य । सुवर्गं लोकमायन् । तेमुष्मिंल्लोके व्यक्षुध्यन् । ते ब्रुवन्नमुतः प्रदानं वा उपजीविमेति । ते सप्तहोतारं यज्ञं विधायायास्यं । आंगिरसं प्राहिण्वन् । एतेनामुत्र कल्पयेति ॥५॥ तस्य वा इयं क्लृप्तिः । यदिदं किंच । य एवं वेद । कल्पतेस्मै । स वा अयं म

तुष्वेषु यत्तः सुत्तहोता। अमुत्र सद्यो देवेभ्यो हव्यं वहति। य
एवं वेद। उपैनं यज्ञो नमति। सोमन्यत। अभि वा इमे स्माल्लो
काद् अमुं लोकं क्रमिष्यंत इति। स वाचस्पते हृदिति व्याहरत्।
तस्मात् पुत्रो हृदयं। तस्माद् स्माल्लोकाद् अमुं लोकं नाभिकामयं
ते। पुत्रो हि हृदयं ॥४॥ कयैते अभवस्कत्स्व येतीति चत्वारि च
॥७॥ देवा वै चतुर्होतृभिर्यज्ञमतन्वत। ते विपाप्मना भ्रातृव्य
पाजयंत। अभि सुवर्गं लोकमजयन्। य एवं विद्वांश्चातुर्हो

तै॰ ब्रा॰ ३३

त्रभिर्यु॒क्तं तनुते। वि पा॒प्मना॒ भ्रातृ॑व्येण जयते। अ॒भि सु॑व॒र्गं लो॒कं जयति। षड्ढो॒त्रा ना॑यु॒णी यु॒मासा॑द्यति। अ॒मुष्मै॒ वै लो॒काय॒ षड्ढो॑ता। घ्नंति॒ खलु॒ वा ए॒तत्सोमं॑। यद॑भिषु॒ण्वंति॑॥१॥ ऋ॒जुधे॒वैन॑मुमुं लो॒कं ग॑मयति। चतु॑र्होत्रा ति॒ष्यं॑। य॒ज्ञो॒ वै चतु॑र्होता। य॒ज्ञ ए॒वात्मं धत्ते। पंच॑होत्रा प॒शुमुप॑सा॒दयति। सु॒व॒र्ग्यो॑ वै पंच॑होता। यज॑मानः प॒शुः। यज॑मानमे॒व सु॑व॒र्गं लो॒कं ग॑मयति। ग्रहा॑न्गृही॒त्वा स॒प्तहो॑तारं जुहोति। इ॒न्द्रि॒यं वै स॒प्तहो॑ता॥२॥ इ॒न्द्रि॒य

मेवात्मंधत्ते। योवैचतुर्होतॄननुसवनंतर्पयति। तृप्यतिप्रजया
पशुभिः। उपैनंसोमपीथोनमति। बहिष्पवमानेदशहोतारं
व्याचक्षीत। माध्यंदिनेपवमानेचतुर्होतारं। आर्भवेपवमानेपं
चहोतारं। पितृयज्ञेषड्ढोतारं। यज्ञायज्ञियस्यस्तोत्रेसप्तहोता
रं। अनुसवनमेवैनांस्तर्पयति॥ ३॥ तृप्यतिप्रजयापशुभिः
। उपैनंसोमपीथोनमति। देवावैचतुर्होतृभिःसत्रमासत।
ऋद्धिपरिमितंयशस्कामाः। तेऽब्रुवन्। यन्नःप्रथमंयशऋच्छा

ता।सर्वैषांनस्तत्सुहासत्विति।सोमश्चतुर्होता।अग्निःपंचहोता।धा
ताषड्ढोता।।४।।इंद्रःसप्तहोता।प्रजापतिर्दशहोता।तेषाꣳसोम
ꣳराजानंयशआर्छत्।तन्न्यकामयत।तेनापाक्रामत्।तेनप्रला
यमचरत्।तंदेवाःप्रैषैःप्रैषमैछन्।तत्प्रैषाणांप्रैषत्वं।निवि
द्भिर्न्यवेदयन्।तंनिविदांनिवित्वं।।५।।आप्रीभिराप्नुवन्।तदा
प्रीणामाप्रित्वं।तमघ्नन्।तस्ययशोव्यगृह्णत।तेग्रहाअभव
न्।तद्ग्रहाणां।ग्रहत्वं।यस्यैवंविदुषोग्रहागृह्यंते।तस्यत्वेवगृ

हा

हीताः। तेब्रुवन्। योवैनः श्रेष्ठोभूत्। ६।। तमवधिष्म। पुनरिम
ंसुवामहाइति। तंछंदोभिरसुवंत। तछंदसांछंदस्त्वं। सा म्ना
समानयन्। तत्साम्नः सामत्वं। उक्थैरुदस्थापयन्। तदुक्थानां
मुक्थत्वं। यएवंवेद। प्रत्येवतिष्ठति।।७।। सर्वमायुरेति। सोमोवै
यज्ञः। यएवंविद्वांत्सोममागच्छति। यज्ञएवेनमृच्छति। तस्मादा
हुः। यश्चैवंवेद यश्चन। तावुभौसोममागच्छतः। सोमोहियज्ञः
। तंत्वाव यज्ञोऽऋच्छति। त्याहुः। यः सोमेसोमंप्राहेति। तस्मात्सोमे

सोमः प्रोच्यः । यशएवैनमृच्छति ॥ ८ ॥ अभिषुण्वंति सप्तहोतातर्प
यति षड्ढोत्रा निवित्तमभक्षंति भक्षति प्राहेति द्वे च ॥ ८ ॥ इदं वा अग्रे नैव
किंचनासीत् । न द्यौरासीत् । न पृथिवी । नांतरिक्षं । तदसदेव सन्म
नोकुरुत स्यामिति । तदतप्यत । तस्मात्तेपानाद्धूमोजायत । तद्भू
योतप्यत । तस्मात्तेपानादग्निरजायत । तद्भूयोतप्यत ॥ १ ॥ त
स्मात्तेपानाज्ज्योतिरजायत । तद्भूयोतप्यत । तस्मात्तेपानादर्चि
रजायत । तद्भूयोतप्यत । तस्मात्तेपानान्मरीचयोजायंत । तद्भू

योऽतप्यत । तस्मात्तेपानादुद्वारा अजायंत । तद्भूयोऽतप्यत । तद्द
भ्रमिव समहन्यत । तद्वस्तिमभिनत् ॥ २ ॥ स समुद्रोऽभवत् । त
स्मात्समुद्रस्य न पिबंति । प्रजननमिव हि मन्यंते । तस्मात्पशो
र्जायमानादापः पुरस्ताद्यंति । तद्दशहोतान्वसृज्यत । प्रजाप
तिर्वै दशहोता । य एवं तपसो वीर्यं विद्वाꣳस्तप्यते । भवत्येव ।
तद्वा इदमापः सलिलमासीत् । सोऽरोदीत्प्रजापतिः ॥ ३ ॥ स कस्मा
अज्ञि । यद्यस्या अप्रतिष्ठाया इति । यदप्स्ववापद्यत । सा पृथिव्य

भवत्। यच्चमृष्टा तदंतरिक्षमभवत्। यदूर्ध्वमुदमृष्टा सा द्यौ
रभवत्। यदरोदीत्तद्रनयो रोदस्त्वं॥४॥ य एवं वेद नास्य
हे रुदंति। एतद्वा एषां लोकानां जन्म। य एवमेषां लोकानां जन्म
वेद नैषु लोकेष्वार्तिमार्छति। स इमां प्रतिष्ठामविंदत। स इमां
प्रतिष्ठां वित्वाकामयत प्रजायेयेति। स तपोतप्यत। सोंतर्वा
नभवत्। स जघनादसुरानसृजत॥५॥ तेभ्यो मृन्मये पात्रेन्न
मदुहत्। यास्य सा तनूरासीत्। तामपाहत। सा तमिस्राभव

त्। सोऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्
। स प्रजननादेव प्रजा असृजत। तस्मादिमा भूयिष्ठाः। प्रजनने
न्नाध्येना असृजत॥६॥ ताभ्यो दारुमये पात्रे पयोऽदुहत्। यास्य
सा तनूरासीत्। तामपाहत। साजोत्स्ना ऽभवत्। सोऽकामयत
प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स उपपक्षाभ्यां
मेवर्तूनसृजत। तेभ्यो रजते पात्रे घृतमदुहत्। यास्य सा तनू
रासीत्॥७॥ तामपाहत। सोऽहोरात्रयोः संधिरभवत्। सोऽकाम

शा॰ ब्रि॰
३७

यत प्रजायेयेति। स तपोतप्यत। सोंतर्वान भवत्। स मुखाद्देवानसृजत। ते भ्यो हरिते पात्रे सोममदुहत्। यास्मसात्वन्नृत्सीत्। तामपाहत। तदहरभवत्॥८॥ एते वै प्रजापतेर्दोहाः। यएवं वेद। दुह एव प्रजाः। दिवा वै नोभूदिति। तद्देवानां देवत्वं। यएवं देवानां देवत्वं वेद। देववानेव भवति। एतद्वा अहोरात्राणां जन्म। यएवमहोरात्राणां जन्म वेद। नाहोरात्रेष्वार्तिमार्छति॥९॥ असतोधिमनोसृज्यत। मनः प्रजापतिमसृजत। प्रजापतिः प्रजा

३७

असृजत। तद्वा इदं मनस्येव परमं प्रतिष्ठितं। यदिदं किंच। तदे
तच्छ्रौवस्यसं नाम ब्रह्म। व्युच्छंतीव्युच्छंत्यस्मै वस्यसी वस्यसी व्यु
च्छति। प्रजायते प्रजया पशुभिः। प्र परमेष्ठिनो मात्रामाप्नोति।
य एवं वेद॥१०॥ अग्निरजायत तद्भूयोऽतप्यत ताभिनद्ररोहीस्त्र
जापत्नीरोदस्त्वमसृजतासृजत घृतमुहधास्यसातद्रासी
दहरभवदृच्छति वेद॥११॥ इदं धूमोऽग्निर्ज्योतिरर्चिर्मरीचय उ
दारास्तदभ्रंजघनात्सातमिस्रास प्रजननात्साजोत्स्नास उप

ग्रा·द्वि·
३८

पृक्षाभ्याꣳसोहोरात्रयोःसंधिःसमुखात्तद्दहदेवानसृतोधि
मुन्मयैहारुमयैरजुतेहरितितेभ्यस्ताभ्योहैतेन्नंपयोघृतꣳसो
मं।अंनमदुहत्पयोदुहघृतमंदुहत्सोमंमदुहत्।प्रजापति
रिंद्रमसृजतानुजावरंदेवानां।तंप्राहिणोत्।परेहि।एतेषांदे
वानामधिपतिरेधीति।तंदेवाअब्रुवन्।कस्त्वमसि।वयंवैत्व
छ्रेयाꣳसस्मरति।सोब्रवीत्।कस्त्वमसिवयंवैत्वछ्रेयाꣳसस्म
रतिमादेवाआवोचंनिति।अपुवाइदंतर्हिप्रजापतौहरंआसी

त॥१॥ यदस्मिंनादित्यो। तदेनमब्रवीत्। एतन्मे त्वं यच्छ। अथा
हमेतेषांदेवानामधिपतिर्भविष्यामीति। कोऽहं स्यामित्यब्र
वीत्। एतत्प्रदायेति। एतत्स्या इत्यब्रवीत्। यदेतद्ब्रवीषीति। को
ह वै नाम प्रजापतिः। य एवं वेद॥२॥ विदुरेनं नाम्ना। तद्दस्मै रुक्मं
कृत्वा प्रत्यमुंचत्। ततो वा इन्द्रो देवानामधिपतिरभवत्। अधि + य एवं वेद
पतिरेव समानानां भवति। सोऽमन्यत। किं किं वा अकरमिति। स चं
द्रं म आहरेति प्रालपत्। तच्चंद्रमसश्चंद्रमस्त्वं। य एवं वेद॥३॥ चं

र्वो नेव भवति । तं देवा अब्रुवन् । सुवीर्यो मर्या यथा गोपायत इ
ति । तत्सुवीर्यस्य सुवीर्यत्वं । य एवं वेद । न्ने नेर्द्ध्नोति । कस्मुनास्मिन्वा इ
दमिंद्रियं प्रत्यस्थादिति । तदिंद्रस्येंद्रत्वं । य एवं वेद । इंद्रियास्मेव
भवति ॥ ४ ॥ अयं वा इदं परमोऽभूदिति । तत्परमेष्ठिनः परमेष्ठित्वं
। य एवं वेद । परमामेव काष्ठां गच्छति । तं देवाः समंतं पर्यविश्र
न् । वसवः पुरस्तात् । रुद्रा दक्षिणतः । आदित्याः पश्चात् । वि
श्वे देवा उत्तरतः । अंगिरसः प्रत्यंचं ॥ ५ ॥ साध्याः परांचं । य ए

वं वेद ॥ उपैनꣳ समाना: संविशंति ॥ स प्रजापतिरेव भूत्वा प्रजा आवर्तयत ॥ ता अस्मै नातिष्ठंत नाद्याय ॥ तामुखं पुरस्तात्सव्यंती ॥ दक्षिणतः पर्यायन् ॥ स दक्षिणतः पर्यवर्तयत ॥ तामुखं पुरस्तात्सव्यंती ॥ मुखं दक्षिणतः ॥ ६ ॥ पश्चात्सर्यायन् ॥ स पश्चात्सर्यवर्तयत ॥ तामुखं पुरस्तात्सव्यंती ॥ मुखं दक्षिणतः ॥ मुखं पश्चात ॥ उत्तरतः पर्यायन् ॥ स उत्तरतः पर्यवर्तयत ॥ तामुखं पुरस्तात्सव्यंती ॥ मुखं दक्षिणतः ॥ मुखं पश्चात ॥ ७ ॥ मुखमुत्तरतः ॥ ऊर्ध्वा उ

शयन्त्। सङ्कुपरिशून्यं वर्तयन्त। ताः सर्वतोमुखो भूत्वावयत्।
ततो वै तस्मै प्रजा अतिष्ठन्त। अन्नाद्याय। य एवं विद्वानेतरिं च वर्तय
ते निचै। प्रजापतिरेव भूत्वा प्रजा अत्ति। तिष्ठन्ते ऽस्मै प्रजा अन्नाद्या
य। अन्नाद एव भवति॥९॥ आसीद्वेदं चन्द्रमस्त्वं य एवं वेदेन्द्रिया
व्येव भवति प्रत्यं चं मुखं दक्षिणतो मुखं पुरस्तान्नवं च॥१०॥ प्रजा
पतिरकामयत बहोर्भूयान्त्स्यामिति। स एतं दर्शं होतारमप
श्यत्। तं प्रायुङ्क्त। तस्य प्रयुक्ति बहोर्भूयानभवत्। यः काम

येत बहोर्भूयान्त्स्यामिति। स दशहोतारं प्रयुंजीत। बहोरेव
भूयान्भवति। सोकामयत वीरो म आजायेतेति। स दशहोतुश्च
तुर्होतारं निरमिमीत। तं प्रायुंक्त। ११। तस्य प्रयुक्ती वीरोजायत
। यः कामयेत वीरो म आजायेतेति। स चतुर्होतारं प्रयुंजीत
। आस्य वीरो जायते। सोकामयत पशुमान्त्स्यामिति। स चतु
र्होतुः पंचहोतारं निरमिमीत। तं प्रायुंक्त। तस्य प्रयुक्ति पशु
मानभवत्। यः कामयेत पशुमान्त्स्यामिति। स पंचहोतारं प्र

युंजीत॥२॥ प्रसुमानेव भवति। सोऽकामयत तर्त्वो मे कस्येरं नि
ति। स पंचहोतुः षड्होतारं निरमिमीत। तं प्रायुंङ्क। तस्य प्रयुक्त्य
त वो स्मा अकस्यंत। यः कामयेत तर्त्वो मे कस्येरं निति। स षड्होता
रं प्रयुंजीत। कस्यंतेस्माकृतवः। सोऽकामयत सोमपः सोमयाजी
स्यां। आ मे सोमपः सोमयाजी जायेतेति॥३॥ स षड्होतुः सप्तहो
तारं निरमिमीत। तं प्रायुंङ्क। तस्य प्रयुक्ति सोमपः सोमयाज्य
भवत्। आस्य सोमपः सोमयाज्यजायत। यः कामयेत सोम

पः सोमयाजी स्यां । आमे सोमपः सोमयाजी जायेतेति । स सुत्तहो
तारं प्रसुंजीत । सोमप एव सोमयाजी भवति । आस्य सोमपः सो
मयाजी जायते । स वा एष पृष्ठः पंचधा व्रतितिष्ठति ॥ ४ ॥ प्रजितमु
खेन । ते देवाः पृष्ठत्रित्वा सुवर्गं लोकमायन् । ते मुष्मिंल्लोके म
स्तुध्यन् । ते ब्रुवन् । अमुतः प्रदानं वाउपजिजीविमेति । तेस्स
त्तहोतारं प्रयुंजत विधायायास्यां । आंगीरसं प्राहिण्वन् । एतेनामु
त्रकल्पयेति । तस्य वा इयं कॢप्तिः ॥ ५ ॥ यदिदं किंच । य एवं वेद ।

कस्मै तेस्मै। स वा अयं मनुष्येषु यज्ञः सप्तहोता। अमुत्र सद्भ्यो दे
वेभ्यो हव्यं वहति। य एवं वेद। उपैनं यज्ञो नमति। यो वै चतुर्हो
तॄणां निदानं वेद। निदानवान् भवति। अग्निहोत्रं वै दशहोतुर्नि
दानं। दर्शपूर्णमासौ चतुर्होतुः। चातुर्मास्यानि पंचहोतुः। प
शुबंधः षड्ढोतुः। सौम्योध्वरः सप्तहोतुः। एतद्वै चतुर्होतॄणां
निदानं। य एवं वेद। निदानवान् भवति। ॥६॥ अग्निमीतृ तं प्रायुं
ङ्क्ते· पंचहोतारं प्रयुंजीत जायेते तिष्ठति क्षिप्रे दशहोतुर्नि

हानऽँसुसत्त्वं ॥१॥ प्रजापतिरकामयत प्रजाः सृजेयेति प्र
जापतिरकामयत दर्शपूर्णमासौ सृजेयेति प्रजापतिरकाम
यत प्रजायेयेति स तपः स्सत्रिवृतं प्रजापतिरकामयत प्र
जायेयेति स एतं दशहोतारं तेन दशधात्मानं देवा वै वरुण
मंत्रो वै प्रजापतिः स मंत्रिष्यन् देवा वै चतुर्होतृभिरिंदं वा अ
ग्रे प्रजापतिरिंदं प्रजापतिरकामयत बहोर्भूयानेकादश॥
॥१॥ प्रजापतिस्तज्जहस्य प्रजापतिस्तेन दशधात्मानं मुनयेवे

त्रंत्स्य वाइयंत्स्मात्ते प्राणाद्य इस्मिन्नादित्ये स षड्ढोतुः सप्तहो
तारं त्रिसन्ततिः॥ हरिः ओं॥५॥ हरिः ॐ॥ ॥ब्रह्मवादिनो वदं
ति। किं चतुर्होतॄणां चतुर्होतृत्वमिति। यद्वै वेषु चतुर्धा होतार
ः। तेन चतुर्होतारः। तस्माच्चतुर्होतार उच्यंते। तच्चतुर्होतॄणां
चतुर्होतृत्वं। सोमो वै चतुर्होता। अग्निः पंचहोता। धाता षड्ढोता
। इंद्रः सप्तहोता॥१॥ प्रजापतिर्दशहोता। य एवं चतुर्होतॄणाम्
ऋद्धिं वेद। ऋध्नोत्येव। य एषामेवं बंधुतां वेद। बंधुमान् भवति। य

एषामेवं क्लृप्तिं वेद। कल्पन्तेऽस्मै। य एषामेवमायतनं वेद। आय
तनवान्भवति। य एषामेवं प्रतिष्ठां वेद॥२॥ प्रत्येव तिष्ठति।
ब्रह्मवादिनो वदंति। दशहोता चतुर्होता। पंचहोता षड्ढोता स
प्तहोता। अथ कस्माच्चतुर्होतार उच्यंत इति। इंद्रो वै चतुर्हो
ता। इंद्रः खलु वै श्रेष्ठो देवतानामुपदेशनात्। य एवमिंद्रं श्रेष्ठं दे
वतानामुपदेशनं वेद। वसिष्ठः समानानां भवति। तस्माच्छ्रेष्ठ
मायंतं प्रथमेनैवानुबुध्यंते। अयमागन्। अयमवासादिति।

श्रा·द्वि·
४४

कीर्त्तिरस्य पूर्वा गच्छति जनतामायतः। अथो एनं प्रथमेनैवानुबु
ध्यन्ते। अयमागन्। अयमवासादिति॥ ३॥ सप्तहोता व्रतिषं वे
दं बुध्यन्ते षड्॥ ४॥ दक्षिणां प्रतिग्रहीष्यन्सप्तदशं हुत्वोपान्या
त्। आत्मानमेव समिंधे। तेजसे वीर्याय। अथो प्रजापतिरेवैनां
भूत्वा प्रतिगृह्णाति। आत्मनो नार्त्यै। यद्येनमार्त्विज्यादृतं सं
तं निर्हरेरन्। आग्नीध्रे जुहुयाद्दशहोतारं। चतुर्गृहीतेनाज्ये
न। पुरस्तात्प्रत्यङ्तिष्ठन्। प्रतिलोमं विग्राहं॥ १॥ प्राणानेवास्या

मं

पंचहोता स यति । यद्येनं पुनरुपुत्रिक्षेयुः । अग्नीध्र एव जुहुयाद्दश
होतारं । चतुर्गृहीतेनाज्येन । पुरस्तात्प्राङासीनः । अनुलोममवि
ग्राहं । प्राणानेवास्यैकल्पयति । प्रायश्चित्ती वाग्घोतेत्यृतुमुखऋ
तुमुखे जुहोति । ऋतूनेवास्मै कल्पयति । कल्पंतेस्मा ऋतवः ॥
२॥ क्लृप्ता अस्मा ऋतव आयंति । षड्ढोता वै भूत्वा प्रजापतिरि
दं सर्वमसृजत । स मनोसृजत । मनसोधि गायत्रीमसृजत
। तज्जो युत्री यशा आर्छत् । तामालभत । गायत्रिया अधि छंदांसि स

सृजत। छंदोभ्योधिसामं। तत्साम यज्ञ आर्छत्। तदालभत॥३॥
साम्नोधियजूंष्यसृजत। यजुर्भ्योधिविष्णुं। तद्विष्णुं यज्ञ आर्छत्
। तमालभत। विष्णोरध्योषधीरसृजत। ओषधीभ्योधिसोमं। तत्सो
मं यज्ञ आर्छत्। तमालभत। सोमादधिपशूनसृजत। पशुभ्योधी
न्द्रं॥४॥ तदिंद्रं यज्ञ आर्छत्। तदेनं नातिप्राच्यवत। इंद्र इव यश
स्वी भवति। य एवं वेद। नैनं यज्ञोतिप्रच्यवते। यद्वा इदं किंचात
त्सर्वमुत्तान एवांगीरसः प्रत्यगृह्णात। तदेनं प्रतिगृहीतं ना

हि । नत । यत्किंच व्रतिरस्नीयात् । तत्सर्वं मुत्त्वा नस्त्वां गिरुसः व्रति
रस्नाति विसेव व्रतिरस्नीयात् । इयं वाउत्वा नओ गीरसः । अनये
वै नुस्मृतिरस्नाति । नेनऽ हिनस्ति । बर्हिषा व्रतीया जां वास्वेवा
। एतद्वै पस्त्रूनां प्रियं धाम । प्रियेणो वै नं धाम्ना प्रत्येति ॥ ॥ विग्रा
ह मृतवृस्तदालभुते द्रं रस्नीयात्स इ ॥ ३ ॥ योवाअविद्वान्नि वृ
र्तयते । विरी षसपाप्मामुष्मिंलोके भवति । अथयोविद्वांनिवृ
र्तयते । सरी षविपाप्मामुष्मिंलोके भवति । देवता वै सत्तपुहि

कामान्यवर्त्तयंत। अग्निश्च पृथिवी च। वायुश्चांतरिक्षं च। आदि-
त्यश्च द्यौश्च चंद्रमाः। अग्निर्न्यवर्त्तयत। स सोहस्त्रमपुष्यत॥१॥ पृ-
थिवी न्यवर्त्तयत। सौषधीभिर्वनस्पतिभिरपुष्यत। वायुर्न्यवर्त्त-
यत। स मरीचीभिरपुष्यत। अंतरिक्षं न्यवर्त्तयत। तद्वयोभिर-
पुष्यत। आदित्यो न्यवर्त्तयत। स रश्मिभिरपुष्यत। द्यौर्न्यवर्त्तय-
त। सा नक्षत्रैरपुष्यत। चंद्रमा न्यवर्त्तयत। सोहोरात्रैरर्द्धमासै-
र्मासैर्ऋतुभिः संवत्सरेणापुष्यत। तान्पोषान्पुष्यति। यांस्ते

पुष्यन्। य एवं विद्वान्निर्ववर्त्तयते परि च ॥२॥ अपुष्यन्क्षत्रे
ऽपुष्यत्पंक्ते च ॥३॥ तस्य वा अग्नेर्हिरण्यं प्रतिजगृहुषः। अ
र्धमिन्द्रियस्यापाक्रामत्। तदेतेनैव प्रत्यगृह्णात्। तेनैवैसोऽ
र्धमिन्द्रियस्यात्मन्नुपाधत्त। अर्धमिन्द्रियस्यात्मन्नुपाधत्ते। य एवं वि
द्वान्हिरण्यं प्रतिगृह्णाति। अथ यो विद्वान्प्रतिगृह्णाति। अर्धमस्ये
न्द्रियस्यापक्रामति। तस्य वै सोमस्य वासः प्रतिजगृहुषः। तृ
तीयमिन्द्रियस्यापाक्रामत् ॥४॥ तदेतेनैव प्रत्यगृह्णात्। तेनैवै

सतृतीयमिंद्रियस्यात्मन्नुपाधत्त। तृतीयमिंद्रियस्यात्मन्नुपाध
त्ते। यएवंविद्वान्वासःप्रतिगृह्णाति। अथयोविद्वान्प्रतिगृह्णाति
। तृतीयमस्येंद्रियस्यापक्रामति। तस्यवैरुद्रस्यगांप्रतिजग्रु
हुषः। चतुर्थमिंद्रियस्यापाक्रामत्। तामेतेनैव प्रत्यगृह्णात्
। तेनुवैसचतुर्थमिंद्रियस्यात्मंनुपाधत्त॥३॥ चतुर्थमिंद्रियस्या
त्मंनुपाधत्ते। यएवंविद्वान्गांप्रतिगृह्णाति। अथयोविद्वान्प्रतिगृ
ह्णाति। चतुर्थमस्येंद्रियस्यापक्रामति। तस्यवैवरुणस्याश्वंप्रति

जग्रुकुषः। पंचममिंद्रियस्यापाक्रामत्। तमेतेनैव प्रत्यश्लात्।
तेनु वैस पंचममिंद्रियस्यात्मंनुपाधत्त। पंचममिंद्रियस्यात्मं
नुपाधत्ते। य एवं विद्वानश्वं प्रतिगृह्णाति।।२।। अथ यो विद्वान्प्रति
गृह्णाति। पंचमं मस्येंद्रियस्यापक्रामति। तस्य वै प्रजापतेः पु
रुषं प्रतिजग्रुकुषः। षष्ठमिंद्रियस्यापाक्रामत्। तमेतेनैव प्र
त्यश्लात्। तेनु वैस षष्ठमिंद्रियस्यात्मंनुपाधत्त। षष्ठमिंद्रिय
स्यात्मंनुपाधत्ते। य एवं विद्वान्पुरुषं प्रतिगृह्णाति। अथ यो विद्वा

श्रा·द्वि·
४८

न्वतिगृह्णाति।चक्षुर्मऽस्येंद्रियस्यापक्रामति॥४॥तस्यवैमनोस्त
स्यंवतिजगृहुरुषः।सुचक्षुर्ममेंद्रियस्यापाक्रामत्।तमेतेनैववृत्रस्य
गृह्णात्।तेनुवैससर्वचक्षुर्ममेंद्रियस्यात्मंनुपाधत्त।सुचक्षुर्ममेंद्रि
यस्यात्मंनुपाधत्ते।यएवंविद्वान्स्तस्यंवतिगृह्णाति।अथयोवि
द्वान्वतिगृह्णाति।सचक्षुर्ममस्येंद्रियस्यापक्रामति।तस्यावाउच्चा
नस्यांगीरसस्याघ्राणस्वतिजगृहुरुषः।अहममेंद्रियस्यापाक्रा
मत्॥५॥तद्देतेनैववृत्रस्यगृह्णात्।तेनुवैसोहममेंद्रियस्यात्मंनु

४८

पाधत्त। अथ ममिंद्रियस्यात्मंनु पाधत्ते। य एवं विद्वान प्राणत्स्वपिति
गृह्णाति। अथ यो विद्वान्स्वपति गृह्णाति। अथ मम र्स्येंद्रियस्यापक्राम
ति। यद्वाइदं किंच। तत्सर्वमुद्वान एवांगीरसः प्रत्यगृह्णात। तदेनं
प्रतिगृहीतुं नाहिनत्। यत्किंच प्रतिगृह्णीयात्। तत्सर्वमुद्वानस्त्वां
गीरसः प्रतिगृह्णात्विति स्यैव प्रतिगृह्णीयात्। इयं वाउद्गान आंगी
रसः। अन्नयै वै नुत्प्रतिगृह्णाति। नैनंहिनस्ति॥३॥ ततो यमिंद्रि
यस्यापाक्रामच्चक्षुस्तु पर्मिंद्रियस्यात्मंनुपाधत्ता सर्वंप्रतिगृह्णातिष

श्वमस्येंद्रियस्यापक्रामत्यश्वमस्मिंद्रियस्यापाक्रामत्त्वतिरश्ची
याश्चत्वारि च ॥४॥ तस्य वा अग्नेर्हिरण्यं सोमस्य तद्वै तेन देवा रुद्र
स्यगांतामेतेनैकं वरुणस्य प्रजापतेर्मनोऽस्त्तसंतमेतेन त्रीण्युत्त्ता
नस्य तद्वै तेनैकं सोमायुवासो रुद्रायुगं वरुणायाश्वं प्रजापत
ये पुरुषं मनवे तत्समुत्त्तानस्य क्राणान ॥५॥ ब्रह्मवादिनो वदंति
। यद्द्वादशाहेतारः सत्त्रमासत । केन ते गृहपतिनार्ध्नुवन् । केन प्र
जा असृजंतेति । प्रजापतिना वै ते गृहपतिनार्ध्नुवन् । तेन प्रजा

असृजंत। यच्चतुर्होतारः सत्रमासंत। केनुते गृहपतिनार्ध्नुवन्।
केनौषधीरसृजंतेति। सोमेनवैते गृहपतिनार्ध्नुवन्॥१॥ तेनौष
धीरसृजंत। यत्पंचहोतारः सत्रमासंत। केनुते गृहपतिनार्ध्नुवन्
। केनेभ्यो लोकेभ्यो सुरान्प्राणुदंत। केनैषांपशूनवृंजतेति। अग्नि
नावैते गृहपतिनार्ध्नुवन्। तेनेभ्यो लोकेभ्यो सुरान्प्राणुदंत। तेनैषां
पशूनवृंजत। यत्सप्तहोतारः सत्रमासंत। केनुते गृहपतिनार्ध्नुवन्
॥२॥ केनुर्तूनकल्पयंतेति। धात्रावैते गृहपतिनार्ध्नुवन्। तेनर्तू

नेकस्य यंता। यत्सुप्रहोतारः सत्रमासत। केनतेगृहपतिनार्धुव
न। केनसुवर्गायन। केनेमांलोकान्समतनुवन्निति। अर्युणमावै
तेगृहपतिनार्धुवन्। तेनेमांलोकान्समतनुवन्निति॥ २॥ एतेवै
देवागृहपतयः। तान्यएवंविद्वान्। अप्यन्यस्यगार्हपते दीक्ष
ते। अवांतरमेवसत्रिणामृध्नोति। योवाअर्यमणंवेद। दानका
माअस्मैप्रजाभवंति। पुत्रोवाअर्यमा। आर्यावसतिरितिवै
तमाकुर्यंप्रवाःसंति। आर्यावसतिर्भवति। यएवंवेद॥ ४॥ य

वाइदं किंचा। तत्सर्वं चतुर्होतारः। चतुर्होतृभ्योऽधि पृष्ठो निर्मित
।।स य एवं विद्वान्विवदेत। अहमेव भूयो वेद। यश्चतुर्होतॄन्वेदे
ति। सर्व्यैव भूयो वेद। यश्चतुर्होतॄन्वेद। यो वै चतुर्होतॄणां होे
तॄन्वेद। सर्वासु प्रजास्वन्नमत्ति।।५।।सर्वा दिशोऽभिजयति। प्र
जापतिर्वै दशहोतॄणां होता। सोमश्चतुर्होतॄणां होता। अग्नि
:पंचहोतॄणां होता। धाता षड्ढोतॄणां होता। अर्यमा सप्तहो
तॄणां होता। एते वै चतुर्होतॄणां होतारः। तान्य एवं वेद। सर्वा

शा॰ द्वि॰
५१

सुप्रजाः स्वं नमन्ति । स वा दिग्भ्यो भिजयति ॥ ४ ॥ आ ध्रुं ध्रुवन्त्या ध्रुवन्ति
त्येवं वेदात्ति स वा दिग्भ्यो भिजयति ॥ ५ ॥ प्रजापतिः प्रजाः सृष्ट्वा व्य
स्रंसत । स हृदयं भूतो ऽशयत । आत्मन्हा ३ इत्यकूयत । आपः
प्रत्यशृण्वन् । ता अग्निहोत्रेणैव यज्ञक्रतुनोपपर्यावर्तन्त । ताः
कुसिंधमुपोहन् । तस्मादग्निहोत्रस्य यज्ञक्रतोः । एकं क्रत्विक्
। चतुष्कृत्वो ऽकूयत । अग्निर्वायुरादित्यश्चन्द्रमाः ॥ ते प्रत्यशृण्व
न् । ते दर्शपूर्णमासाभ्यामेव यज्ञक्रतुनोप पर्यावर्तन्त । तउपो

ह ८ श्चत्वार्यंगानि। तस्माद्दर्शपूर्णमासयोर्यज्ञक्रतोः। चत्वार ऋत्वि
जः। पंचकृत्वोकुंयत। पुरावुः प्रत्यशृण्वन्। ते चातुर्मास्यैरेव य
ज्ञक्रतुनोपपर्यावर्तंत। तउपोहं लोम छवीमांसमस्थिमज्जा
नं। तस्माच्चातुर्मास्यानां यज्ञक्रतोः॥ २॥ पंचर्त्विजः। षट् कृत्वोकु
यत। क्रतवः प्रत्यशृण्वन्। ते पशुबंधेनैव यज्ञक्रतुनोपपर्यावे
र्तंत। तउपोह स्तनावंडौ शिश्नमवांचं प्राणं। तस्मात्पशुबंधस्य
यज्ञक्रतोः। षड्ऋत्विजः। सप्तकृत्वोकुयत। होत्राः प्रत्यशृण्वन्। ता

ःसौम्येनैवाध्वरेणयज्ञक्रतुनोपपर्यावर्त्तेत॥३॥ताउपोहन्सुत्त
र्त्रीर्षुण्यास्माणान्।तस्मात्सौम्यस्याध्वरस्ययज्ञक्रतोः॥सप्तहोत्राः
प्राचीर्वषट्कुर्वंति।इष्ट्वाकृत्वोकयत।तपुःप्रत्यस्मणोत।तत्क
र्मणेवसंवत्सरेणसर्वैर्यज्ञक्रतुभिरुपपर्यावर्तेत।तत्सर्वेमा
त्मानमपरिवर्गमुपोहत।तस्मात्संवत्सरेसर्वैर्यज्ञक्रतवोवरु
ध्यंते।तस्मादिन्द्रोहोताचतुर्होता।पंचहोताषड्होतासप्तहोता।
एकहोत्रेबलिंहरंति।हरंत्यस्मैप्रजाबलिं।एनमप्रतिख्यातं

गछति। य एवं वेद॥४॥ चंद्रमा वा ऋतुर्मास्यानां यज्ञक्रतोरध्वरेण

यज्ञक्रतोर्नोपपर्यावर्त्तत स्म तस्य होता चत्वारि च॥५॥ प्रजापतिः पु

रुषमसृजत। सोऽग्निरब्रवीत्। ममायमन्नमस्त्विति। सो बिभेत्

। सर्वं वै मायं प्रधक्ष्यतीति। स एतांश्चतुर्होतॄनात्मस्परणान

पश्यत्। तानजुहोत्। ते वै स आत्मानमस्पृणोत्। य एवं अग्निहोत्रं जु

होति। एकहोतारमेव तद्यज्ञक्रतुमाप्नोत्यग्निहोत्रं॥६॥ कुसिंधं

चात्मनस्पृणोति। आदित्यस्य च सायुज्यं गछति। चतुरुन्नयति।

चतुर्होतारमेवतद्यज्ञक्रतुमाप्नोति दर्शपूर्णमासौ। चत्वारि चा
त्मनोंगानि स्पृणोति। आदित्यस्य च सायुज्यं गच्छति। चतुरुत्त
पति। सुमित्यं च मी। पंचहोतारमेवतद्यज्ञक्रतुमाप्नोति चातुर्मा
स्यानि। लोमत्वङ्मांसमस्थिमज्जानं॥२॥ तानि चात्मनः स्पृणो
ति। आदित्यस्य च सायुज्यं गच्छति। चतुरुत्तपति। द्विर्जुहोति। ष
ड्ढोतारमेवतद्यज्ञक्रतुमाप्नोति पशुबंधं। स्तनौ कांडे शिश्नमवां
चं प्राणं। तानि चात्मनः स्पृणोति। आदित्यस्य च सायुज्यं गच्छति।

चतुरुन्नयति । द्विर्जुहोति । ३ । समित्संप्रभी । सप्तहोतारमेव तद्य-
ज्ञक्रतुमाप्नोति सौम्यमध्वरं । सप्त चात्मनः शीर्षण्यान्प्राणान्प्रीणा-
ति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । द्विर्जुहोति । द्वि-
र्निमार्ष्टि । द्विः प्राश्नाति । दशहोतारमेव तद्यज्ञक्रतुमाप्नोति संव- त
त्सरं । सर्वं चात्मानमपरिवर्गं स्पृणोति । आदित्यस्य च सायुज्यं
गच्छति ॥४॥ अग्निहोत्रं प्रज्ञानं द्विर्जुहोत्यपरिवर्गं स्पृणोत्येके
च ॥५॥ अपक्रामत गर्भिण्यः । प्रजापतिरकामयत प्रजायेयेति ।

।।० दि० ५४

स तपो तप्यत। सोंतर्वा न भवत्। स हरितः श्यावो भवत्। तस्मा

त्स्त्र्यंतर्वत्नी। हरिणी सती श्यावा भवति। स विजायमानो गर्भेणा

तांम्यत्। स तांतः कृष्णः श्यावो भवत्। तस्मात्तांतः कृष्णः श्यावो

भवति। तस्यासुरेवाजीवत्।।१।। तेनासुनासुराननसृजत। तद

सुराणामसुरत्वं। य एवमसुराणामसुरत्वं वेद। असुमानेव भ

वति। नैनमसुर्ज्जहाति। सोसुरान्सृष्ट्वा पितेवामन्यत। तदनु

पितॄनसृजत। तत्पितृणां पितृत्वं। य एवं पितृणां पितृत्वं वेद। पि

ते वै वस्वानां भवति ॥२॥ यं त्वस्य पितरो ह वै स पितॄन्त्सु ष्वामेन
स्यत । तदनु मनुष्यानसृजत । तन्मनुष्याणां मनुष्यत्वं । य एवं म
नुष्याणां मनुष्यत्वं वेद । मनुस्व्येव भवति । नैनं मनुर्ज्जहाति । तस्मै
मनुष्यान्त्ससृजानाय । दिवा देवत्रा भवत । तदनु देवानसृजत । त
द्देवानां देवत्वं । य एवं देवानां देवत्वं वेद । दिवा हैवास्य देवत्रा भवति
। तानि वा एतानि चत्वार्यंभांसि । देवा मनुष्याः पितरोऽसुराः । तेषु स
र्वेष्वंभो नभ इव भवति । य एवं वेद ॥३॥ अजो वत्सानां भवति देवा

ने सृजत सुप्तस्त्वं॥८॥ यथा स्या नंग भिण्यः। ब्रह्म वादिनो वदंति।
यो वा इमं विद्यात्। यतोयं पवते। यदभि पवते। यदभि सं पवते। स
र्वमायुरियात्। न पुरायुषः प्रमीयेत। पशुमान्स्यात्। विंदेत प्रजां
। यो वा इमं वेद॥९॥ यतोयं पवते। यदभि पवते। यदभि सं पवते।
सर्वमायुरेति। न पुरायुषः प्रमीयते। पशुमान्भवति। विंदते प्रजां
। अद्भ्यः पवते। अपोभि पवते। अपोभि सं पवते॥१०॥ अस्याः प
वते। इमामभि पवते। इमामभि सं पवते। अग्नेः पवते। अग्निमभि

पवते।अग्निमभिसंपवते।अंतरिक्षात्पवते।अंतरिक्षमभिपव
ते।अंतरिक्षमभिसंपवते।आदित्यात्पवते॥३॥आदित्यमभिप
वते।आदित्यमभिसंपवते।द्योःपवते।दिवमभिपवते।दिवम
भिसंपवते।दिग्भ्यःपवते।दिशोभिपवते।दिशोभिसंपवते।स
यत्पुरस्ताद्वाति।प्राणएवभूत्वापुरस्ताद्वाति॥४॥तस्मात्पुरस्ताद्वां
तं।सर्वाःप्रजाःप्रतिनंदंति।प्राणोहिप्रियःप्रजानां।प्राणइवप्रियः
प्रजानांभवति।यएवंवेद।सवाएषप्राणएव।अथयद्दक्षिणतो

वाति। मातरिश्वेव भूत्वा दक्षिणतो वाति। तस्माद्दक्षिणतो वातं वि
द्यात्। सर्वा दिश आवाति॥५॥ सर्वा दिशोऽनुविवाति। सर्वा दिशोऽनु
संवातीति। स वा एष मातरिश्वेव। अथ य एष पश्चाद्वाति। पवमान ए
व भूत्वा पश्चाद्वाति। पूतमस्मा आहरन्ति। पूतमुपहरन्ति। पूतम
श्नाति। य एवं वेद। स वा एष पवमान एव॥६॥ अथ य उत्तरतो
वाति। सवितेव भूत्वोत्तरतो वाति। सवितेव स्वानो भवति। य
एवं वेद। स वा एष सवितेव। तं यदेनं पुरस्तादायन्तमुपवदन्ति।

य एवास्य पुरस्तात्पाप्मानः। तांस्ते पघ्नंति। पुरस्तादितरान्पाप्म
नः सचंते। अथ य एनं दक्षिणत आयंतमुपवदंति॥ ३॥ य एवा
स्य दक्षिणतः पाप्मानः। तांस्ते पघ्नंति। दक्षिणत इतरान्पाप्म
नः सचंते। अथ य एनं पश्चादायंतमुपवदंति। य एवास्य पश्चा
त्पाप्मानः। तांस्ते पघ्नंति। पश्चादितरान्पाप्मनः सचंते। अथ य
एनमुत्तरत आयंतमुपवदंति। य एवास्योत्तरतः पाप्मानः। तां
स्ते पघ्नंति॥ ४॥ उत्तरत इतरान्पाप्मनः सचंते। तस्मादेवंविद्वान्।

श्रा·ब्रि·
५७

विवनृत्येत। प्रेवंचलेत। असेवास्योभाषेत। मुंटयेदिवाक्काय
येदिव। स्रुंगायेतेवा। उतमोपवदेयुः। उतमेपाप्मानुमपंहन्त्युरि
ति॥९॥ सयांदिराऽसुनिमेष्यन्स्यात। पुष्टांतांदिक्षांवातौवाया
त। अथप्रवेयात। प्रवाधावयेत। सातमेवरंदितंव्युहंगंधम्
भिप्रच्यवते। आस्यतंजेनपुरं पूर्वाकीर्तिर्गछति। दानंकामाअ
स्मेप्रजाभवंति। यएवंवेद॥१०॥ वेद्दसंपवतआदित्यात्पवतेवा
त्यावांत्सषपवमानएवदक्षिणतआयंतमुपवदंत्युत्तरतःपा

भानुः स्तां स्तेप घ्नंतीत्युष्टो च ॥१॥ प्रजापतिः सोमं राजानमसृजत। तं त्रयो वेदा अन्वसृज्यंत। तान्हस्ते कुरुत। अथ ह सीता सावित्री। सोमं राजानं चकमे। श्रद्धामु स चकमे। सा ह पितरं प्रजापतिमुपससार। तं होवाच। नमस्ते अस्तु भगवः। उप त्वायानि ॥१॥ प्र त्वा पद्ये। सोमं वै राजानं कामये। श्रद्धामु स कामयत इति। तस्या उह स्थागरमलंकारं कल्पयित्वा। दशहोतारं पुरस्ताद्व्यूह्य। चतुर्होतारं दक्षिणतः। पंचहोतारं पश्चात्। षड्ढोतारमुत्तर

तः॥सप्तहोतारमुपरिष्टात्।संभारैश्चपत्तिभिश्चमुखेलुंहत्वं
॥२॥आस्यार्द्धंवंत्राज।तांहोतृस्योवाच।उपमावर्तस्वेति।तं
होवाच।भोगंतुमआचक्ष्व।एतन्मआचक्ष्व।यत्तेप्राणाविति।त
स्योतुहत्त्रीन्वेदान्त्वददौ।तस्मादुहर्त्विग्यो भोगमेवहारयंते।स
यःकामयेतत्रियस्यामिति॥३॥यंवाकामयेतत्रियस्यादिति।त
स्माएतंस्यांगुरमलंकारंकल्पयित्वा।दशहोतारंपुरस्ताच्चा
रव्याये।चतुर्होतारंदक्षिणतः।पंचहोतारंपश्चात्।षड्होतारमुत्त

रुतः। सप्तहोतारमुपरिष्टात्। संभारैश्च पत्निभिश्चमुखेलंकृत्य
।आस्यार्धं व्रजेत्। प्रियो हैव भवति॥९॥अथयान्यलंकृत्यस्वामि
ति भवति॥१०॥ब्रह्मात्मन्वदसृजत। तदकामयत। समात्मनाप
द्येयेति। आत्मन्नात्मन्नित्यामंत्रयत। तस्मै दशमं हूतः प्रत्यश्र
णोत्। स दशहूतोभवत्। दशहूतोह वैनामैषः। तंवाएतंदश
हूतं संतं। दशहोतेत्याचक्षते परोक्षेण। परोक्षप्रियाइवहिदे
वाः॥११॥आत्मन्नात्मन्नित्यामंत्रयत। तस्मै सप्तमं हूतः प्रत्यश्र

ा॰ द्वि॰
५९

णोत् । स सप्तहूतोभवत् । सप्तहूतोह वै नामैषः । तं वा एतं स
प्तहूतं संतं । सप्तहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि
देवाः । आत्मन्नात्मन्नित्यामंत्रयत । तस्मै षष्ठं हूतः प्रत्यशृणो
त् । स षड्ढूतोभवत् ॥ ५ ॥ षड्ढूतोह वै नामैषः । तं वा एतं षड्ढूतं
संतं । षड्ढोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । आ
त्मन्नात्मन्नित्यामंत्रयत । तस्मै पंचमं हूतः प्रत्यशृणोत् । स पंच
हूतोभवत् । पंचहूतोह वै नामैषः । तं वा एतं पंचहूतं संतं । पं

चहोते त्याचक्षते परोक्षेण ॥३॥ परोक्षप्रिया इव हि देवाः ॥ आत्म
न्नात्मन्नित्यामंत्रयत । तस्मै चतुर्थं हूतः प्रत्यशृणोत् । स चतुर्हू
तो ऽभवत् । चतुर्हूतो ह वै नामैषः । तं वा एतं चतुर्हूतं संतं चतु
र्होते त्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । तमब्रवीत्
त्वं वै मे नेदिष्ठं हूतः प्रत्यश्रोषीः । त्वयैनानाख्यातार इति । त
स्मान्नु हैनांश्चतुर्होतार इत्याचक्षते । तस्माच्छुश्रूषुः पुत्राणा
ं हृद्यतमः । नेदिष्ठो हृद्यतमः । नेदिष्ठो ब्रह्मणो भवति । य एवं वे

दे॥४॥देवाः षट्होतोऽभवत्संचहोतेत्याचक्षते पुरोक्षेणा ओषधाः षड्
॥१३॥ ब्रह्मवादिनः किंदक्षिण्यं यो वा अविद्वांतस्य वै ब्रह्मवादिनो
यद्दशहोतारः प्रजापतिर्व्यसृत् प्रजापतिः पुरुषं प्रजापतिरकाम
यत प्रजायेयेति स तपः सोत्तर्वान्ब्रह्मवादिनो यो वा इमं विद्यात्प्र
जापतिः सोमं राजानं ब्रह्माणमन्वहे कां हरा॥१४॥ ब्रह्मवादिनः किं
तस्य वा अग्नेहिरण्यं यत्का इदं किंच प्रजापतिरकामयत सोतर्वा
न्य एवास्य दक्षिणतः पंचारात॥५०॥ ७ ॥ हरिः ॐ मंजुष्ठो रमना

अति पिर्षि दुरोणे। इमन्नो यज्ञमुपयाहि विद्वान्। विश्वा अग्ने अभियु
जो विहत्य। शत्रूयतामाभरा भोजनानि। अग्ने शर्द्ध महते सौ
भगाय। तव द्युम्नान्युत्तमानि संतु। संजास्पत्यं सुयममाकृणु
ष्व। शत्रूयतामभितिष्ठा महांसि। अग्ने यो नोभितो जनः। वृको
वारो जिघांसति। तांस्त्वं वृत्रहंजहि। वस्वस्मभ्यमाभर
। अग्ने यो नोभिदासति। समानो यश्च निष्ट्यः। इध्मस्येव प्रक्षाय
तः। मा तस्योच्छेषि किंचन। त्वमिंद्राभिभूरसि। देवो विज्ञातवीर्य्यः

। वृत्रहा पुरुचेतनः ॥ अप प्राचं इंद्र विश्वां ६ अमित्रान् ॥ २ ॥ अपा
पाचो अभिभूते नुदस्व । अपोदीचो अप शूराधराचं उरौ । यथा त
व शर्मन्मदेम । तमिं ३ वाजयामसि । महे वृत्राय हंतवे । स वृषा वृ
षभो भुवत् । युजे रथं गवेषणं ६ हरिभ्यां । उप ब्रह्माणि जुजुषा
णमस्थुः । वि बाधिष्ट स्य रोदसी महित्वा । इंद्रो वृत्राण्यप्रती जघ
न्वान् ॥ ३ ॥ हव्यवाहमभिमातिषाहं । रक्षोहणं पृतनासु जिष्णुं ।
ज्योतिष्मंतं दीद्यतं पुरंधिं । अग्निं ६ स्विष्टकृतमाहुवेम । स्विष्टम

ग्ने अभि न तर्पणाहि॥ विश्वा देवु पृतना अभिष्या॥ उरुन्नः पंथां
प्रदिशा न्विभाहि॥ ज्योतिष्मद्धेह्यजरं न आयुः॥ त्वामग्ने हविष्मंतः
॥ देवं मर्त्तास ईडते॥४॥ मन्ये त्वा जातवेदसं॥ स हव्या वक्ष्यानु
षक्॥ विश्वानि नो दुर्गहा जातवेदः॥ सिंधुन्न नावा दुरितातिपर्षि
॥ अग्ने अत्रिवन्नमसा गृणानः॥ अस्माकं बोध्यविता तनूनां॥ पू
षा गा अन्वेतु नः॥ पूषा रक्षत्वर्वतः॥ पूषा वाजं सनोतु नः॥ पूषे
मा आशा अनु वेद सर्वाः॥ सो अस्मा २ अभयतमेन नेषत्॥ स्वस्ति
॥५॥

ग्रा. हि.
६२

द्रा अघृणिः सर्ववीरः। अप्रयुच्छन्तुरणे तु प्रजानन्। त्वमग्ने स
प्रथा असि। जुष्टो होता वरेण्यः। त्वया यज्ञं वि तन्वते। अग्नीर
क्षांऽसि सेधति। शुक्रशोचिरमर्त्यः। शुचिः पावक ईड्यः। अग्ने
रक्षा णो अंऽहसः॥ ६॥ प्रति ष्म देव रीषतः। तपिष्ठैरजरो दह।
अग्ने हंऽसि न्यत्रिणं। दीद्यन्मर्त्येष्वा। स्वे क्षये शुचिव्रत। आ वात
वाहि भेषजं। वि वात वाहि यद्रपः। त्वंऽ हि विश्वभेषजः। देवानां
दूत ईयसे। द्वाविमौ वातौ वातः॥ ७॥ आ सिंधोरा परावतः। दक्षं

मे अन्य आ वातु। परान्यो वातु यद्रपः। यद्दो वात ते गृहे। अमृतस्य
स्य निधिर्हितः। ततो नो देहि जीवसे। ततो नो धेहि भेषजं। ततो
नो मह आ वह। वात आ वातु भेषजं। शंभूर्मयोभूर्नो हृदे॥५॥
प्र ण आयूंषि तारिषत्। त्वमग्ने अयासि। अयासन्मनसा हितः
। अयासन्हव्यमूहिषे। अया नो धेहि भेषजं। इष्टो अग्निराहुतः।
स्वाहाकृतः पिपर्तु नः। स्वगा देवेभ्य इदन्नमः। कामो भूतस्य भ
व्यस्य सम्राडेको विराजति॥६॥ स इदं प्रति पप्रथे। ऋतुतस्

।०ऋ०
६३

जतेवृत्री। कामुस्तदग्रेसमवर्त्तताधि। मनसोरेतःप्रथमंयदा
सीत्। सतोबंधुमसतिनिरविंदन्। हृदिप्रतीष्याकवयोमनीषा।
त्वयामन्योसरथमारुजंतः। हर्षमाणासोधृषितामरुत्वः। तिग्मेष
वआयुधासंशिशानाः। अभिप्रयंतिनरोअग्निरूपाः॥१०॥ मन्यु
र्भगोमन्युरेवासदेवः। मन्युर्होतावरुणोविश्ववेदाः। मन्युंविशो
ईडतेदेवयंतीः। पाहिनोमन्योतपसाश्रमेण। त्वमग्नेव्रतभृच्छु
चिः। देवाँआसादयाइह। अग्नेहव्यायवोढवे। व्रतानुबिभ्रद्व्र

तुपाअह्रोभ्यः।यजानोदेवाऽअजरःसुवीरः।दधद्रत्नानिसुवि
हानोअग्ने।गोपायनोजीवसेजातवेदः॥१॥जिघांऽसन्तुमित्रां
जघृन्वानीडतेसर्वाऽअंऽहंसोवातोहृदेराजत्यग्निरूपाऽस्सुविद्हा
नोअग्नुएकंच॥१॥चक्षुषोहेतेमनसोहेते।वाचोहेतेब्रह्मणो
हेते।योमाघायुरभिदासति।तमग्नेमेन्यामेनिंकृणु।योमाचक्षुषा
योमनसा।योवाचाब्रह्मणाघायुरभिदासति।तयाग्नेत्वंमेन्या।
अमुममेनिंकृणु।यत्किंचासौमनसायच्चवाचा।यज्ञैर्जुहोतिय

ा॰द्वि॰
६४

जुषाहविर्भिः॥१॥ तन्मृत्युर्निर्ऋत्या संविदानः। पुरादिष्टादाकूति
रस्य हन्तु। यातुधाना निर्ऋतिरादु रक्षः। ते अस्य घ्नंत्वनृतेन स
त्यं। इंद्रेषिता आज्यमस्य मथ्नंतु। मा तत्समृद्धि यदसौ करोति।
हन्मि ते हं कृतं हविः। यो मे घोरमचीकृतः। अपाँचौ त उभौ बा
हू। अपनह्याम्यास्यं॥२॥ अपनह्यामि ते बाहू। अपनह्याम्यास्यं
। अग्ने र्देवस्य ब्रह्मणा। सर्वं ते वधिषं कृतं। पुरामुष्य वषट्कारा
त्। यज्ञं देवेषु नस्कृधि। स्विष्टमस्माकं भूयात्। मा स्मान्प्रापन्नरा

तयः। अंतिदूरे सतो अग्ने भ्रातृव्यस्याभिदासतः॥३॥ वृषद्वा-
रेण वज्रेण। कृत्यां हन्मि कृतामहं। यो मा नक्तं दिवा सायं। प्रा-
तश्चाहो निपीयति। अद्या तमिंद्र वज्रेण। भ्रातृव्यं पादयाम
सि। इंद्रस्य गृहो सि तं त्वा। प्रपद्ये सगुस्साश्वः। सह यन्मे अस्ति ते
न। इंद्र अग्निं विपश्चितं॥५॥ गिरायुक्तस्य साधनं। स्तु. श्रीवानं धि
तावानं। अग्नेरा केमते वयं। यमंद्रि वस्य वाजिनः। अतिद्वेषां
सि तरेम। अर्वंतं मा समनसौ समोकसौ। सचेतसौ सरेतसौ।

तुभौमामवतंजातवेदसौ।शिवौभवतमद्यनः।स्वयंकृण्वानः
सुगमप्रयावं॥५॥तिग्मशृंगोवृषभःशोशुचानः।प्रत्नंसध
स्थमनुपश्यमानः।आतंतुमग्निर्दिव्यंततान।त्वंनस्तंतुरुत
सेतुरग्ने।त्वंपंथाभवसिदेवयानः।त्वयाग्नेपृष्ठंवयमारुहेम
।अथादेवैःसधमादंमदेम।उदुत्तमंमुमुग्धिनः।विपाशंम
ध्यमंचृत।अवाधमानिजीवसे॥६॥वयंसोमव्रतेतव।म
नस्तनूषुबिभ्रतः।प्रजावंतोअशीमहि।इंद्राणीदेवीसुभ

गोसुपत्नी॥ ३ ॥ २८ ॥ स्योनपतिविधैजिगाया॥ त्रिं ४ रा॥ २ ॥ स्याजुघनं
योजनानि॥ उपस्थ ई ३ ॥ ४ ॥ स्थविरं बिभर्ति॥ सेनोहनामहे पृथिवी
धनंजया॥ विश्वव्यचा अदितिः सूर्यत्वक्॥ इन्द्राणी देवी प्रासहा
ददाना॥ ७ ॥ सा नो देवी सुहवा शर्म यच्छतु॥ आ त्वाहार्षमन्तर
भूः॥ ध्रुवस्तिष्ठाविचाचलिः॥ विशस्त्वा सर्वा वाञ्छन्तु॥ मा त्वद्राष्ट्र
मधि भ्रशत्॥ ध्रुवा द्यौर्ध्रुवा पृथिवी॥ ध्रुवं विश्वमिदं जगत्॥ ध्रु
वा ह पर्वता इमे॥ ध्रुवो राजा विशामयं॥ इहैवैधि माव्यपिष्ठाः

श्चै। वाचं गंधर्वाः पुरावौ मनुष्याः। वाचीमा विश्वा भुवनान्यर्पिता
॥४॥ सा नो हवं जुषतामिंद्रपत्नी। वागक्षरं प्रथमजा ऋतस्य। वे
दानां मातामृतस्य नाभिः। सा नो जुषाणोपयज्ञमागात्। अवंती
देवी सुहवा मे अस्तु। यामृषयो मंत्रकृतो मनीषिणः। अन्वैछंदे
वास्तपसा श्रमेण। तां देवीं वाचं हविषा यजामहे। सा नो दधातु
सुकृतस्य लोके। चत्वारि वाक्परिमिता पदानि॥५॥ तानि विदुर्ब्रा
ह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेंगयंति। तुरीयं वाचो म

तुष्यां वदंति । श्रद्धयाग्निः समिध्यते । श्रद्धया विंदते हविः । श्रद्धां भ
गस्य मूर्द्धनि । वचसा वेदयामसि । प्रियं श्रद्धे ददतः । प्रियं श्रद्धे
दिदासतः । प्रियं भोजेषु यज्वसु ॥ २ ॥ इदं म उदितं कृधि । यथा दे
वा असुरेषु । श्रद्धामुग्रेषु चक्रिरे । एवं भोजेषु यज्वसु अस्माकं
मुदितं कृधि । श्रद्धां देवा यजमानाः । वायुगोपा उपासते । श्रद्धां
हृदय्य याकूत्या । श्रद्धया हूयते हविः । श्रद्धां प्रातर्हवामहे ॥ ४ ॥
श्रद्धां मध्यंदिनं परि । श्रद्धां सूर्यस्य निम्रुचि । श्रद्धे श्रद्धापयेह

मो। ब्रह्म देवानधि वस्ते। ब्रह्मा विश्वमिदं जगत्। ब्रह्मा कामस्य मातरं। हविषा वर्द्धयामसि। ब्रह्म जज्ञानं प्रथमं पुरस्तात्। विसीमतः सुरुचो वेन आवः। सबुध्निया उप मा अस्य विष्ठाः।१। सतश्च योनिमसतश्च विवः। पिता विराजामृषभो रयीणां। अंतरिक्षं विश्वरूप आविवेश। तमर्कैरभ्यर्चंति वत्सं। ब्रह्म संतं ब्रह्मणा वर्द्धयंतः। ब्रह्म देवानजनयत्। ब्रह्म विश्वमिदं जगत्। ब्रह्मणः क्षत्रं निर्मितं। ब्रह्म ब्राह्मण आत्मना। अंतरस्मिन्निमे लोकाः।१।

मो

॥ अंतर्विश्वमिदं जगत्। अस्यैव भूतां ज्येष्ठं। तेनकोर्हतिस्पर्द्धि तुं। अस्मिन्देवास्त्रयस्त्रिंशरात्। अस्यान्निंद्र प्रजापती। अस्मिन्नु विश्वा भूतानि। नावीवांतः समाहिता। चतस्त्र आशाः प्रचरंत्व ग्नयः। इमंनो यज्ञं नयतु प्रजानन्। घृतं पिन्वंन्नजरं सुवी रं॥१०॥ अस्य समिद्भवत्याकृतीनां। आगावो अस्मत्सुतमन्नम क्नन्। सीदं तुगोष्ठेरणयन्त्वस्मे। प्रजावतीः पुरुरूपा इहस्सु ॥ इंद्राय पूर्वी रुषसो दुहानाः॥ इंद्रो यज्वने प्रणते च शिक्षति।

उपेद्दाति नस्वं मुषायति। भूयोभूयो रयिमिदस्य वर्द्धयन्‌।
अभिन्ने खिल्ये नि दधाति देवयुं। नतानशंति नताअर्वा॥११॥
गावो भगो गाव इंद्रो मे छात्‌। गावः सोमस्य प्रथमस्य भक्षः।
इमाया गावः सजनास इंद्रः। इच्छामी धृदा मनसाचिदिंद्रं॥ यू
यंगावो मेदय थाकृशंचित्‌। अश्रीलंचित्कृणुथा सुप्रतीकं।
भद्रं गृहं कृणुथ भद्रवाचः। बृहद्वो वयउच्यते सभासु॥ प्रजा
वतीः सूयवसंरिशंतीः। शुद्धा अपः सुप्रपाणे पिबंतीः। मा

ऋा· खि·
१८१

वः स्तेन ईशत माघशंसः। परि वो हेती रुद्रस्य वृंज्यात्। उपे
दमुपपर्चनं। आसु गोषु पपृच्यतां। उप ऋषभस्य रेतसि। उपेंद्र
तव वीर्ये ॥१२॥ चुरामित्रकनीयो न्यानर्पिता पुत्रानि यज्वे सुहवा
महे विष्ठा लोकाः सुवीरमवापि वंतीः षट् च ॥८॥ तास्त्वयो चेंद्र
मसौ विश्वभृत्तमा महत्। तेजो वसुमद्भ्राजतो दिवि। सामात्मा
नाचरतः सामचारिणः। ययोर्व्रतं न मम मे जातु दैवयोः। उभाव
तौ परि यातु अम्या दिवो न रश्मीँ स्तनुतो व्यर्णवे। उभा भु

वंतीभुवनाकृविक्रंतः सूर्यानचंद्राचरतोहृतामंती पतीद्युम
दिम्बुविदाउभादिवः सूर्याउभाचंद्रमसाविचक्षणा ॥१॥ वि
श्वबाराववरिवोभावरेण्या ता नोवतंमतिमंता महिव्रता वि
श्ववपरीप्रतरणातरंता सुवर्विदादृशायेभूरिरश्मी सूर्याहिचंद्रा
वसुत्वेषदर्शता मनस्विनोभानुचरतोनुसंदिवं अस्यश्रवो
नद्यः सप्तबिभ्रति द्यावाक्षामाष्टथिवीदर्शतंवपुः अस्मेसूर्या
चंद्रमसाभिचक्षे श्रद्धेकमिंद्रचरतोविचर्तुरं ॥२॥ पूर्वापरंच

ऋ॰ दि॰
१८२

रतो मायये ते। रिशुक्रीडं तो परियाती अध्वरं। विश्वान्यन्यो भुवनाभिचष्टे। ऋतूनन्यो जायते पुनः। हिरण्यवर्णाः शुचयः पावकायासुराजा। यासां देवाः दिवि नैवं चक्षुषा पश्यत। आपो भद्रा आदित्पश्यामि। नासदासीनो सदासीत्तदानीं। नासीद्रजो नो व्योमा परो यत्। किमावरीवः कुह कस्य शर्मन्न्॥३॥ अंभः कि मासीद्गहनं गभीरं। न मृत्युरमृतं न तर्हि न। रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया तदेकं। तस्माद्धान्यं न प

विदध

मा

रः किंचनास । तम आसीत्तमसा गूढमग्रेऽप्रकेतं । सलिलं स
र्वमा इदं । तुच्छेनाभ्वपिहितं यदासीत् । तमसस्तन्महिनाजाय
तैकं । कामस्तदग्रे समवर्त्तताधि ॥ ४ ॥ मनसो रेतः प्रथमं य
दासीत् । सतो बंधुमसति निरविंदन् । हृदि प्रतीष्या कवयो म
नीषा । तिरश्चीनो विततो रश्मिरेषां । अधः स्विदासी ३ दुपरि स्वि
दासी ३ त् । रेतोधा आसन्महिमान आसन् । स्वधा अवस्तात्प्र
यतिः परस्तात् । को अद्धा वेद क इह प्रवोचत् । कुत आजाता कु

ब्रा·द्वि·
१८३

तइयंविसृष्टिः।।अर्वाग्देवाअस्यविसर्जनाय।।५।।अथाकोवेदय
तआबभूव।इयंविसृष्टिर्यतआबभूव।यदिवादधेयदिवान
।योअस्याध्यक्षःपरमेव्योमन्।सोअंगवेदयदिवानवेद।कि
ंस्विद्वनंकउसवृक्षआसीत्।यतोद्यावापृथिवीनिष्टतक्षुः
।मनीषिणोमनसापृच्छतेदुतत्।यदध्यतिष्ठद्भुवनानिधार
यन्।ब्रह्मवनंब्रह्मसवृक्षआसीत्।६।।यतोद्यावापृथिवी
निष्टतक्षुः।मनीषिणोमनसाविब्रवीमिवः।ब्रह्माध्यतिष्ठद्

१८३

भुवनानि धारयन्तं। प्रातरग्निं प्रातरिन्द्रं हवामहे। प्रातर्मि
त्रावरुणा प्रातरश्विना। प्रातर्भगं पूषणं ब्रह्मणस्पतिं। प्रातः
सोममुत रुद्रं हुवेम। प्रातर्जितं भगमुग्रं हुवेम। वयं
पुत्रमदितेर्यो विधर्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चित्।।७।।
राजा चिद्यं भगं भक्षीत्याह। भग प्रणेतर्भग सत्यराधः। भगे
मां धियमुदवा ददन्नः। भग प्रणो जनय गोभिरश्वैः। भग प्र नृ
भिर्नृवन्तः स्याम। उत प्रपित्व उत मध्ये अह्नां। उतोदिता मघव

उतेदानीं भगवन्तः स्याम।

न्सूर्यस्य। वयं देवानां सुमतौ स्याम। भग एव भगवाँ अस्तु
देवाः॥५॥ तेन वयं भगवंतः स्याम। तं त्वा भग सर्व इज्जोहवीमि
॥ स नो भग पुरएता भवेह। समध्वरायोषसो नमंत। दधिक्रावे
व शुचये पदाय। अर्वाचीनं वसुविदं भगं नः। रथमिवाश्वा वा
जिन आ वहंतु। अश्वावतीर्गोमतीर्न उषासः। वीरवतीः सद
मुच्छंतु भद्राः। घृतं दुहाना विश्वतः प्रपीनाः। यूयं पात स्वस्तिभिः
सदा नः॥७॥ विचक्षणा विचतुरंरा मं नक्षिति विसर्जना प्रब्रह्म

वनं ब्रह्म स वृक्ष आसीत्तु रक्षिदेवाः प्र पीनारकं च ॥९॥ पीवों
नां ते स्तुक्रासः सोमो धेनुमिंद्रस्तरस्वां छुच्चि मा देवो यो तु सूर्यो
देवी मुह मंस्मिता सूर्याचंद्रमसा नव ॥९॥ पीवों नाम ग्नेत्वं पोर
या नाधृष्यः स्तुचिं नस्तोमं विम्भ यं मा पो दिवो रुक्मो नं त्राण म
नंतासूर्याचंद्रमसा नवं सप्तति ॥७०॥ ॥हरिः ॐ॥ ॥८॥
॥इति द्वितीयाष्टकब्राह्मणः समाप्तः॥ ॥श्रीकृष्णाय नमः॥

श्री ॥श्री गणेशाय नमः॥ ॥हरिः ॐ॥ ॥अग्निर्नः पातु कृत्तिकाः॥ न
१ क्षत्रं देवमिन्द्रियं॥ इदमासां विचक्षणं॥ हविरासं जुहोतन॥ यस्य
भान्ति रश्मयो यस्य केतवः॥ यस्येमा विश्वा भुवनानि सर्वा॥ स कृत्ति
काभिरभिसंवसानः॥ अग्निर्नो देवः सुविते दधातु॥ प्रजापते रो
हिणी वेतु पत्नी॥ विश्वरूपा बृहती चित्रभानुः॥ १॥ सा नो यज्ञस्य
सुविते दधातु॥ यथा जीवेम शरदः सवीराः॥ रोहिणी देव्युदगात्पु
रस्तात्॥ विश्वा रूपाणि प्रतिमोदमाना॥ प्रजापतिं हविषा वर्ध १

यैंती॥ प्रियाइदेवानुतुपर्यातयुहं॥ सोमोराजांमृगशीर्षेणआगं
न्॥ शिवंनक्षत्रंप्रियमस्यधाम॥ आप्यायमानोबहुधाजनेषु॥ रे
तः प्रजांयजमानेदधातु॥ ५॥ यत्तेनक्षत्रंमृगशीर्षमस्ति॥ प्रियं
राजन्प्रियतमंप्रियाणां॥ तस्मैतेसोमहविषाविधेम॥ शंनएधिद्वि
पदेशंचतुष्पदे॥ आर्द्रयारुद्रः प्रथमानएति॥ श्रेष्ठोदेवानांपतिर
घ्नियानां॥ नक्षत्रमस्यहविषाविधेम॥ मानः प्रजांरीरिषन्मोत
वीरान्॥ हेतीरुद्रस्यपरिणोवृणक्तु॥ आर्द्रानक्षत्रंजुषतांहवि

ग्रा॰ण

२

नेः॥२१॥ प्रमुंच मानो दुरितानि विश्वा॥ अपाघशंसं नुदतामरा
तिं॥ पुनर्नो देवा अदितिः स्पृणोतु॥ पुनर्वसू नः पुनरेतां यज्ञं॥ पुनर्नो
देवा अभियंतु सर्वे॥ पुनः पुनर्वो हविषा यजामः॥ एवा न देवा अदि
तिरनर्वा॥ विश्वस्य भर्त्री जगतः प्रतिष्ठा॥ पुनर्वसू हविषा वर्धयं
ती॥ प्रियं देवानामप्येतु पाथः॥४॥ बृहस्पतिः प्रथमं जायमानः॥
तिष्यं नक्षत्रमभि संबभूव॥ श्रेष्ठो देवानां पृतनासु जिष्णुः॥ दि
शोनु सर्वा अभयं नो अस्तु॥ तिष्यः पुरस्तादुत मध्यतो नः॥ बृह

स्मतिर्नः परि पातु प्रस्रात् ॥ बाधेतां द्वेषो अभयं कृणुतां ॥ सुवीर्य
स्य पतयः स्याम ॥ ३ ॥ इदं सर्पेभ्यो हविरस्तु जुष्टं ॥ आश्रेषा येषाम
नुयन्ति चेतः ॥ ५ ॥ ये अंतरिक्षं पृथिवीं क्षियंति ॥ ते नः सर्पासो हव
मा गमिष्ठाः ॥ ये रोचने सूर्यस्यापि सर्पाः ॥ ये दिवं देवीमनु संचरंति ॥
येषामाश्रेषा अनुयंति कामं ॥ तेभ्यः सर्पेभ्यो मधुमज्जुहोमि ॥ उ
पहूताः पितरो ये मघासु ॥ मनोजवसः सुकृतः सुकृत्याः ॥ ते नो
नक्षत्रे हवमा गमिष्ठाः ॥ स्वधाभिर्यज्ञं प्रयतं जुषंतां ॥ ६ ॥ ये अग्नि

ब्रा॰ ण
२

दग्धायेनग्निदग्धाः॥येसुंलोकंपितरःक्षियंति॥यांश्चविद्मयांउं
चनप्रविद्म॥मघासुयज्ञंसुकृतंजुषंतां॥गवांपतिःफल्गुनी
नामसित्वं॥तदर्यमन्वरुणमित्रचारु॥तंत्वावयंसनितारं
सनीनां॥जीवाजीवंतमुपसंविशेम॥येनेमाविश्वाभुवनानिसं
जिता॥यस्यदेवाअनुसंयंतिचेतः॥७॥अर्यमाराजाजरस्तु
विष्मान्॥फल्गुनीनामृषभोरोरवीति॥श्रेष्ठोदेवानांभगवोभ
गासि॥तत्त्वाविदुःफल्गुनीस्तस्यवित्तात्॥अस्मभ्यंक्षत्रमजरं

॥९॥ निवेशयन्नमृतान्मर्त्यांश्च॥ रूपाणि पिंशन्भुवनानि विश्वा॥ तन्नस्त्वष्टा तदु चित्रा विचष्टां॥ तन्नक्षत्रं भूरिदा अस्तु मह्यं॥ तन्नः प्रजां वीरवतीं सनोतु॥ गोभिर्नो अश्वैः समनक्तु यज्ञं॥ वायुर्नक्षत्रमभ्येति निष्ट्यां॥ तिग्मशृंगो वृषभो रोरुवाणः॥ समीरयन्भुवना मातरिश्वा॥ अप द्वेषांसि नुदतामरातीः॥१०॥ तन्नो वायुस्तदु निष्ट्या शृणोतु॥ तन्नक्षत्रं भूरिदा अस्तु मह्यं॥ तन्नो देवासो अनुजानंतु कामं॥ यथा तरेम दुरितानि विश्वा॥ इन्द्रम

सछत्वं नो यंतु प्रीताः॥ तरिं ग्रामणीं कृणुतां तछिरां रवे॥ तन्नो देवा
अनुमन्यंतु यज्ञं॥ पश्चात्पुरस्तादभयं नो अस्तु॥ नक्षत्राणामधि
पत्नी विशां रवे॥ श्रेष्ठा विग्रामणी भुवनस्य गोपौ॥ १॥ वि पृच्छः रात्रेन
प्रबाधमानौ॥ अप क्षुधं तु दहता मरातिं॥ पूर्णा पश्चादुत पूर्णा पुरस्ता
त्॥ उन्मध्यतः पौर्णमासी जिगाय॥ तस्यां देवा अधि संवसंतः॥ उ
त्तमे नाक इह मादयंतां॥ इष्टी सुवर्चा युवतिः सजोषाः॥ पौर्णमासु
दगाच्छोभमाना॥ आप्याययंती दुरितानि विश्वा॥ उरुं दुहां यजमा

नाययुत्तं॥१२॥ चित्रभानुर्यजमाने दधातु हविर्भिः पापमेतोऽनु पंतां
चेतो महे सुरोचमाना मरातीर्गोपो पुसं॥१३॥ कृथ्या सर्वहव्येन मसोपु
सधं॥ मित्रं देवं मित्रधेयन्नो अस्तु॥ अनूराधान्हविषा वर्धयंतः॥ शतं
तं जीवेम शरदः सवीराः॥ चित्रं नक्षत्रमुदगात्पुरस्तात्॥ अनूरा
धास इति यद्वदंति॥ तन्मित्र एति पथिभिर्देवयानैः॥ हिरण्ययैर्वि
ततैरंतरिक्षे॥ इंद्रो ज्येष्ठामनु नक्षत्रमेति॥ यस्मिन्वृत्रं वृत्रतूर्ये
ततार॥१॥ तस्मिन्वयममृतं दुहानाः॥ क्षुधंतरेम दुरितिं दुरिष्टिं

॥पुरुं दस्रायं तृषुभायं घृणां दे॥अषां ढायुस हं मानाय मीढुषे॥इंद्रा
य ज्येष्ठ मधु मदुहानां ना॥तु रुं हं णो तु यजमानाय लोकं॥ मूलं ब्रुजा
वीरवंतीविदेय॥पराच्येतु निर्ऋतिः पराचा॥गोभिर्न क्षत्रं पशु
भिः समंक्तं॥अहर्भूयायजमानाय मह्यं॥२॥अहं नेॱ अघसुव्रित
र्द् पातु॥ मूलं न क्षत्रमिति यद्वदंति॥पराची वाचा निर्ऋतिं नुदामि
॥शिवं प्रजायै शिव मंस्तु मह्यं॥या दिव्या आपः पयसा संबभूवुः॥
या अंतरिक्ष उत पार्थिवी याः॥यासाम षाढा अनुयंति कामं॥ता

.ण न आपः शं स्योना भवंतु ॥ यास्वृकृष्णा याश्चेन्नाद्याः समुद्रियाः ॥
६ याश्चेवेवंतीकृतश्रोसूचीर्याः ॥३॥ यासां मषाढा मधु भक्षयंति ॥ तान
आपः शं स्योना भवंतु ॥ तन्नो विश्वे उपशृण्वंतु देवाः ॥ तदषाढा
अभिसंयंतु यज्ञं ॥ तन्नक्षत्रं प्रथतां पशुभ्यः ॥ कृषिर्वृष्टिर्यजमा
नाय कल्पतां ॥ शुभ्राः कन्या युवतयः सुपेशसः ॥ कर्मकृतः सुकृ
तो वीर्यावतीः ॥ विश्वान्देवान्हविषा वर्धयंतीः ॥ अषाढाः काममुप
यांतु यज्ञं ॥४॥ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुंच लोकमि ६

दमूच सर्वं ॥ तन्नो नक्षत्रमभिजिद्विजित्यं ॥ श्रियं दधात्वहृणीयमा
नं ॥ उभौ लोकौ ब्रह्मणा संजितेमौ ॥ तन्नो नक्षत्रमभिजिद्विचष्टां ॥
तस्मिन्वयं पृतनाः संजयेम ॥ तन्नो देवासो अनुजानंतु कामं ॥ शृ
ण्वंति श्रोणाममृतस्य गोपां ॥ पुण्यामस्या उपशृणोमि वाचं ॥ पु ॥ म
हीं देवीं विष्णुपत्नीमजूर्यां ॥ प्रतीचीमेनां हविषा यजामः ॥ त्रेधा वि
ष्णुरुरुगायो विचक्रमे ॥ महीं दिवं पृथिवीमंतरिक्षं ॥ तच्छ्रोणैति श्र
व इच्छमाना ॥ पुण्यं श्लोकं यजमानाय कृण्वती ॥ अष्टौ देवा वसवः

सोम्यासः ॥ चतस्रो देवीरजराः श्रविष्ठाः ॥ ते यज्ञं पान्तु रजसः पुरस्ता
त् ॥ संवत्सरीणममृतꣳ स्वस्ति ॥ इन्द्रायन्तं नः पान्तु वसवः पुरस्ता
त् ॥ दक्षिणतोभियन्तु श्रविष्ठाः ॥ पुण्यं नक्षत्रमभि संविशाम ॥ मा
नो अरातिरघशꣳसागन् ॥ क्षत्रस्य राजा वरुणोधिराजः ॥ नक्ष
त्राणाꣳ शतभिषग्वसिष्ठः ॥ तौ देवेभ्यः कृणुतो दीर्घमायुः ॥ श
तꣳ सहस्रा भेषजानि धत्तः ॥ यज्ञं नो राजा वरुण उपयातु ॥ त
न्नो विश्वे अभि संयन्तु देवाः ॥ ७ ॥ तन्नो नक्षत्रꣳ शतभिषग्जुषा

पं॥ दीर्घमायुः कृतिर॥६॥ प्रजानिं॥ अजएकपाउदगा॥ त्पुरस्तात
॥ विश्वाभूतानिप्रतिमोदमानः॥ तस्यदेवाःप्रसवंयंतिसर्वे॥ प्रो
ष्ठपदासोअमृतस्यगोपाः॥ विभ्राजमानःसमिधानउग्रः॥ आं
तरिक्षमरुहद्गंद्यां॥ तꣳसूर्यंदेवमजमेकपादं॥ प्रोष्ठपदासो
अनुयंतिसर्वे॥८॥ अहिर्बुध्नियःप्रथमानएति॥ श्रेष्ठोदेवानां
मुतमानुषाणां॥ तंब्राह्मणाःसोमपाःसोम्यासः॥ प्रोष्ठपदासोअ
भिरक्षंतिसर्वे॥ चत्वारएकमभिकर्मदेवाः॥ प्रोष्ठपदासइतिया

तृती

भा॰ण
८

न्वर्दैति॥ ते ब्रुध्निय॑ परि षद्य॑ऽ स्तुवंतः॥ अहि॑ऽ र क्षंति नमसो प
सद्य॑॥ प्रुषा रे वत्य न्वेति पं थां॥ पुष्टि पती पशुपा वाज बस्त्यो॥ ९॥
इमा निहव्या प्र यता जुषाणा॥ सुगे नोयाने रुपयाता युसं॥ क्षुप्र
न्मुम्न नर क्षतु रे वती नः॥ गा वो नो अश्वा॑ऽ अन्वेतु पूषा॥ अन्न॑ऽ
र क्षंतौ ब कुधा विरूपं॥ वाज॑ऽ स नुतां यजमानाय यज्ञं॥ तद्भि
नो व भ्रु युजो प याता॥ स्तु भं ग मिल्लौसु यमे धि र श्वैः॥ स्वं न क्षेत्र
ऽह विषा यजंतो॥ मध्वा संपृक्तौ यजुषा समक्तौ॥ १०॥ मौ दृवानां

ह

ग्रि प जौहं वं बाहे॥ विश्वं स्य हु ता भु म त स्य गो पो॥ तो न क्षे त्रं जु
जु षा णो पं या तां॥ न मो श्विभ्यां रु णु मो भ्रु शु ग भ्यां॥ अ प प्र फ्वां नं भ
रं णी भ रं तु॥ त स्मो राजा भ ग ब्वा न्वि च हां॥ लो क स्य राजा म हृ तो
म हान्हि॥ स्तु ग न्न: पं था म भ यं कृ णो तु॥ य स्मि न्ने क्षे त्रे पु म ए ति
राजा॥ य स्मि न्ने न भ्य पिं चं त दे वा:॥ त हं स्य त्रि त्रं हविषा य जा
म॥ अ पं प्र फ्वां नं भ रं णी भ रं तु॥ नि वे शं नी य त्ते दे वा अ ह धु:॥१॥
त ता रु म लं श्वा सु न्वी यां यं तु पु रं बा च ॥ स्व स्ति दे वा अ नु यं ति स

मु

वैवाजं व स्यो स मं क्षौ दे वास्त्रीणिच ॥ २ ॥ न वो न वो भ वति जा यं मा नो य मा दि त्या अ ३ भो प्या य यं ति ॥ ये वि र्व्रे प्रेस मं न सा सं व्य यं ति ॥ स मा नं तं तु परि ता तु ना तें ॥ वि भ्रुव भ अ शुभ वि स्व तो कु वे ॥ ते नो न क्ष त्रे ह व मा ग मे तं ॥ वु यं दे वी ब्रह्म णा सं वि हा नाः ॥ सु र ता सो दे व वी तिं द धा नाः ॥ अ हो रा त्रे हु वि षा वु र्द्ध यं तः ॥ अ ति पा पा न म तिं मु क्त्या ग मे म ॥ प्र त्सु व ह न्या यु ती ॥ १ ॥ खु छं तो ऽ हि ता दि वः ॥ अ पो म ही वृ णु ते च क्षु षा ॥ त मो ज्यो ति ष्कृ णो ति सू न री ॥ उ दु स्रि याः स च ते सू र्यः

॥ सर्वानु घं नक्षत्रमर्चिमत्॥ तवेदेष्णो व्युषि सूर्यस्य च॥ सं भक्ते
न गमेमहि॥ तन्नो नक्षत्रमर्चिमत्॥ भानुमत्तेज उच्चरत्॥ उप
यज्ञमिहागमत्॥ २॥ प्र नक्षत्राय देवाय॥ इन्द्रायेन्दुं हवामहे॥
स नः सविता सुवत्सनिं॥ पुष्टिदां वीरवत्तमं॥ उदु त्यं चित्रं॥ अदि
तिर्न उरुष्यतु मही मू षु मातरं॥ इदं विष्णुः प्रतद्विष्णुः॥ अग्निर्मूर्धा
भुवः॥ अनु नोऽद्यानुमतिरन्विदनुमते त्वं॥ हव्यवाहं स्विष्टं॥ ३
॥ आयुष्यं गमत्स्विष्टं॥ ४॥ अग्निर्वा अकामयत॥ अन्नादो देवानां

ण
१०

स्यामिति॥ स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्
वपत्॥ ततो वै सोऽन्नादो देवानामभवत्॥ अग्निर्वै देवानामन्ना
दः॥ यथा ह वा अग्निर्देवानामन्नादः॥ एवं ह वा एष मनुष्याणां
भवति॥ य एतेन हविषा यजते॥ य उ चैनदेवं वेद॥ सोऽत्र जुहो
ति॥ अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा॥ अंबायै स्वाहा दुलायै स्वा
हा॥ नितत्न्यै स्वाहाभ्रयंत्यै स्वाहा॥ मेघयंत्यै स्वाहा वर्षयंत्यै स्वा
हा॥ चुपुणीकायै स्वाहेति॥१॥ प्रजापतिः प्रजा असृजत॥ ता अ

स्मात्सृष्टाः पराचीरायन् ॥ तासाꣳ रोहिणीमभ्यध्यायत् ॥ सोका
मयत ॥ उप मावर्त्तेत ॥ समेनयागच्छेयेति ॥ स एतं प्रजापतये
रोहिण्यै चरुं निरवपत् ॥ ततो वै सा तमुपावर्त्तत ॥ समेनयाग
च्छत ॥ उपेदं वा एनं प्रियमावर्त्तते ॥ सं प्रियेण गच्छते ॥ य एतेन
हविषा यजते ॥ य उ चैनदेवं वेद ॥ सोत्र जुहोति ॥ प्रजापतये
स्वाहा रोहिण्यै स्वाहा ॥ रोचमानायै स्वाहा प्रजाभ्यः स्वाहेति ॥२॥
सोमो वा अकामयत ॥ ओषधीनाꣳ राज्यमभिजयेयमिति ॥ स ए

तं॑ सो॒मा॑य मृगशी॒र्षाय॑ श्यामा॒कं च॒रुं प॑य॒सि निर॑वपत् ॥ ततो॒
वै स ओष॑धीना॒ꣳ राज्य॑म॒भ्य॑जयत् ॥ समा॒ना॒ना॒ꣳ ह॒ वै राज्य॑म॒भि
जय॑ति ॥ य ए॒तेन॑ ह॒विषा॒ यज॑ते ॥ य उ॑ चैनदे॒वं वेद॑ ॥ सो॒ऽत्र॑ जुहो
ति ॥ सो॒माय॒ स्वाहा॑ मृगशी॒र्षाय॒ स्वाहा॑ ॥ इ॒न्व॒काभ्यः॒ स्वाहौष॑धीभ्य
ः स्वाहा॑ ॥ राज्या॑य॒ स्वाहा॑भि॒जित्यै॒ स्वाहेति॑ ॥ ३ ॥ रु॒द्रो वा अ॑कामय
त ॥ प॒शु॒मान्स्या॒मिति॑ ॥ स ए॒तꣳ रु॒द्राया॒र्द्रायै॒ प्रैय॒ङ्गवं॑ च॒रुं प
य॑सि॒ निर॑वपत् ॥ ततो॒ वै स प॑शु॒मान॑भवत् ॥ प॒शु॒मान्ह॒ वै भ॑वति

॥ य एतेन हविषा यजंते ॥ य उ चैनदेवं वेद ॥ सोत्र जुहोति ॥ रुद्रा
य स्वाहार्द्रायै स्वाहा ॥ पिन्वमानायै स्वाहा पशुभ्यः स्वाहेति ॥ ४ ॥
ऋक्षा वा इयमलोमकासीत् ॥ साकामयत ॥ ओषधीभिर्वनस्प
तिभिः प्रजायेयेति ॥ सैतमदित्यै पुनर्वसुभ्यां चरुं निरवपत् ॥ त
तो वा इयमोषधीभिर्वनस्पतिभिः प्राजायत ॥ प्रजायते ह वै प्रज
या पशुभिः ॥ य एतेन हविषा यजंते ॥ य उ चैनदेवं वेद ॥ सोत्र
जुहोति ॥ अदित्यै स्वाहा पुनर्वसुभ्यां ॥ स्वाहा भूत्यै स्वाहा प्रजात्यै

ण स्वाहेति॥५॥ बृहस्पतिर्वाअकामयत॥ब्रह्मवर्चसी स्यामिति॥
२ स एतं बृहस्पतये तिष्यांय भैवारंचरुंपयसि निरवपत्॥ततोवै
स ब्रह्मवर्चस्यभवत्॥ब्रह्मवर्चसीहवैभवति॥य एतेनहवि
षायजते॥य उंचैनदेवं वेद॥सोत्रजुहोति॥बृहस्पतयेस्वाहा ति
ष्यायस्वाहा॥ब्रह्मवर्चसायस्वाहेति॥६॥देवासुराःसंयत्ताआस
न्॥तेदेवाःसर्पेभ्यआश्रेषाभ्यआज्येकरंभंनिरवपन्॥तानेता
व भिरेवाहुतीभिरुपानयन्॥एताभिर्हवैहुतीभिर्द्विषंतंभ्रातृ

ह्युमुपंनयन्ति॥ य एतेन हविषा यजन्ते॥ य उ चैनदेवं वेद॥ सोऽत्र जु
होति॥ सर्पेभ्यः स्वाहाश्रेषाभ्यः स्वाहा॥ दंदशूकेभ्य स्वाहेति॥ ७॥ पि
तरो वा अकामयन्त॥ पितृलोकमृध्नुयामेति॥ त एतं पितृभ्यो मघा
भ्यः पुरोडाशं षट्कपालं निरवपन्॥ ततो वै ते पितृलोकमार्ध्नुवन्
॥ पितृलोके ह वा ऋध्नोति॥ य एतेन हविषा यजते॥ य उ चैनदेवं वे
द॥ सोऽत्र जुहोति॥ पितृभ्यः स्वाहा मघाभ्यः॥ स्वाहानघाभ्यः स्वाहा
गदाभ्यः॥ स्वाहारुंधतीभ्यः स्वाहेति॥ ८॥ अर्यमा वा अकामयत॥

ण
३

प्रसुमान्त्स्यामिति॥ स एतमर्यम्णे फल्गुनीभ्यां चरुं निरवपत्॥ ततो वै
स पशुमानभवत्॥ पशुमान्ह वै भवति॥ य एतेन हविषा यजते॥ य उ
चैनदेवं वेद॥ सोऽत्र जुहोति॥ अर्यम्णे स्वाहा फल्गुनीभ्याᳪ स्वाहा॥ प
शुभ्यः स्वाहेति॥ १०॥ भगो वा अकामयत॥ भगी श्रेष्ठी देवानाᳪ स्या
मिति॥ स एतं भगाय फल्गुनीभ्यां चरुं निरवपत्॥ ततो वै स भगी
श्रेष्ठी देवानामभवत्॥ भगी ह वै श्रेष्ठी समानानां भवति॥ य एते
न हविषा यजते॥ य उ चैनदेवं वेद॥ सोऽत्र जुहोति॥ भगाय स्वा

हा फल्गुनीभ्याᳪं स्वाहा ॥ श्रैभ्यांयुस्वाहेति ॥ १० ॥ सविता वाऽअका

मयत ॥ श्रृष्ठे हैवाह धीरनू ॥ सविता स्यामिति ॥ स एतᳪं सवित्रे

हस्तोऽपनपुरोडाशं द्वादशकपालं निरवपदाशूनां व्रीहीणां ॥ ततो

वै तᳪं श्रद्देवाऽअदधत ॥ सविताभवत् ॥ श्रद्धवाऽअस्मै मनुष्या द

धते ॥ सविता सप्रथानानां भवति ॥ य एतेन हविषा यजते ॥ य उ चै

नदेवं वेद ॥ सोऽनुजुहोति ॥ सवित्रे स्वाहा हस्ताय ॥ स्वाहेदं हुते स्वा

हा पृणते ॥ स्वाहा प्रयच्छते स्वाहा प्रतिगृभ्णते स्वाहेति ॥ ११ ॥ त्वष्टा

पं
४

वा अकामयत ॥ च्छिन्नं प्रजां विंदेयेति ॥ स एतं लंबं छिन्नायै सुरोडा
शं मुष्टाकं पालुं निरवपत् ॥ ततो वै स च्छिन्नं प्रजामविंदत ॥ च्छिनं
ह वै प्रजां विंदते ॥ य एतेन हविषा यजते ॥ य उ चैनदेवं वेद ॥ सो
न्नं जुहोति ॥ लंबं छिन्नायै स्वाहा ॥ च्छिन्नायै स्वाहा ॥ प्रजायै स्वा
हेति ॥ १२ ॥ वायुर्वा अकामयत ॥ कामचारं मेषु लोकेषु भिजयेयं
मिति ॥ स एतं वायवे निर्यायै गृष्ठ्यैडुग्धं पयो निरवपत् ॥ ततो वै
स कामचारमेषु लोकेष्वभ्यजयत ॥ कामचारं ह वा एषु लोकेषु

भिजंयति॥ यएतेनहविषायजंते॥ यउचैनदेवंवेद॥ सोत्रजुहो
ति॥ वायवेस्वाहानिध्यायैस्वाहा॥ कामचारायस्वाहाभिजित्यैस्वा
हेति॥ १॥ इंद्राग्नीवाअकामयेतां॥ श्रैष्ठ्यंदेवानामभिजयेवेति॥
तावेतमिंद्राग्निभ्यांविशाखाभ्यांपुरोडाशमेकादशकपालंनिर
वपतां॥ ततोवैतौश्रैष्ठ्यंदेवानामभ्यजयतां॥ श्रैष्ठ्यंहवैसमाना
नामभिजयति॥ यएतेनहविषायजंते॥ यउचैनदेवंवेद॥ सोत्र
जुहोति॥ इंद्राग्निभ्यांस्वाहाविशाखाभ्यांस्वाहा॥ श्रैष्ठ्यायस्वाहा

ण
५

भिजित्यै स्वाहेति ॥१४॥ अग्रेतस्मौर्णमास्या आज्यं निर्वपति ॥ कामो
वै पौर्णमासी ॥ काम आज्यं ॥ कामेनैव कामꣳ समर्द्धयति ॥ क्षिप्रमे
नꣳ स काम उपनमति ॥ येन कामेन यजते ॥ सोऽत्र जुहोति ॥ पौर्णमा
स्यै स्वाहा कामाय स्वाहाऽऽगत्यै स्वाहेति ॥१५॥ मित्रो वा अकामयत ॥ मि
त्रधेयमेषु लोकेष्वभिजयेयमिति ॥ स एतं मित्राय चरुं
निरवपत् ॥ ततो वै स मित्रधेयमेषु लोकेष्वभ्यजयत् ॥ मित्रधेयꣳ
ह वा एषु लोकेष्वभिजयति ॥ य एतेन हविषा यजते ॥ य उ चैनदेवं वे

दे ॥ सोऽत्र जुहोति ॥ मित्राय स्वाहाऽनूराधेभ्यः स्वाहा ॥ मित्रधेयाय स्वा
हाऽभिजित्यै स्वाहेति ॥ १ ॥ इन्द्रो वा अकामयत ॥ ज्यैष्ठ्यं देवानामभिज
येयमिति ॥ स एतमिन्द्राय ज्येष्ठायै पुरोडाशमेकादशकपालं निरव
पन्महाव्रीहीणां ॥ ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत ॥ ज्यैष्ठ्यं ह वै
समानानामभिजयति ॥ य एतेन हविषा यजते ॥ य उ चैनदेवं वेद
॥ सोऽत्र जुहोति ॥ इन्द्राय स्वाहा ज्येष्ठायै स्वाहा ॥ ज्यैष्ठ्याय स्वाहाऽभिजि
त्यै स्वाहेति ॥ २ ॥ प्रजापतिर्वा अकामयत ॥ मूलं प्रजां विन्देयेति ॥ स

एतं प्रजापतये मूलाय चरुं निर्वपत्॥ ततो वै स मूलं प्रजामविंदत॥ मूलं ह वै प्रजां विंदते॥ य एतेन हविषा यजते॥ य उ चैनदेवं वेद॥ सोऽत्र जुहोति॥ प्रजापतये स्वाहा मूलाय स्वाहा॥ प्रजायै स्वाहेति॥ ११॥ आपो वा अकामयंत॥ समुद्रं काममभिजयेमेति॥ ता एतमद्भ्यो षाढाभ्यश्चरुं निर्वपन्॥ ततो वै ताः समुद्रं काममभ्यजयन्॥ समुद्रं ह वै काममभिजयति॥ य एतेन हविषा यजते॥ य उ चैनदेवं वेद॥ सोऽत्र जुहोति॥ अद्भ्यः स्वाहाषाढाभ्यः स्वाहा॥ समुद्र

यु स्वाहा कामायु स्वाहा ॥ अभिजित्यै स्वाहेति ॥ ४ ॥ विश्वे वै देवा अ
कामयन्त ॥ अनपजय्यं जयेमेति ॥ त एतं विश्वेभ्यो देवेभ्यो षाढा
भ्यश्चरुं निरवपन् ॥ ततो वै तेनपजय्यमजयन् ॥ अनपजय्यं
ह वै जयति ॥ य एतेन हविषा यजते ॥ य उ चैनदेवं वेद ॥ सोऽत्र
जुहोति ॥ विश्वेभ्यो देवेभ्यः स्वाहा षाढाभ्यः स्वाहा ॥ अनपज
य्यायु स्वाहा जित्यै स्वाहेति ॥ ५ ॥ ब्रह्म वा अकामयत ॥ ब्रह्मलो
कमभिजयेयमिति ॥ तदेतं ब्रह्मणेभिजिते चरुं निरवपत् ॥

ह्रती

क

.ण
१७

ततो वै त ब्रह्मलोकमभ्यजयत् ॥ ब्रह्मलोकं ह वा अभिजयति ॥ य ए
तेन हविषा यजते ॥ य उ चैनदेवं वेद ॥ सोऽत्र जुहोति ॥ ब्रह्मणे स्वा
हाभिजिते स्वाहा ॥ ब्रह्मलोकाय स्वाहाभिजित्यै स्वाहेति ॥ ६ ॥ विष्णु
र्वा अकामयत ॥ पुण्यꣳ श्लोकꣳ शृण्वीय ॥ न मा पापी कीर्तिरागच्छे
दिति ॥ स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत् ॥ त
तो वै स पुण्यꣳ श्लोकमशृणुत ॥ नैनं पापी कीर्तिरागच्छत् ॥ पुण्य
ꣳ ह वै श्लोकꣳ शृणुते ॥ नैनं पापी कीर्तिरागच्छति ॥ य एतेन हविषा

१७

यजते ॥ यउंचैनदेवंवेद ॥ सोत्रजुहोति ॥ विष्णवेस्वाहाश्रोणायैस्वा
हा ॥ श्लोकायैस्वाहाश्रुतायैस्वाहेति ॥ ७ ॥ वसवोवाअकामयंत ॥ अ
ग्रंदेवतानांपरीयामेति ॥ तएतंवसुभ्यःश्रविष्ठाभ्यःपुरोडाशंमष्टा
कपालंनिरवपन् ॥ ततोवैतेग्रंदेवतानांपर्यायन् ॥ अग्रंहवैसमा
नानांपर्येति ॥ यएतेनहविषायजते ॥ यउंचैनदेवंवेद ॥ सोत्रजुहो
ति ॥ वसुभ्यःस्वाहाश्रविष्ठाभ्यःस्वाहा ॥ अग्र्यायस्वाहापरीत्यैस्वाहे
ति ॥ ८ ॥ इंद्रोवाअकामयत ॥ दृढोशिथिलस्यामिति ॥ सएतंवरुणा

यन्नुातभिषजेभेषुजेभ्यः पुरोडाशंुं द्दशंाकपालंुं निरवपत्‌कृष्णानांव्रीहीणां।। ततोवैसद्दृढोऽरिष्षितोभवत्‌।। दृढोहवाअरिष्षितोभवति।। यएतेनहविषायजंते।। यउचैनदेवंवेदं।। सोऽत्रंजुहोति।। वरुणायुस्वाहाश्चुातभिषजेस्वाहा।। भेषजेभ्यः स्वाहेति।। ११।। अजोवाएकपाद्दकामयत।। तेजस्वीब्रह्मवर्चसीस्यामिति।। सएतमजायैकपदेऽजाक्षीरपुरोडाशंुं निरवपत्‌।। ततोवैसतेजस्वीब्रह्मवर्चस्यभवत्‌।। तेजस्वीहवैब्रह्मवर्चसीभवति।। यएतेनहविषायजंते।। यउचैन

देवं वेद ॥ सोत्रं जुहोति ॥ अजायैकपदे स्वाहा प्रोष्ठपदेभ्यः स्वाहा ॥ ते
जसे स्वाहा ब्रह्मवर्चसाय स्वाहेति ॥ १० ॥ अहिर्वै बुध्नियोकामयत ॥ इ
मां प्रतिष्ठां विंदेयेति ॥ स एतमहये बुध्नियाय प्रोष्ठपदेभ्यः पुरोडाशं
भूमिकपालं निरवपत् ॥ ततो वै स इमां प्रतिष्ठामविंदत ॥ इमां ह वै
प्रतिष्ठां विंदते ॥ य एतेन हविषा यजते ॥ य उं चैनदेवं वेद ॥ सोत्रं जु
होति ॥ अहये बुध्नियाय स्वाहा प्रोष्ठपदेभ्यः स्वाहा ॥ प्रतिष्ठायै स्वाहे
ति ॥ ११ ॥ पूषा वा अकामयत ॥ पशुमान्त्स्यामिति ॥ स एतं पूष्णे रेवत्यै

त्रुरुं निर॑वपत् ॥ ततो॒ वै स प॒शुमा॑नभवत् ॥ प॒शुमा॑न्ह॒ वै भ॑वति ॥ य
ए॒तेन॑ ह॒विषा॒ यज॑ते ॥ यउ॑चैन॒ देवं॒ वेद॑ ॥ सोऽत्र॑ जुहोति ॥ पू॒ष्णे स्वाहा॑ रे
व॒त्यै स्वाहा॑ ॥ प॒शुभ्यः॒ स्वाहेति॑ ॥ १२ ॥ अ॒श्विनौ॒ वा अ॑कामयेतां ॥ श्रो
त्र॒स्विना॑ व॒बधि॑रौ स्या॒वेति॑ ॥ ताव॒ेत म॒श्विभ्या॑म॒श्वयु॒ग्भ्यां पु॑रो॒डाशं॑
द्विक॒पालं॒ निर॑वपतां ॥ ततो॒ वै तौ श्रो॒त्र॒स्विना॑व॒बधि॑रा॒व॑भवतां ॥ श्रो
त्र॒स्वी ह॒ वा अ॑बधि॒रो भ॑वति ॥ यए॒तेन॑ ह॒विषा॒ यज॑ते ॥ यउ॑चैन॒ देवं॑
वेद॑ ॥ सोऽत्र॑ जुहोति ॥ अ॒श्विभ्या॒ᳪं स्वाहा॑ऽश्वयु॒ग्भ्या॒ᳪं स्वाहा॑ ॥ श्रोत्रा॑

युस्वाहास्कत्यै स्वाहेति॥१३॥ युमोवाअंकामयत॥ प्रितृणां राज्य
मुभिजेयेयुमिति॥ सएतंयुमायोपुभरंणीभ्यश्चुरुंनिरंवपत्॥ त
तोवैसपितृणां राज्यमुभ्यजयत्॥ सुमानानां ह वै राज्यमुभिजं
यति॥ यएतेनंहविषायजंते॥ यउंचैनदेवंवेद॥ सोऽत्रजुहोति॥ युमा
युस्वाहांपुभरंणीभ्यः स्वाहां॥ राज्यायुस्वाहाभिजित्यैस्वाहेति॥१४॥
अथैतद्‌मावास्यांयाआज्यंनिर्वपति॥ कामोवाअमावास्या॥ काम
आज्यं॥ कामेनैवकामुं समर्द्धयति॥ क्षिप्रमेनुं सकामुउपनम

ति॥ येन कामेन यजेत॥ सोत्रं जुहोति॥ अमावास्यायै स्वाहा कामा-
यु स्वाहागत्यै स्वाहेति॥१५॥ चंद्रमा वा अकामयत॥ अहोरात्रानर्द्ध-
मासान्मासानृतून्संवत्सरमाप्त्वा॥ चंद्रमसः सायुज्यं सलोकतामा-
प्नुयामिति॥ स एतं चंद्रमसे प्रतीहत्यायै पुरोडाशं पंचदशकपालं
निरवपत्॥ ततो वै सोहोरात्रानर्द्धमासान्मासानृतून्संवत्सरमाप्त्वा
॥ चंद्रमसः सायुज्यं सलोकतामाप्नोत्॥ अहोरात्रान्ह वा अर्द्धमासा-
न्मासानृतून्संवत्सरमाप्त्वा॥ चंद्रमसः सायुज्यं सलोकतामाप्नोति

॥ य एतेन हविषा यजते॥ य उ चैनदेवं वेद॥ सोऽत्र जुहोति॥ चंद्रमसे
स्वाहा ष्वती हृत्सांये स्वाहा॥ अहोरात्रेभ्यः स्वाहा ई मासेभ्यः स्वाहा॥
मासेभ्यः स्वाहा ऋतुभ्यः स्वाहा॥ संवत्सराय स्वाहेति॥ १॥ अहोरात्रे वा
अकामयेतां॥ अत्यहोरात्रे मुच्येवहि॥ न नावहोरात्रे आप्नुयातामि
ति॥ ते एतमहोरात्राभ्यां चरुं निरवपतां॥ द्वयानां व्रीहीणां॥ शुक्लानां
च कृष्णानां च॥ सवात्योऽदुग्धे॥ स्वेतायै च कृष्णायै च॥ ततो वै ते अत्यहो
रात्रे अमुच्येतां॥ नैने अहोरात्रे आप्नुतां॥ अति ह वा अहोरात्रे मुच्य

ण
२१

ते॥नैनंमहोरात्रेआप्नुतः॥यएतेनहविषायजते॥यउचैनदेवं
वेद॥सोत्रजुहोति॥अन्हेस्वाहारात्रियैस्वाहा॥अतिमुक्त्यैस्वाहेति
॥२॥उषावाअकामयत॥प्रियादित्यस्यसुभगास्यामिति॥सेतमु
षसेचरुंनिरवपत्॥ततोवैसाप्रियादित्यस्यसुभगाभवत्॥प्रियो
हवैसमानानां सुभगोभवति॥यएतेनहविषायजते॥यउचैन
देवंवेद॥सोत्रजुहोति॥उषसेस्वाहाव्युष्ट्यैस्वाहा॥व्युषुष्यैस्वाहा
व्युछंत्यैस्वाहा॥व्युष्टायैस्वाहेति॥३॥अथैतस्मैनक्षत्रायचरुंनिर्व

२१

पतिः॥ यथा त्वं देवानामसि॥ एवमहं मनुष्याणां भूयासमिति॥ यथा
ह वा एतद्देवानां॥ एवꣳ ह वा एष मनुष्याणां भवति॥ य एतेन हवि
षा यजते॥ य उ चैनदेवं वेद॥ सोऽत्र जुहोति॥ नक्षत्राय स्वाहोदेष्य
ते स्वाहा॥ उद्यते स्वाहोदिताय स्वाहा॥ हरसे स्वाहा भरसे स्वाहा॥ भ्रा
जसे स्वाहा तेजसे स्वाहा॥ तपसे स्वाहा ब्रह्मवर्चसाय स्वाहेति॥ ४॥
सूर्यो वा अकामयत॥ नक्षत्राणां प्रतिष्ठा स्यामिति॥ स एतꣳ सूर्या
य नक्षत्रेभ्यश्चरुं निरवपत्॥ ततो वै स नक्षत्राणां प्रतिष्ठाभवत्॥

प्रतिष्ठाह वै समानानां भवति॥ य एतेन हविषा यजते॥ यं वै
न दैवं वेद॥ सोत्र जुहोति॥ सूर्याय स्वाहा नक्षत्रेभ्यः स्वाहा॥ प्र
तिष्ठायै स्वाहेति॥५॥ अथैतमादित्येचरुं निर्वपति॥ इयं वा अदि
तिः॥ अस्यामेव प्रतितिष्ठति॥ सोत्र जुहोति॥ अदित्यै स्वाहा प्रतिष्ठा
यै स्वाहेति॥६॥ अथैतं विष्णवे चरुं निर्वपति॥ यज्ञो वै विष्णुः॥ य
ज्ञ एवांततः प्रतितिष्ठति॥ सोत्र जुहोति॥ विष्णवे स्वाहा यज्ञाय स्वा
हा॥ प्रतिष्ठायै स्वाहेति॥७॥ अग्निः पंचदशः प्रजापतिः षोडशः सोमः

मुहा ग्नी ही णामिं द्रः कुष्मा नौं ग्नी ही णा मं हो रान्ते हु या नौं ग्नी ही णां ॥
पितरः षट्कपालं सविता द्वादश कपालमिंद्राग्नी एकादश कपा
लमिंद्र एकादश कपालं विष्णुस्त्रिकपालमिंद्रो दश कपालम हि
र्षिकपालमग्नि नौष्टिकपालं चंद्रमाः पंचदश कपाल मुन्नता श
कपालं ॥ रुद्रो यमा पूषापस्मु मा सोमोरुद्रो बृहस्पतिः पयसि वायुः
पयः ॥ सोमो वायुरिं द्राग्नी मित्र इंद्र आपोऽसं यमोभिजित्येत्वष्टाप्र
जापतिः प्रजायै पौर्ण मास्या अमावास्या या आगत्ये ॥ आपुरस्ता ॥ वि

भ्रुजिष्यै ॥ ब्रह्म तदेतं ॥ विष्णुः स एतं ॥ वायुः स एतत् ॥ इन्द्राग्नी श्रैष्ठ्य
मिन्द्रियेष्वमिन्द्रो हृदः ॥ अहिः स्वर्योर्दिव्ये विल्वे प्रतिष्ठायै ॥ पितर
आप्रोविष्णु वसवो कामयंत मेति त एतं निरवपन् ॥ इन्द्राग्नी अग्नि
नावकामयेतां वेतिता वेतं निरवपतां ॥ अहोरात्रे वा अकामयेता
मितिते एतं निरवपतां ॥ अन्यत्रो कामयत मितिस एतं निरवपत्
७ ॥ अग्निर्नेऋध्यास्तनवोनवोग्निर्मित्रश्चुंद्रमाः षट् ॥ ६ ॥ अग्निर्नेस्तं
नोवायुरहिर्बुध्निये न्द्र स्था वाइ य मघे तत्पौर्णमास्या अजो वा एकपा

१.ण
२४

त्स्वर्गस्त्रिषष्ठिः॥६३॥ हरिः ॐ॥ ॥श्री गजाननार्पणमस्तु॥
तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्ण
मच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वं। ब्रह्म वै पर्णः। यत्प
र्णशाखया वत्सानपाकरोति। ब्रह्मणैवैनानपाकरोति। गायत्रो
वै पर्णः। गायत्राः पशवः॥१॥ तस्मात्त्रीणि त्रीणि पर्णस्य पलाशानि
। त्रिपदा गायत्री। यत्पर्णशाखया गाः प्रार्पयति। स्व एवैना देव
तयां प्रार्पयति। यं कामयेतापशुः स्यादिति। अपर्णां तस्मै शुष्कां

१९

ग्रामाहरेत। अप्रभुरेव भवति। यंकामयेत पशुमान्स्यादिति।
बहुपर्णां तस्मै बहुशाखामाहरेत। पशुमंतमेवैनं करोति॥२॥
यत्प्राचीमाहरेत। देवलोकमभिजयेत। यदुदीचीं मनुष्यलोकं
। प्राचीमुदीचीमाहरति। उभयोर्लोकयोरभिजित्यै। इषे त्वोर्जे
त्वेत्याह। इषमेवोर्जं यजमाने दधाति। वायव स्थेत्याह। वायुर्वा अं
तरिक्षस्याध्यक्षाः। अंतरिक्षदेवत्याः खलु वै पशवः॥३॥ वाय
व एवैनान्परिददाति। प्रवा एनानेतदाकरोति। यदाह। वायव

तै°
५

स्येत्युपायवस्येत्याह। यजमानायैव पशूनुपह्वयते। देवो वः सवि
ता प्रार्पयत्वित्याह प्रसूत्यै। श्रेष्ठतमाय कर्मण इत्याह। यज्ञो हि श्रेष्ठ
तमं कर्म। तस्मादेवमाह। आप्यायध्वमघ्निया देवभागमित्याह॥
४॥ वत्सेभ्यश्च वा एताः पुरा मनुष्येभ्यश्चाप्यायंत। देवेभ्य एवैना इं
द्रायाप्याययति। ऊर्जस्वतीः पयस्वतीरित्याह। ऊर्जं हि पयः संभ
रंति। प्रजावतीरनमीवा अयक्ष्मा इत्याह प्रजात्यै। मा व स्तेन ईश
त माघशंस इत्याह गुप्त्यै। रुद्रस्य हेतिः परि वो वृणक्त्वित्याह। रु

ष्ट्रा देवेनास्त्रायते। ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरित्याह। ध्रुवा
एवास्मिन्बह्वीः करोति॥५॥ यजमानस्य पशून्पाहीत्याह। पशू
नां गोपीथाय। तस्मात्सायं पशव उपसमावर्तन्ते। अनधःसादय
ति। गर्भाणां धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः। उ
परीव निदधाति। उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य सम
ष्ट्यै॥६॥ पुरा वः करोति पुरावो देवभागमित्याह करोति न वेच॥७॥
देवस्य त्वा सवितुः प्रसव इत्यश्वपर्शुमादत्ते प्रसूत्यै। अग्निनो वाङ्

८९
२

भ्यामित्स्वाहा। अग्निभ्यो हरिद्वाभ्यो मधुपर्क आस्तां। पूष्णो हस्ताभ्यामि
त्स्वाहा यस्यै। यो वा ओषधीः पर्वशो वेद। नैनाः स हिनस्ति। प्रजापति
र्वा ओषधीः पर्वशो वेद। स एना न हिनस्ति। अश्वपृश्नी बर्हिरश्चैति
। प्राजापत्यो वा अश्वः स योनित्वाय॥१॥ ओषधीनां महिमानं सायै। यु
त्स्यं घोषद्दसी स्वाहा। यजमान एव रयिं दधाति। प्रत्युष्टं रक्षः प्र
त्युष्टा अरातय इत्स्वाहा। रक्षसामपहत्यै। प्रेयमगाद्धिषणा बर्हिर
च्छ स्वाहा। विद्या वै धिषणा। विद्ययैवैन दच्छैति। मनुना कृता स्वधयावि

२

तुष्टेत्याह । मा नु वीहि पर्मुः स्वधा कृता ॥ ४ ॥ अत्र आर्वेहंति कवयः पु
रस्तादित्याह । सुप्रजाः ऽस्मो वै कवयः । यज्ञः पुरस्तात् । मुखत एव
यज्ञमारभते । अथो यद्धेतदुल्का यतः कुतश्चाहरति । तस्माच्चोर
वद्दिशो भवति । देवेभ्यो जुष्टमिह बर्हिरासद इत्याह । बर्हिषः स
मृद्ध्यै । कर्मणो नपराधाय । देवानां परिषूतमसीत्याह ॥ ५ ॥ यदा
इदं किंच । तद्देवानां परिषूतं । अथो यथा वस्यसे प्रतिप्रोच्याहेदं
केरिष्यामीति । एवमेवतदध्वर्युर्देवेभ्यः प्रतिप्रोच्य बर्हिर्दाति ।

तृ॰
(७

आत्मनो हिंसायै। यावत्तन्तुमान्वरिहरेत्। यत्तेषामुच्छिंष्यात्। अतिलघुरसोऽचयेत्। एकं स्तंवं परिहरेत्। तं संवेहयात्॥४॥ पुरस्तान्तिरिकाय। वर्षवृद्धमसीत्याह। वर्षवृद्धा वा ओषधयः। देववर्हिरित्याह। देवेभ्य एवैनत्करोति। मात्वान्वङ्मातिर्यगित्याहाहिंसायै। पर्वते राध्यासमित्याहध्यै। आछेत्ता ते मारिषमित्याह। नास्यात्मनो मीयते। य एवं वेद॥५॥ देववर्हिः शतवल्शं विरोहेत्याह। प्रजा वै वर्हिः। प्रजा नामेव प्रजननं नयः। सहस्रवल्शा वि

१८

वृयंरुहेमेत्याह। आशिषमेवैतामाशास्ते। पृथिव्याः संपृचः पाही-
त्याह। स्फातिच्छित्यै। अयुंगायुंगमुष्टीलुनोति। मिथुनत्वाय प्रजात्यै
। सुसंभृता त्वा संभरामीत्याह। ब्रह्मणैवैनत्संभरति ॥६॥ अदित्यै
रास्नासीत्याह। इयं वा अदितिः। अस्या एवैनद्रास्नां करोति। इन्द्राण्यै
सन्नहनमित्याह। इन्द्राणी वा अग्रे देवतानां समनह्यत। सार्ध्नोत्
। ऋद्ध्यै सन्नह्यति। प्रजा वै बर्हिः। प्रजानामपरावापाय। तस्मात्स्नाव
संतताः प्रजा जायन्ते ॥७॥ पूषा ते ग्रन्थिं ग्रथ्नात्वित्याह। पुष्टिमेव य

जमानेदधाति। सतेमास्थादित्याह। अहिꣳसायै। पूष्णात्वांचमुपगृह्ण
ति। पूष्णावैप्राचीनꣳरेतोधीयते। पूष्णैवास्मैप्राचीनꣳरेतोदधाति
। इन्द्रस्यत्वाबाहुभ्यामुद्यच्छइत्याह। इन्द्रियमेवयजमानेदधाति। बृह
स्पतेर्मूर्ध्नाहरामीत्याह। ब्रह्मवैदेवानांबृहस्पतिः॥ ८॥ ब्रह्मणैवैनꣳह
रति। उर्वन्तरिक्षमन्विहीत्याहगत्यै। देवंगममसीत्याह। देवानेवैन
ङ्गमयति। अनधःसादयति। गर्भाणांधृत्याअप्रपादाय। तस्माद्गर्भाः
प्रजानामप्रपादुकाः। उपरीवनिदधाति। उपरीवहिसुवर्गोलोकः।

सुवर्गस्य लोकस्य समष्ट्यै ॥ ९ ॥ सयोनित्वाय स्वधाकृतासीत्याह दाय
वेदं भरति जायन्ते ह सहस्पतिः समष्ट्यै ॥ १० ॥ पूर्वेद्युरिध्माबर्हिः करोति
। यज्ञमेवारभ्य गृहीत्वोपवसति । प्रजापतिर्यज्ञमसृजत । तस्योखे
अस्रंसेतां । यज्ञो वै प्रजापतिः । यत्सांनाय्योखे भवतः । यज्ञस्यैव तत्
छिद्रे उपदधात्यप्रस्रंसाय । संधत्तं दैव्या युक्कर्मणे देवयुज्याय युज्यादित्या
ह दैवयुज्ययैवैनानि संधाति । मातरिश्वनो घर्मोऽसीत्याह ॥ ११ ॥ अन्
तरिक्षं वै मातरिश्वनो घर्मः । एषां लोकानां विधृत्यै । द्यौरसि पृथिव्यसी

ब्रा॰ तै॰
२९

त्याह। दिवं स्थुसं षाड्विश्याम् स संभरन्ता। यजुरवा। तस्मादेव माह।
त्रिं धात्रा धाराया असि परमेण धाम्नेत्याह। वृष्टिर्वै विश्वधाया। वृष्टिमे
वावरुन्धे। दृंहस्व माह्वारित्याह धृत्यै॥२॥ वसूनां पवित्रमसीत्या
ह। प्राणा वै वसवः। तेषां वा एतद्भागधेयं। यत्पवित्रं। तेभ्य एवैनत्क
रोति। शतधारं सहस्रधारमित्याह। प्राणेष्वेवायुर्दधाति सर्वत्वा
य। त्रिवृत्पलाशशाखाया दर्भमयं भवति। त्रिवृद्वै प्राणः। त्रिवृ
तमेव प्राणं मध्यतो यजमाने दधाति॥३॥ सोम्यः पूर्णः संयानिरत्या

यं। सा क्षामा विश्वं ह भिः। प्राकृ सायम ध्रिनि दधाति। तस्यां णा प्रान
यो रूपं। तिर्यकृ प्रातः। तद्द्वौ स्यरूपं। प्राण्वर्यं ६ खे तद्दहः। अर्थं वैवं
न्नमाः। अन्नं प्राणाः। उभयमेवोपैत्यजामित्वाय॥४॥ तस्माद्वयं ६ सर्व
तः प्रवर्ते। कुतस्तोको कुतो नु स्मइत्याह। त्रातिं ष्ठिस्ये। हविषो स्कंदाय
। न हि कुतं ६ स्ताहाह तं ६ स्कंदति। द्विविना को नाम्याग्निः। तस्य विभ्रु
वो भागधेयं। अग्न येह्व हते नाकायेत्याह। नाकमेवाग्निं भागधेयेन
समर्धयति। स्वाहा द्यावापृथिवीभ्यामित्याह। द्यावापृथिव्यो रेवैनत्स

ब्रा० त०
३०

तिष्ठापयति ॥५॥ पवित्रवत्यानयति । अपां चैवौषधीनां च रसꣳ
सꣳसृजति । अथो ओषधीष्वेव पशून्प्रतिष्ठापयति । अन्वारभ्य
वाचं यच्छति । यज्ञस्य धृत्यै । धारयन्नास्ते । धारयंत इव हि दुहंति ।
कामधुक्ष इत्याह । तृतीयस्यैव । यइमे लोकाः । इमानेव लोकान्य
जमानो दुहे ॥६॥ अमूमिति नाम गृह्णाति । भद्रमेवासां कर्माविष्क
रोति । सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्मेत्याह । इयं वै विश्वा
युः । अंतरिक्षं विश्वव्यचाः । असौ विश्वकर्मा । इमानेवैताभिर्लोका

न्यथा पूर्व्वं दुहे। अथो यथा वृहन्त्रैपुण्यं मन्यास्ते। एवमेवैनां एतदु
पस्तौति। तस्मात्स्वाहा हारिद्रुणीयं वहं मानाउपस्कृवंतः प्रसन्दुह
ति॥७॥ क्षुद्र उद्दुग्धां प्रयायदे देभ्यो हविरिति वाचं विसृजते। यथा दे
वतमेवं वर्षसीति। देव्यस्य च मानुषस्य च व्यावृत्त्यै। त्रिराह। त्रिषं
त्या हि देवाः। अवाच्यं यमो नैन्वारभ्यो तराः। अपरिमितमेवावरुंधे
। नदारुपात्रेण जुहुयात्। अग्निवद्वै दारुपात्रं। यद्दारुपात्रेण जुहुया
त्॥८॥ यातयामा ह हविषां यजेत। अथो खल्वाहुः। पुरोडाशो मुखा

श्रा० त०
३१

निर्वेहुवीꣳषि। नि तद्ग्रंतः पुरोडाशाꣳ हविषो यामोस्तीति। काममेव दारुपात्रेणडुह्यात्। शूद्रएव न दुह्यात्। असतोवा एष संभूतः। यच्छूद्रः। अहविरेव तदित्याहुः। यच्छूद्रो दोग्धीति॥९॥ अग्निहोत्रमेव न दुह्याच्छूद्रः। तद्धिनोत्पुनंति। यदा खलु वै पवित्रमत्येति। अथ तद्धविरिति। संप्रच्यवध्वमुपतावरीरित्याह। अपां चैवौषधीनां च रसꣳसꣳसृजति। तस्मादाह पां चौषधीनां च रसमुपजीवामः। संग्राध नस्य सातयइत्याह। पुष्टिमेव यजमाने दधाति। सोमेनलातेन चौक्षाय पुर २

धीस्याह ॥१०॥ सोमं प्रैवैनं करोति । यो वै सोमं भक्षयित्वा । संवत्सरं
सोमं न पिबति । पुनर्भक्ष्योऽस्य सोमपीथो भवति । सोमः खलु वै सां
नाय्यं । य एवं विद्वान्त्सांनाय्यं पिबति । अपुनर्भक्ष्योऽस्य सोमपीथो भ
वति । न मृन्मयेनापिदध्यात् । यन्मृन्मयेनापिदध्यात् । पितृदेवत्यं
स्यात् ॥११॥ अयस्पात्रेण वा दारुपात्रेण वापिदधाति । तद्धि सदेवं ।
उदन्वद्भवति । आपो वै रक्षोघ्नीः । रक्षसामपहत्यै । अदस्तमसि वि
ष्णवे त्वेत्याह । यज्ञो वै विष्णुः । यज्ञायैवैनददस्तं करोति । विष्णो हव्यं

९ रक्षस्वेत्याह गुप्त्यै । अनधः सादयति । गर्भाणां धृत्यै । अप्रपादाय । त
स्माद्गर्भाः प्रजानामप्रपादुकाः । उपरीव निदधाति । उपरीव हि सुव
र्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै ॥ १२ ॥ असीत्याह धृत्यै यजमा
ने दधात्यजामित्वाय स्थापयति दुहे दुहं इति दुह्या दोग्ध्रीति दधीत्याह
स्यात्सादयति पंच च ॥ १३ ॥ कर्मणे वां देवेभ्यः शकेयमित्याह शक्त्यै
। यज्ञस्य वै संततिमनु प्रजाः पशवो यजमानस्य संतायन्ते । यज्ञ
स्य विच्छित्तिमनु प्रजाः पशवो यजमानस्य विच्छिद्यन्ते । यज्ञस्य सं

तं तिरसि पुत्रस्य संत्यासंतत्यै स्तुणा प्रिसं ततेत्यै वा पुत्रस्ये त्याह वुनी

यात्संतनो ति। यजमानस्य प्रजायै पश्नाः संतत्यै। अपः प्रण

यति। श्रद्धा वा आपः। श्रद्धामेवारभ्य प्रणीय प्रचरति। अपः प्रण

यति। यज्ञो वा आपः। ॥ १ ॥ यज्ञमेवारभ्य प्रणीय प्रचरति। अपः प्र

णयति। वज्रो वा आपः। वज्रमेव भ्रातृव्येभ्यः प्रहृत्य प्रणीय प्रचर

ति। अपः प्रणयति। आपो वै रक्षोघ्नीः। रक्षसामपहत्यै। अपः प्रण

यति। आपो वै देवानां प्रियं धाम। देवानामेव प्रियं धाम प्रणीय प्र

ब्रा॰ त॰
३३

चरति ॥१॥ अपः प्रणयति । आपो वै सर्वा देवताः । देवता एवारभ्य प्र णीय प्रचरति । वेषाय त्वेत्याह । वेषाय ह्येनदादत्ते । प्रत्युष्टꣳ रक्षः प्र त्युष्टा अरातय इत्याह । रक्षसामपहत्यै । धूरसीत्याह । एष वै धुर्यो ग्निः । तं यदनुपस्पृश्यातीयात् ॥२॥ अध्वर्युं च यजमानं च प्रदहेत् । त मुपस्पृश्यात्येति । अध्वर्योश्च यजमानस्य चाप्रदाहाय । धूर्व तं यो ऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वाम इत्याह । को वा व पुरुषो । यं चैव धूर्व ति । यश्चैनं धूर्वति । तावुभौ शुचार्पयति । त्वं देवानामसि सस्नितमं

३

पवित्रतमं जुष्टतमं वह्नितमं देवहूतममित्याह । यथा यजुरेवैतत्
॥४॥ अह्रुतमसि हविर्धानमित्युहानांस्यै । दृंहस्व मा ह्वारित्याह
धृत्यै । मित्रस्य त्वा चक्षुषा प्रेक्ष इत्याह मित्रतायै । मा भेर्मा संविक्था
मा त्वा हिंसिषमित्युहाहिंसायै । यद्वै किं च वातो नाभिवाति । त
त्सर्वं वरुणदेवत्यं । उरुवातायेत्याह । अवारुणमेवैनत्करोति ।
देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्या
ह ॥५॥ अश्विनौ हि देवानामध्वर्यू आस्तां । पूष्णो हस्ताभ्यामित्याह

आ. त.
३४

यत्यै। अग्नये जुष्टं निर्वपामीत्याह। अग्नय एवैनां जुष्टं निर्वपति। त्रिर्यजुषा। त्रय इमे लोकाः। एषां लोकानामाप्त्यै। तूष्णीं चतुर्थं। अपरिमितमेवावरुंधे। स एवमेवानुपूर्वं हवींषि निर्वपति। ६। इदं देवानामिदमु नः सहेत्याह व्यावृत्त्यै। स्फात्यै त्वा नारात्या इत्याह गुप्त्यै। तमसीव वा एषोंऽतश्चरति। यः परीणहि। सुवरभि विख्येषं वैश्वानरं ज्योतिरित्याह। सुवरेवाभि विपश्यति वैश्वानरं ज्योतिः। द्यावापृथिवी हविषि गृहीत उदवेपेतां। दृंहंतां दुर्या द्यावापृथिव्योरि

स्वाहा । गृहाणां ग्रावा । इत्युर्वोर्ध्वायै । उर्वन्तरिक्षमन्विहि स्वाहा गत्यै
। अदित्यास्त्वोपस्थे सादयामी स्वाहा । इयं वा अदितिः । अस्या एवैन
दुपस्थे सादयति । अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्यै ॥७॥ एते वा आ
प्रीधाम प्रणी युग्चं रत्यती याहैतत्कुभ्यामित्याह हविꣳषि निर्व
पति गत्यै चत्वारि च ॥४॥ इन्द्रो वृत्रमहन् । सोऽपः । अभ्यम्रियत । ता
सां यन्मेध्यं यज्ञियꣳ सदेवमासीत् । तदपोदक्रामत् । ते दर्भा अभ
वन् । यद्दर्भैः पवित्रैः पुनाति । या एव मेध्या यज्ञियाः सदेवा आपः । ता

भिरेवैना उत्पुनाति। द्वाभ्यामुत्पुनाति॥१॥ द्विपाद्यजमानः
प्रतिष्ठित्यै। देवो वः सवितोत्पुनात्वित्याह। सवितृप्रसूत एव
वैना उत्पुनाति। अच्छिद्रेण पवित्रेणेत्याह। असौ वा आदित्योऽच्छिद्रं प
वित्रं। तेनैवैना उत्पुनाति। वसोः सूर्यस्य रश्मिभिरित्याह। प्राणा वा
आपः। प्राणा वसवः। प्राणा रश्मयः॥२॥ प्राणैरेव प्राणान्त्संपृणक्ति।
सावित्रियर्चा। सवितृप्रसूतं मे कर्मासदिति। सवितृप्रसूतमेवास्य
कर्म भवति। पुच्छोग्रा यत्रियात्रिषमक्तुत्वाय। आपो देवीरग्रेपुवो

अग्ने गृहपत इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे। अग्न इमं यज्ञं
नयेत्यग्ने यज्ञपतिमित्याह। अग्न एव यज्ञं नयति। अग्ने यज्ञपतिं॥२
॥युष्मानिंद्रोवृणीत वृत्रतूर्ये यूयमिंद्रमवृणीध्वं वृत्रतूर्ये इत्याह। वृ
त्रं ह हनिष्यन्निंद्र आपो वव्रे। आपो हेंद्रं वव्रिरे। संज्ञामेवासामेतत्सा
मानं व्याचष्टे। प्रोक्षिताःस्थेत्याह। तेनापः प्रोक्षिताः। अग्नये वो जु
ष्टं प्रोक्षाम्यग्नीषोमाभ्यामित्याह। यथादेवतमेवैनाः प्रोक्षति। त्रि
: प्रोक्षति। त्र्यावृद्धि यज्ञः॥३॥ अपो रक्षसामपहत्यै। शुंधध्वं दैव्या

आ॰ त॰
३६

प्र कर्म णे दे व यज्या या इ त्या ह । दे व यज्यायौ ए वै नो नि ष्कं ध ति । त्रिः प्रो
क्ष ति । त्र्यां वृद्धि युक्तः । अ थो मेध्यत्वाय । अ वै धू तं रक्षो वे धू ता अ
रा त युइ त्या ह । र क्ष सामपहत्यै । अ दि त्या स्त्व ग सी त्या ह । इ यं वा अ
दि तिः ॥ ५ ॥ अ स्या ए वै नत्त्व चं क रो ति । प्रति त्वा पृ थि वी वे त्वि त्या ह
प्र ति ष्ठि त्यै । पुरस्तात्प्र ती ची नं ग्री व मु त्त र लो मोप स्तृ णा ति मे ध्य
त्वाय । त स्मा त्पुरस्तात्प्र त्यं चः प श वो मे ध मु प ति ष्ठं ते । त स्मा त्प्र जा
मृ गं ग्रा हु काः । य ज्ञो दे वे भ्यो नि ला य त । कृ ष्णो रू पं कृ त्वा । य त्कृ ष्णा जि

३

नेहृविरेंध्यवहंति।यत्साद्देवतद्युत्तं प्रयुंक्ते।हविषोस्कंदाय॥६॥
अघ्रिषवर्णमसिवानस्पत्यमित्याह।अघ्रिषवर्णमेवैनत्करोति
।प्रतिलादित्यास्त्वग्वेत्तित्याह।सयुत्वाय।अग्नेस्तनूरसीत्याह।अ
ग्नेर्वा एषातनूः।यदोषधयः।वाचोविसर्जनमित्याह।यदाहिप्रजा
ओषधीनामुश्नंति।अथवाचंविसृजंते।देववीतयेत्वागृह्णामीत्या
ह॥७॥देवताभिरेवैनत्समर्धयति।अद्रिरसिवानस्पत्यइत्याह।
ग्रावाणमेवैनत्करोति।सइदंदेवेभ्योहव्यंसुशमिशमिष्वेत्याह

आ. त.
२७

शांस्यै हविष्कृदेहीत्याह। यएव देवानां हविष्कृतः। तां ह्वयति। त्रिर्ह्वयति। त्रिषत्या हि देवाः। इषमावदोर्जमावदेत्याह॥८॥ इषं ह्येवोर्जं यजमाने दधाति। द्युमद्वदतवयंसंघातं जेष्मेत्याह भ्रातृव्याभिभूत्यै। मनोः श्रद्धा देवस्य यजमानस्यासुरघ्नीवाक्। यज्ञायुधेषु प्रविष्टासीत्। तेऽसुरा यावंतो यज्ञायुधानामुद्वदतामुपाशृण्वन्। ते पराभवन्। तस्मात्स्वानां मध्ये वसाय यजेत। यावंतोस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपशृण्वंति। ते पराभवंति। उच्चैः समाहंतवाआह विजि

२

त्यै ॥१७॥ इंद्रः एषामिंद्रियं वीर्यं । श्रेष्ठ एषां भवति । वर्षवृद्धमसि प्रति
त्वा वर्षवृद्धं वेत्वित्याह । वर्षवृद्धा वा ओषधयः । वर्षवृद्धा इषीकाः
समृद्ध्यै । यज्ञस्य रक्षांस्यनुप्राविशन् । तान्यस्मात्पुष्टुभ्यो निरवादयं
त । तुषैरोषधीभ्यः । परापूतं रक्षः परापूता अरातय इत्याह । रक्ष
सामपहत्यै ॥१०॥ रक्षसां भागोसीत्याह । तुषैरेव रक्षांसि निरव
दयते । अप उपस्पृशति मेध्यत्वाय । वायुर्वो विविनक्त्वित्याह । पवि
त्रं वै वायुः । पुनात्येवैनान् । अंतरिक्षादिव वा एते प्रस्कंदंति । ये शूर्पा

त्र। देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै। अ
विषोस्कंदाय। निष्फलीकर्त्तवा आह। ज्योहृद्धियुक्तः। अघो मेध्यत्वा
य॥११॥ द्वाभ्यामुत्सुनाति रुक्म योनयं त्वग्ने युक्त पतिं यत्तो दितिरस्कं
दाय गृह्णामीत्याह वृद्धैत्याह विजित्या अपहत्या अस्कंदाय यत्रोणो
चा॥५॥ अवधूतं रक्षो वधूता अरातय इत्याह। रक्षसामपहत्यै
। अदित्यास्त्वगसीत्याह। इयं वा अदितिः। अस्या एवैनत्वचं करो
ति। प्रतिलाहपृथिवी वेत्तीत्याह प्रतिष्ठित्यै। पुरस्तात्प्रतीचीनं ग्री

त्रु सुत्तर तो मो प स्ता णा ति मे ध्रु वा यै। त स्मो त्सु र स्तो स्तु सं चः पुरा वो
मे ध्रु मु प ति ष्ठं ते। त स्मो स्तु जा मृ गं श्वा कु काः। यु स्तो दे वे १ यो नि लो य त
॥१॥ कृ ष्णो रू पं कृ त्वा। यु स्कृ ष्णा जि ने ह वि र धि पि न ष्टि। यु त्ता दे व त
घु स्तं प्र युं क्ते। ह वि षो स्कं दा य। द्या वा पृ थि वी सु दा स्तौ। ते त्रां म्या मा त्र
मे कु म हृ ष्टैं ता ऽश्रा म्या मा त्र मे कु म हेः। दि व स्कं भ नि र सि प्र ति ता दि
त्या स्तु वे ति त्या ह। द्या वा पृ थि व्यो वीं त्यै। धि ष णा सि प र्व त्या प्र ति ता
दि व स्कं भ नि र्वे ति त्या ह। द्या वा पृ थि व्यो र्वि धृ त्यै॥२॥ धि ष णा सि पा

श्रा·त·
२९

र्वतेयी प्रतित्वा पर्वृतिर्वेत्त्वित्याह। द्यावापृथिव्योर्धृत्यै। देवस्य त्वा स
वितुः प्रसव इत्याह प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि
देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। अधिवपामीत्या
ह। यथा देवतमेवैनानधिवपति। धान्यमसि धिनुहि देवानित्याह
। एतस्य यजुषो वीर्येण॥३॥ यावदेको देवताकामयते यावदेको।
तावदाहुतिः प्रथते। न हि तदस्ति। यत्तावदेव स्यात्। यावज्जुहो
ति। प्राणाय त्वापानाय त्वेत्याह। प्राणानेव यजमाने दधाति। दीर्घाम

त्रुघ्नसी॑ति मा युं॒षे धा॒मीत्यो॑ह । आ॒युरे॑वास्मिं॑ दधाति । अं॒तरि॑क्षादि॒वु
वा ए॒तानि॑ प्र॒स्कं॑दंति । यानि॑ हू॒ष्वर्दः । दे॒वो वः॑ सवि॒ता हिर॑ण्यपाणिः॒ प्र
ति॑ गृ॒भ्णा॒ति॒त्या॑ह॒ प्रति॑ष्ठित्यै । ह॒वि॒षो॑ स्कं॑दा॒य । अ॒सं॑वपंती पिं॑ष्ठा॒ण॒
नि॒ कु॒रु॒तादि॒त्यो॑ह मे॒ध्य॒त्वा॒य॑ ॥ ४ ॥ नि॒र्दां॑ यत॒ विधृ॑त्यै वी॒र्ये॑ण स्कं॑दंति
व्रु॒त्वा॒रिं॑ च ॥ ह ॥ धृ॒ष्टि॑रसि॒ ब्रह्म॑ य॒च्छेत्या॑ह॒ धृत्यै । अ॒पा॑ग्ने॒ अ॒ग्नि॑मा॒माद॑ज
हि॒ निष्क्र॒व्याद॑ꣳ सेधा दे॒व॒यजं॑ वहे॒त्या॑ह । य ए॒वा मा॒त्क्र॒व्यात् । तमे॒ प॒
ह॒त्य॑ । मे॒ध्ये॒ऽग्नौ क॒पा॒लमु॑प॒ दधाति । नि॒र्द॑ग्धꣳ रक्षो॒ निर्द॑ग्धा॒ अरा॑तयः

इत्याह । रक्षाꣳस्येव निर्दहति । अग्निं वसुपं दधाति । अस्मिन्नेव
लोके ज्योतिर्धत्ते । अंगारमधि वर्त्तयति ॥१॥ अंतरिक्ष एव ज्यो
तिर्धत्ते । आदित्यमेवामुष्मिँल्लोके ज्योतिर्द्धत्ते । ज्योतिष्मंतोस्मा
इमे लोका भवंति । य एवं वेद । ध्रुवमसि पृथिवीं दृꣳहेत्याह । पृ
थिवीमेवैतेन दृꣳहति । धर्त्रमस्यंतरिक्षं दृꣳहेत्याह । अंतरिक्ष
मेवैतेन दृꣳहति । धरुणमसि दिवं दृꣳहेत्याह । दिवमेवैतेन दृꣳ
हति ॥२॥ धर्मासि दिशो दृꣳहेत्याह । दिश एवैतेन दृꣳहति । इमा

न्वेवैतेल्लोकां दृँहति। दृँहंते स्माइमे लोकाः प्रजया पशुभिः। य
एवं वेद। त्रीण्यग्रे कपालान्युपदधाति। त्रयइमे लोकाः। एषां लोका
नामाप्त्यै। एकमग्रे कपालमुपदधाति। एकं वा अग्रे कपालं पुरु
षस्य संभवति॥३॥ अथ द्वे। अथ त्रीणि। अथ चत्वारि। अथाष्टौ।
तस्मादष्टाकपालं पुरुषस्य शिरः। यद्देवं कपालान्युपदधाति।
यतो वै प्रजापतिः। यत्तमेव प्रजापतिँ सँस्करोति। आत्मानमे
व तत्सँस्करोति। तँ सँस्कृतमात्मानं॥४॥ अमुष्मिंल्लोके नु

परैति। यद्दृष्ट्वा उपदधाति। गायत्रिया तत्संमितं। यन्न वै त्रिवृ
ता तत्। यद्द्वे। विराजा तत्। यदेकां द्वे। त्रिष्टुभा तत्। यच्चाद्वे
२॥५॥ जगत्या तत्। छंदः संमितानि सर्व पुरुधं कपालानि। इमां
लोकानर्नुपूर्वं दिशो विधृत्ये द्वेहति। अथायुः प्राणान्नजां प्रस्र
न्यजमाने दधाति। सजाता नस्मा अभितो बहुलान्करोति। चि
तस्थेत्याह। यथा यजुरेवैतत्। भृगूणामंगिरसां तपसा तप्य
ध्वमित्याह। देवतानामेवैनानि तपसा तपति। तानि ततः सं

स्थिते। यानि घर्मे कपालान्युपचिन्वन्ति वेधस इति चतुष्पदयर्चा
विमुंचति। चतुष्पादः पशवः। पशुभिरेवोपरिष्टात्ततिति ष्ठति।।
दृ।। वर्त्तयति दिवमेवैतेनदृँहति संभवति सरँस्कृतमात्मानं धारे
त्रा सरँस्थितेत्रीणि च।।७।। देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै
।अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पू
ष्णो हस्ताभ्यामित्याह यत्यै। संवपामीत्याह। यथा देवतमेवैनानि संवे
पति। समापो अद्भिरग्मत समोषधयो रसेनेत्याह। आपो वा ओष

धीर्जिन्वंति। ओषधयो पो जिन्वंति। अन्या वा एतासां मन्या जिन्वंति॥१॥ तस्मादेव माह। स᳖ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृजध्वमित्याह। आपो वै रेवतीः। पशवो जगती। ओषधयो मधुमतीः। आप ओषधीः पशून्। तानेवास्मा एकधा सᳫ सृज्य। मधुमतः करोति। अद्भ्यः परि प्रजाता स्थ समद्भिः पृच्यध्वमिति पर्यालावयति। यथा सुवृष्ट इमामनुविसृत्य॥२॥ आप ओषधीर्महयंति। ताहगेव ततत्। जनयत्यै त्वा संयौमीत्याह। प्रजा एवै तेन दाधा

र। अग्नये त्वाग्नीषोमाभ्यामित्याह व्याहृत्यै। मखस्य शिरोऽसीत्या

ह। यज्ञो वै मखः। तस्यैतच्छिरः। यत्पुरोडाशः। तस्मादेवमाह॥ २

॥ घर्मोऽसि विश्वायुरित्याह। विश्वमेवायुर्यजमाने दधाति। उरु प्रथस्वो

रु ते यज्ञपतिः प्रथतामित्याह। यजमानमेव प्रजया पशुभिः प्रथ

ति। त्वचं गृह्णीष्वेत्याह। सर्वमेवैन  सतनुं करोति। अद्भिः परिमाष्टि

परिमार्ष्टि। माँ स एव तत्त्वचं दधाति। तस्मात्त्वचा माँ संछन्नं। घर्मो

वा एषोऽशान्तः॥ ४॥ अर्धमासेऽर्धमासे प्रवृज्यते। यत्पुरोडाशः। स ई

1.त.
५२

म्पुरो यजमानꣳ स्रुचा प्रहरहः। पर्यग्निकरोति। पुरस्तद्यैवे नमकः। त्वां
त्वाअग्ने हरहाय। त्रिः पर्यग्निकरोति। त्र्यावृद्धि यज्ञः। अथो रक्षसामप
हत्यै। अन्तरितꣳ रक्षोन्तरिता अरातय इत्याह। ५। रक्षसामन्
तर्हित्यै। पुरोडाशं वा अधिश्रितꣳ रक्षाꣳस्यजिघाꣳसन्। दिवि ना
को नाम गीर् शोहा। स एवास्माद्रक्षाꣳस्यपाहन्। देवस्त्वा सविता
श्रपयत्वित्याह। सवितृप्रसूत एवैनꣳ श्रपयति। वर्षिष्ठे अधिना
क इत्याह। रक्षसामपहत्यै। अग्निस्ते तनुवं माति धागित्याहनेति

हाहाय। अग्नेर्हव्यꣳ रक्षस्वेत्याह गुप्त्यै॥६॥ अविर्हहंतः प्रयुतेति
वाचं विसृजते। यज्ञमेव हवीꣳष्यभिव्याहृत्य प्रतनुते। पुरोरुचम
विहाहा प्रस्तुत्यै करोति। मस्तिष्को वै पुरोडाशः। तं यन्नाभिवासये
त्। आविर्मस्तिष्कः स्यात्। अभिवासयति। तस्माद्गुहा मस्तिष्कः। भ
स्मनाभिवासयति। तस्मान्माꣳसेनास्थिच्छन्नं॥७॥ वेदेनाभिवा
सयति। तस्मात्केशैः शिरश्छन्नं। अखलतिभावुको भवति। य एवं वे
द। पुत्रो वै प्रतिमा पुरोडाशः। स नायजुष्कमभिवास्यः। हथेव स्यात्

१.त्र.
५४

।ईश्वरा यजमानस्य पशवः प्रमेतोः। संब्रह्मणाष्टच्युस्वेत्योह। ब्राह्मणा
वै ब्रह्म॥८॥ ब्राह्मणाः पशवः। ब्राह्मणैरेव पशुमत्संदधाति। न प्रमायुका
भवंति। यजमानो वै पुरोडाशः। प्रजा पशवः पुरीषं। यदेवमभिव्या
सयति। यजमानमेव प्रजया पशुभिः समर्धयति। देवा वै हविर्भूत्वा
अब्रुवन्। कस्मिन्निदं म्रक्ष्यामह इति। सोऽग्निरब्रवीत्॥९॥ मयि तन्वः
सन्निधध्वं। अहं वस्तं जनयिष्यामि। यस्मिन्म्रक्ष्यध्व इति। ते देवा अ
ग्नौ तन्वः सन्न्यदधत। तस्मादाहुः। अग्निः सर्वा देवता इति। सोऽगारे

ण्ण पः। अभ्यपातयत्। ततएकृतोजायत। सद्वितीयमभ्यपात
यत्॥१०॥ ततोद्वितोजायत। सतृतीयमभ्यपातयत्। ततस्त्रितो
जायत। यदद्भ्योजायंत। तदाप्यानामाप्यत्वं। यदात्मभ्योजायंत
। तदात्म्यानामात्म्यत्वं। तेदेवाआप्त्येषुमृजत। आप्त्याअमृजतसू
र्याभ्युदिते। सूर्याभ्युदितःसूर्याभिनिर्मुक्ते॥११॥ सूर्याभिनिर्मुक्त
ःकुनखिनि। कुनखीश्यावदति। श्यावदग्रदिधिषौ। अग्रदि
धिषुःपरिवित्ते। परिवित्तोवीरहणि। वीरहाब्रह्महणि। तद्ब्रह्मह

ब्रा·तृ·
४५

पुंमात्यंच्यवत। अंतर्वेदिनिनयत्यवरुध्यै। उल्मुकेनाभिगृह्णा
तिमृत्तत्वाय। शृतकामाइवहिदेवाः॥१२॥अन्याजिन्वंसन्तुविस
सैवमाहाग्नींतआहगुल्यैछत्त्वंब्रह्माब्रवीद्वितीयंमुभ्यंपातयुत्स्व
र्याभिनिमुक्तेदेवाः॥८॥देवस्यत्वासवितुःप्रसवइतिस्फ्यमाद
त्तेप्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौहिदेवानामध्वर्यु
आस्ताम्। पूष्णोहस्ताभ्यामित्याहयत्यै। आददइंद्रस्यबाहुरसिद
क्षिणइत्याह। इंद्रियमेवयजमानेदधाति। सहस्रभृष्टिःशतते

वा ज्ञा इत्याह । रूपमेवास्यै तन्महिमानं व्याचष्टे । वायुरसि तिग्मतेजा इ
त्याह । तेजो वै वायुः ॥ १ ॥ तेज एवास्मिन्दधाति । विषादे नामासुर
आसीत् । सो बिभेत् । यज्ञेन माइ वा अभिभविष्यंतीति । स पृथिवी
मभ्यवमीत् । सा मेध्याभवत् । अथो यदिंद्रो वृत्रमहन् । तस्य लोहि
तं पृथिवीमनुव्यधावत् । सा मेध्याभवत् । पृथिवि देवयजनीत्याह ॥
२ ॥ मेध्यामेवैनां देवयजनीं करोति । ओषध्यास्ते मूलं मा हिंसिषमि
त्याह । ओषधीनामहिंसायै । व्रजं गच्छ गोस्थानमित्याह । छंदांसि

श्रा॰ त॰
४६

वैव्रजोगोस्थानः।छंदाᳪंसिवाअस्मैव्रजंगोस्थानंकरोति।वर्षंत्वेतद्यौ
रित्याह।वृष्टिर्वैद्यौः।वृष्टिमेवावरुंधे।बुध्नहैवसवितःपरमस्यां
परावतीत्याह॥३॥कोवावपुरुषो।यंचैवद्वेष्टि।यश्चैनंद्वेष्टि।तावु
भौवध्नातिपरमस्यांपरावतिशतेनपाशैः।योस्मांद्वेष्टियंचवयंद्वि
ष्मस्तमतोमामौगिस्साहानिंमुंचते।अररुर्वैनामासुरआसीत्।स
पृथिव्यामुपंप्लुष्टोत्रायत।तंहैवाअपहतोररुःपृथिव्याइतिपृथि
व्याअपाघ्नन्।भ्रातृव्योवाअररुः।अपहतोररुःपृथिव्याइतियदा

४

हृ॥४॥भ्रातृव्यमेव त्रिष्टुभ्या अपहंति।ते मध्यं ता दिवं वा अयमितः
पतिष्ठतीति।तमुररुस्ते दिवं मास्कानिति दिवः पर्यबाधंत।भ्रातृ
व्यो वा अररुः।अररुस्ते दिवं मास्कानिति यदाह।भ्रातृव्यमेव दि
वः परिबाधते।स्रुवं यजुर्हरति।त्रिष्टुभ्या एव भ्रातृव्यमपहंति।द्वि
तीयं हरति॥५॥अंतरिक्षाद्देवैनमपहंति।तृतीयं हरति।दिव
एवैनमपहंति।तूष्णीं चतुर्थं हरति।अपरिमिताद्देवैनमपहंति
।असुराणां वा इयमग्र आसीत्।यावदासीनः परापश्यति।तावद्दे
वः

ब्रा॰ त॰
॥४७॥

वानां। ते ह देवा अब्रुवन्। अस्त्वेव नोऽस्यामपीति॥६॥ क्वं नो हास्य भे
ति। यावत्स्वयं परिगृह्णीयेति। ते वसवस्त्वेति दक्षिणतः पर्यगृह्ण
न्। रुद्रास्त्वेति पश्चात्। आदित्यास्त्वेत्युत्तरतः। तेऽग्निना प्राञ्चोऽजय
न्। वसुभिर्दक्षिणा। रुद्रैः प्रत्यञ्चः। आदित्यैरुदञ्चः। यस्यैवं विदुषो
वेदिं परिगृह्णन्ति॥७॥ भवत्यात्मना। परास्य भ्रातृव्यो भवति। देवस्य
सवितुः प्रसव इत्याह प्रसूत्यै। कर्मकृण्वन्ति वेधस इत्याह। इषितं हि
कर्म क्रियते। पृथिव्यै मेध्यं चामेध्यं च व्युदक्रामतां। प्राचीनमुदीची ॥४८

त्तं मेध्यं। प्रतीची नंदक्षिणा मेध्यं। प्राची मुदीचीं प्रवणां करोति। मे

ध्यांमेवैनां देवयजनीं करोति॥८॥ त्रींचीं वेद्युंऽसावुन्नयति। आ

हवनीयस्य परिगृहीत्यै। प्रतीची श्रोणी। गार्हपत्यस्य परिगृहीत्यै

। अघोमिष्युनुत्तायं। उद्धंति। यदेवास्यां अमेध्यं। तदपहंति। उद्धं

ति। तस्माद्दोषधयः पराभवंति॥९॥ मूलंछिनत्ति। भ्रातृव्यस्यैवमू

लंछिनत्ति। मूलंवा अतितिष्ठत्प्राऽंस्यन्तृतिपते। यद्दस्तेन छिं

द्यात्। कुनखिनीः प्रजाःस्युः। स्फ्येन छिनत्ति। वज्रोवै स्फ्यः। वज्रेणैव

पुत्ताद्रक्षाꣳस्यपहंति। पितृदेवत्यातिखाता। इयतीं खनति॥१०॥
प्रजापतिना यज्ञमुखेन संमितां। वेदिर्देवेभ्यो निलायत। तां च
तुरंगुलेन्वविंदन्। तस्माच्चतुरंगुलं खेयो। चतुरंगुलं खनति।
चतुरंगुले ह्योषधयः प्रतितिष्ठंति। आप्रतिष्ठायै खनति। यजमा
नमेव प्रतिष्ठां गमयति। दक्षिणतो वर्षीयसीं करोति॥ देवयज
नस्यैव रूपमकः॥११॥ पुरीषवतीं करोति॥ प्रजा वै पशवः पुरी
षं॥ प्रजयैवैनं पशुभिः पुरीषवंतं करोति॥ उत्तरं परिग्राहं परिग

ह्वाति॥ एतावती वै पृथिवी॥ यावती वेदिः॥ तस्या एतावंतमेव
भ्रातृव्यं निर्भजत्य्॥ आत्मन उत्तरं परिग्राहं परिगृण्हाति॥ ऋतम
स्यृतसदनमस्यृतश्रीरसीत्याह॥ यथा यजुरेवैतत्॥२॥ क्रूर
मिव वा एतत्करोति॥ यद्वेदिं करोति धा असि स्वधा असीति योयुप्य
ते शांत्यै॥ उर्वी चासि वस्वी चासीत्याह॥ उर्वीमेवैनां वस्वीं करो
ति॥ पुरा क्रूरस्य विसृपो विरप्शिन्नित्याह मेध्यत्वाय॥ उदादाय
पृथिवीं जीरदानुर्यामैरयंश्चंद्रमसि स्वधाभिरित्याह॥ यदेवास्या

ब्रा॰ त॰
४९

अमेध्यं॥ तद्दै प्रहृत्य मेध्यं देवयजनं कृत्वा॥१२॥ यद्वै दस्त्रुं ह
मस्मिमेध्यं। तद्वस्या मेरयति। तांधीरासोअनुदृश्य यजन्त इत्याहसं
ख्यात्यै। प्रोक्षणीरासादयति। इध्माबर्हिरुपसादयति। स्फ्यं च स्रुचश्च
संमृद्ध्यै। पत्नीं सन्नह्य। आज्येनोदेहीत्याहानुपूर्वतायै। प्रोक्षणी
रासादयति। आपो वै रक्षोघ्नीः॥१४॥ रक्षसामपहत्यै। स्फ्यस्य वर्त्मन्
त्सादयति। यज्ञस्य संतत्यै। उवाच ह असितो दैवलः। एतावतीर्वा
अमुष्मिंलोकआपआसन्। यावतीः प्रोक्षणीरिति। तस्माद्बह्वी

४८

रासाद्यः। स्फ्यमुद्दस्यन्। यं द्विष्यात्तं ध्यायेत्। शुचैवैनमर्पयति॥१५
॥वैवायुरहपुरावतीत्युहाहद्वितीयं हरतीतिपरिगृह्णंतिदिव
यजंनीकरोतिभवंतिखननत्यकरेतत्कृत्वारक्षोघ्नारर्पयति॥१६॥व
ज्रो वै स्फ्यः। यह्नवं चैं धारयेत्। वज्रैधुर्यैः क्षण्वीत। पुरस्तात्त्रिर्यं चं
धारयति। वज्रो वै स्फ्यः। वज्रेणैव युत्तस्य दक्षिणतो रक्षांऽस्यपहं
ति। अग्निर्भ्युं प्राचं स्ववृतीचं स्वा। स्फ्येनोदीचं स्वाधरां चं स्वा। स्फ्येन नु
वाएषवज्रेणास्ये पाप्मानं भ्रातृव्यमपहत्य। उत्करे धिप्रहरिष्यति॥१७॥

ब्रा॰ त॰
५०

यथोपधायॆव श्वस्त्येवं। हस्तावव नेनिक्ते। आत्मानमेव पवयते। स्रुचं
प्रक्षालयति मेध्यत्वाय। अथो पाप्मन एव भ्रातृव्यस्यान्तं गच्छिनत्ति। इ
ध्माबर्हिरुपसादयति युक्त्यै। प्रत्स्यमिथुनत्वाय। अथो पुरोरुच
मेवैतां दधाति। उत्तरस्य कर्मणोऽनुख्यात्यै। न पुरस्तात्प्रत्यगुपसा
दयेत्॥२॥ यत्पुरस्तात्प्रत्यगुपसादयेत्। अन्यत्राहुतिपथादिध्मं
प्रतिपादयेत्। प्रजा वै बर्हिः। अपराध्नुयाद्बर्हिषा प्रजानां प्रजन
नं। पश्चात्प्रागुपसादयति। आहुतिपथेनेध्मं प्रतिपादयति। सं

५

प्रत्यैव बर्हिषा प्रजननं प्रजननं समुपैति। दक्षिणमिध्मं उत्तरं बर्हिः
।आत्मा वा इध्मः। प्रजा बर्हिः। प्रजामात्मन उत्तरतरां धत्ते। ततो
मेधमुपनीय। यथादेवतमेवैनं स्वतिष्ठापयति। प्रतितिष्ठति प्र
जया पशुभिर्यजमानः॥१३॥ बृहस्पतिसादयेदिध्मः पंचच॥१०॥ तृ
तीयस्यां देवस्यां स्वपृष्ठे यो वै पूर्वेद्युः कर्मणे वामिंद्रो वृत्रमहन्सो
पोवधूतंधृष्टिर्देवस्येत्याह संवं पामिदेवस्य स्फ्य मादाइदेवज्ञो वेस्फ्यो
द्यता॥१०॥ तृतीयस्यां युक्तस्यानतिरेकाय पवित्रवत्यध्वर्युं चाधि

श्रा·त·
५१

षड्वेणमस्यंतरिक्षएवज्योतिर्धत्ते रक्षसामपहत्यै द्यौर्वा वपुष्कं
षोयदृहस्रुंदमसि मेध्यं पंचाशीतिः॥८५॥ ॥हरिः ॐ॥ प्रत्युष्ट
ꣳरक्षः प्रत्युष्टा अरातय इत्याह। रक्षसामपहत्यै। अग्नेर्वस्तेजिष्ठे
न तेजसा निष्टपामीत्याह मेध्यत्वाय। स्रुचः संमार्ष्टि। स्रुग्वा अग्ने।
पुमाꣳसमेवाभ्यः स्तꣳस्र्यति मिथुनत्वाय। अयं जुहूः। असावुपभृ
त्। अयं ध्रुवा। असौ वै जुहूः॥१॥ अन्तरिक्षमुपभृत्। पृथिवी ध्रु
वा। इमे वै लोकाः स्रुचः। वृष्टिः संमार्जनानि। वृष्टिर्वा इमांल्लोकान्

स्तुपूर्वकं स्यदति। ते ततः क्रुद्धाः समेधंते। समेधंते स्मा इमे लोकाः प्रज
योपशुभिः। य एवं वेद। यदि कामयेत वर्षुकः पर्जन्यः स्यादिति। अग्रत
ः संमृज्यात्॥२॥ वृष्टिमेवनियच्छति। अर्वाचीनां ह्याहि वृष्टिः। यदि
कामयेतावर्षुकस्यादिति। मूलतः संमृज्यात्। वृष्टिमेवोद्यच्छति। त
द्वा आहुः। अग्रत एवोपरिष्टात्संमृज्यात्। मूलतोधस्तात्। तद
नुपूर्वकल्पते। वर्षुको भवतीति॥३॥ प्राचीमभ्याकारं। अग्नेरंतर
तः। एवमिव ह्यन्नमद्यते। अपो अग्या वा ओषधीनां मूर्जं प्रजा उप

आ॰ त॰
५२

जीवंति। ऊर्ज एवान्नाद्यस्यावरुंधे। अधस्ताल्लूता चौ। हुंड सुत
प्रतः। मूलेन मूलं प्रतिष्ठित्यै। तस्मादरत्नौ प्रांचमुपरि[illegible]हस्तो माति
। प्रत्यंचमधस्तात्॥४॥ सुधेषा। प्राणो वै सुवः। तु हृदं हिंप्ताद
स्तः। उपस्थस्सर्वः। आत्मा ध्रुवा। अन्नं सं मार्जनानि। मुखतो वै
प्राणोपानो भूत्वा। आत्मानमन्नं प्रविन्दये। बाह्यतस्तत्सुवं सुभ
यति। तस्मात्सुवमेवाग्रे संमार्ष्टि। मुखतो हि प्राणोपानो भूत्वा।
आत्मानमन्नमाविशति। तौ प्राणापानो। अथ बंधुकः प्रापपाणाभ्यां

५

भवति। य एवं वेद॥५॥ जुहूर्मृज्याज्जवतीति प्रत्यंचमधस्तान्मार्ष्टि
पंचंच॥६॥ दिवः शिल्पमवततं। पृथिव्याः ककुभिः श्रितं। तेन व
यꣳ सहस्रवल्शेन। सपत्नं नाशयामसि स्वाहेति स्रुक्संमार्ज
नान्यग्नौ प्रहरति। आपो वै दर्भाः। रूपमेवैषामेतन्महिमानं व्या
चष्टे। अनुष्टुभर्चा। आनुष्टुभः प्रजापतिः। प्राजापत्यो वेदः। वे
दस्याग्रꣳ स्रुक्संमार्जनानि॥७॥ स्वेनैवैनानि छंदसा। स्वया दे
वतया समर्धयति। अथो ऋग्वा वयोषा। दर्भो वृषा। तन्मिथुनं।

ब्रा·त·
५३

मिथुनमेवास्यतद्वृत्तेकरोतिप्रजननाय।प्रजायतेप्रजयापशु
भिर्यजमानः।तान्येकेहृद्येवापास्यंति।तत्तथानकार्यं।आर्तिर्ह्य
स्ययत्तियस्यकर्मणःसविदोहः॥२॥यद्धैनानिपुरावाभितिष्ठे
युः।नतत्समभ्युःकं।अद्भिर्मार्जयित्वोत्करेन्यस्येत्।यद्वैयत्ति
यस्यकर्मणोन्यत्राहुतीभ्यःसंतिष्ठतेउत्करोवावतस्यप्रतिष्ठा
।एतांह्येतस्मैप्रतिष्ठांदेवाःसमभरन्।यदद्भिर्मार्जयति।तेन
शांतं।यदुत्करेन्यस्यति।प्रतिष्ठामेवैनानितद्गमयति॥३॥अथ

५

त्तिं तिष्ठति प्रजया पशुभिर्यजमानः। अथो स्तंबस्य वा एतद्रूपं
। यत्स्तुकः संमार्जनानि। स्तंबशो वा ओषधयः। तासां जरत्कुक्षे
पशवो न रमंते। अप्रियो ह्येषां जरत्कुक्षः। यावद्दप्रियो ह वै ज
रत्कुक्षः पशूनां। तावद्दप्रियः पशूनां भवति। यस्यैतान्यन्यत्रा
ग्नेर्दधति। नववृहाण्यांसु वा ओषधीषु पशवो रमंते॥ ४॥ नववृहा वो
ह्येषां प्रियः। यावत्प्रियो ह वै नववृहावः पशूनां। तावत्प्रियः पशू
नां भवति। यस्यैतान्यग्नौ प्रहरंति। तस्माद्वैतान्यग्नावेव प्रहरेत्।

ब्रा॰ त॰
५४

पुत्रं तरस्मिन्स्संमृज्यात । पुमृनां धृत्यै । यो भृतानामधिपतिः । रुद्रस्तंति चरो वृषा । पुमृनस्माकं माहिं सीः । एतहे स्थुहुतं तव स्वाहेत्यग्निसंमार्जनां न्युञ्जो पहरति । एषावा एतेषां योनिः । एषाप्रतिष्ठा । स्वामेवैनान्नियोनिं । स्वां प्रतिष्ठां गमयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः ॥ ५ ॥ बृहस्यां सकृत्संमार्जनानि विहोहोगमयति पुरा वोरमं तेहिं सीः षट्चं ॥ २ ॥ अयत्तो वा एषः । योपुत्री कः । न प्रजाः प्रजायेरन् । पत्न्यन्वोस्तं । युक्तमेवाकः । प्रजानां प्रजननाय । यत्तिष्ठंती

सन्नह्येत। स्त्रियं स्तातिं २ रुंध्यात्। आसीनाः संनह्यते। आसीनाह्ये
षा वीर्यं करोति॥१॥ यस्त्वश्वात्वाच्छन्वासीत। अनयासमदं हृधी
त। देवानां पत्निया सुमदं हृधीत। देवाग्नी दक्षिणतउदीच्यन्वास्ते।
आत्मनो गोपीथाय। आन्नासो नासौ मनुसमित्याह। मेध्यामेवै
नां केवलीकृत्वा। आशिषा समर्धयति। अग्नेरनुव्रता भूत्वा स
न्नह्ये सुकृताय कमित्याह। एतद्वै पत्निये व्रतोपनयनं॥२॥ ते
नैवैनां व्रतमुपनयति। तस्मादाहुः। यश्चैवं वेद यश्च न। योक्त्रे

मेव प्रोते। य मन्वास्ते। तस्यामुष्मिंलोके भवतीति योत्केण। प द्योत्क
।स योगः। पद्मास्ते।स क्षेमः ॥३॥ योगक्षेमस्य कृत्ये। युक्तं क्रियतां।आ
त्रीः कामेप्सुज्याताइति। आत्रिषुः समर्ध्ये। गृधिं ग्रभाति।आत्रिषे
एवास्यां परिगृह्णाति।पुमान्वै गृधिः। स्त्री पत्नी। तन्मिथुनं। मिथुन
मेवास्य तद्युत्तेकरोति प्रजननाय। प्रजायते प्रजया पशुभिर्यजे
मानः ॥४॥ अथो अर्धो वा एष आत्मनः। यस्पत्नी। यत्स्वस्य धृत्या अ
तिरिष्ठित्वं भावाय।सुप्रजसस्त्वा वयं सुपत्नीरुपसेदिमेत्याह।

युक्तमेव तन्मिथुनीकरोति। ऊनेतिरिक्तं धीयाता इति प्रजात्यै। मही
नां पयोस्योषधीनाᳪं रस इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे।
तस्य तेक्षीयमाणस्य निर्वपामि देवयज्याया इत्याह। आशिषमेवै
तामाशास्ते॥५॥ करोति व्रतो पुनर्यन्नं क्षेमो यजमानः शास्ते॥३॥ घृ
तं च वै मधु च प्रजापतिरासीत्। यतो मध्वासीत्। ततः प्रजा असृ
जत। तस्मान्मधुषि प्रजननमिवास्ति। तस्मान्मधुषा न प्रचरंति।
यातयामं हि। आज्येन प्रचरंति। यज्ञो वा आज्यं। यज्ञेनैव यज्ञं प्रच

ा.त.
५६

रं त्यया तथामत्वाय। पत्न्यवेक्षते॥१॥ मिथुनत्वाय प्रजात्यै। यद्वै प
त्नी यज्ञस्य करोति। मिथुनं तत्। अथो पत्निया एवैष यज्ञस्यान्वारं
भो नवच्छित्त्यै। अमेध्यं वा एतत्करोति। यत्पत्न्यवेक्षते। गार्हपत्येधि
श्रयति मेध्यत्वाय। आहवनीयमभ्युद्द्रवति। यज्ञस्य संतत्यै। तेजोऽसि
तेजोऽनुप्रेहीत्याह॥२॥ तेजो वा अग्निः। तेज आज्यं। तेजसैव तेजः
समर्धयति। अग्निस्ते तेजो मा विनैदित्याह। अहिंसायै। स्फ्यस्य व
र्त्मन्त्सादयति। यज्ञस्य संतत्यै। अग्नेर्जिह्वासि सुभूर्देवानामित्या

धान्मे

ह । य था य जु रे वै त त् । धा म्ने दे वे भ्यो य जुं षे य जु षे भ वे त्या ह । आ
शि षं मे वै ता मा शां स्ते ॥ ३ ॥ त द्वा अ तः प वि त्रा भ्या मे वो त्पु ना ति । य
जं मा नो वा आ ज्यं । प्रा णो दा नौ प वि त्रे । य ज मा न ए व प्रा णो दा नौ द धा
ति । पु न रा हा रं । ए व मि व हि प्रा णो दा नौ सं च र तः । शु क्र म सि ज्यो ति
र सि ते जो सी त्या ह । रू प मे वा स्यै त न्म हि मा नं व्या च ष्टे । त्रि र्य जु षा ।
त्र य इ मे लो काः ॥ ४ ॥ ए षां लो का ना मा प्त्यै । त्रिः । त्र्या वृ द्धि य ज्ञः । अ थो
मे ध्य त्वा य । अ था ज्य व ती भ्या मु पः । रू प मे वा स्मै त द्व र्णं द धा ति । अ

ब्रा·त·
५७

प्रिवावृत्ताकुः॥ यथाह वै योषा सुवर्णं हिरण्यं पेशलं बिभ्रती रू
पाण्यास्ते। एवमेता एतर्हीति। आपो वै सर्वा देवताः॥ ५॥ एषा हि वि
श्वेषां देवानां तनूः। यदाज्यं। तत्रोभयोर्मीमांसा। जामि स्यात्। य
द्यजुषाज्यं यजुषा पवेत्सु नो यात्। छंदसा पवेत्सुनात्यजामित्वाय

य

। अपो मिथुनत्वाय। सावित्र्यर्चा। सवितृप्रसूतं तमेकर्मासदिति। स
वितृप्रसूतमेवास्य कर्म भवति। पुच्छोगो यत्रियात्रि प्स मरुत्ता यु
। अङ्गिरे वौषधीः संनयति। ओषधीभिः प्रसूनैः। प्रसुभिर्यजमानं

। शुक्रं त्वा शुक्रायां ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वार्चिषी त्याह सर्वत्वाय
। पर्याप्त्या अनंतरायाय। ६॥ ईक्षत आहुत्या स्ते लोका देवता भव
ति षट्च ॥ ७॥ देवासुराः संयत्ता आसन्। स एतमिंद्र आज्यस्याव
काशमपश्यत्। तेनावैक्षत। ततो देवा अभवन्। परासुराः। य
एवं विद्वानाज्यमवेक्षते। भवत्यात्मना। परास्य भ्रातृव्यो भवति
। ब्रह्मवादिनो वदंति। यदाज्येनान्यानि हवीꣳष्यभिघारयति॥
१॥ अथ केनाज्यमिति। सत्येनेति ब्रूयात्। चक्षुर्वै सत्यं। सत्येनै

आ·त·
५८

वै नेदभिघारयति। ईश्वरो वा एषोंधो भवितोः। यश्चक्षुषाज्यमवेक्षते। निमील्यावेक्षित। ह्याधारात्मं च क्षुः। अभ्याज्यं घारयति। आज्यं गृह्णाति॥२॥ छंदांसि वा आज्यं। छंदांस्येव प्रीणाति। चतुर्जुह्वां गृह्णाति। चतुष्पादः पशवः। पशूनेवावरुंधे। अष्टावुपभृति। अष्टाक्षरा गायत्री। गायत्रः प्राणः। प्राणमेव पशुषु दधाति। चतुर्ध्रुवायां॥३॥ चतुष्पादः पशवः। पशुष्वेवोपरिष्टात्प्रतितिष्ठति। यजमानदेवत्यां वै जुहूः। भ्रातृव्यदेवत्योपभृत्। चतुर्जुह्वां गृह्णन्भूयो गृह्णी

५१

यात। अष्टावुप्रभृति गृह्णन्कनीयः। यजमानायैव भ्रातृव्यमुपस्तिं करोति। गो वै स्रुचः। चतुर्जुह्वां गृह्णाति। तस्माच्चतुष्पदी। ४। अष्टावुप्रभृति। तस्माद्दृष्टारी फा। चतुर्ध्रुवायां। तस्माच्चतुस्तना। गामेव तत्संस्करोति। सास्मै संस्कृतेष मूर्जं दुहे। यज्जुह्वां गृह्णाति। प्रयाजेभ्यस्तत्। यदुप्रभृति। प्रयाजानुयाजेभ्यस्तत्। सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यं। ५। अभिघारयति गृह्णाति ध्रुवायां चतुष्पदी प्रयाजानुयाजेभ्यस्तद्वै च। ५। आपो हि वीरग्ने

आ. त.
५९

प्रवोऽग्नेगुवइत्याह। रूपमेवासामेतन्महिमानंव्याचष्टे। अग्नेइमं
यज्ञंनंयज्ञाग्नेयज्ञपतिमित्याह। अग्नएवयज्ञंनयंति। अग्नेयज्ञपं
ति। सुष्मानिंद्रोवृणीतसंत्रत्रतूर्येषुयमिंद्रमवृणीध्वंवृत्रतूर्यइत्याह।
वृत्रंह्येहहनिष्यंनिंद्रआपोववृत्रे। आपोहेदंववृिरे। संज्ञामेवासामे
तत्सामांनंव्याचष्टे। प्रेतोऽक्षितासत्याह॥१॥ तेनापुःप्रोक्षिताः। अग्नि
र्दैवेभ्योनिलायत। कृष्णोरूपंकृत्वा। सवनस्पतीन्प्राविशत्। कृष्णो
स्याखरेष्ठोऽग्नयेत्वास्वाहेत्याह। अग्नयएवैनंजुष्टंकरोति। आऽथो

अग्नेरेव मेधमवरुंधे। वेदिरसि बर्हिषे त्वा स्वाहेत्याह। प्रजा वै
बर्हिः। पृथिवी वेदिः॥२॥ प्रजा एव पृथिव्यां प्रतिष्ठापयति। बर्हि
रसि स्रुग्भ्यस्त्वा स्वाहेत्याह। प्रजा वै बर्हिः। यजमानः स्रुचः। यज
मान एव प्रजासु प्रतिष्ठापयति। दिवे त्वांतरिक्षाय त्वा पृथिव्यै
त्वेति बर्हिरासाद्य प्रोक्षति। एभ्य एवैनल्लोकेभ्यः प्रोक्षति। अथ
ततः सह स्रुचा पुरस्तात्प्रत्यंचं ग्रंथिं प्रत्युक्षति। प्रजा वै बर्हिः। य
था सूत्यै काल आपः पुरस्ताद्यंति॥३॥ तादृगेव तत्। स्वधा पितृभ्य

श्रा. त्र.
६०

इत्याह। स्वधाकारो हि पितॄणां। ऊर्गेव बर्हिषद्भ्य इति दक्षिणायै
श्रोणेरोत्तरस्यै निनयति संतत्यै। मासा वै पितरो बर्हिषदः। मा
सानेव प्रीणाति। मासा वा ओषधीर्वर्धयन्ति। मासाः पचन्ति समृ
द्ध्यै। अनतिस्कंदन्न् पर्जन्यो वर्षति। यत्रैतदेवं क्रियते। धाः। ऊर्जं
पृथिवीं गच्छतेत्याह। पृथिव्यामेवोर्जं दधाति। तस्मात्पृथिव्या ऊ
र्जं भुंजते। ग्रंथिं विस्रंसयति। प्रजनयत्येव तत्। ऊर्ध्वं प्राञ्चमु
सुदूहं प्रत्संचमायच्छति। तस्मात्प्राचीनं रेतो धीयते। प्रतीचीः



६

प्रजा जायंते। विष्णोस्तूपोसीत्याह। यज्ञो वै विष्णुः॥५॥ यज्ञस्य धृत्यै। पुरस्तात्प्रस्तरं गृह्णाति। मुख्यमेवैनं करोति। इयंतं गृह्णा ति। प्रजापतिना यज्ञमुखेन संमितं। इयंतं गृह्णाति। यज्ञपुरुषा संमितं। इयंतं गृह्णाति। एतावद्वै पुरुषे वीर्यं। वीर्यसंमितं॥६॥ अ परिमितं गृह्णाति। अपरिमितस्यावरुध्यै। तस्मिन्पवित्रे अपिसृ जति। यजमानो वै प्रस्तरः। प्राणापानौ पवित्रे। यजमान एव प्रा णापानौ दधाति। ऊर्णाम्रदसं त्वा स्तृणामीत्याह। यथा यजुरेवै

ब्रा. तृ.
६१

ततः । स्वासस्थं देवेभ्य इत्याह । देवेभ्य एवैनत्स्वासस्थं करोति ॥७
॥ बर्हिः स्तृणाति । प्रजा वै बर्हिः । पृथिवी वेदिः । प्रजा एव पृथिव्यां
प्रतिष्ठापयति । अनतिदृश्नं स्तृणाति । प्रजयैवैनं पशुभिरनति
दृश्नं करोति । धारयन्प्रस्तरं परिधीन्परिदधाति । यजमानो वै प्रस्त
रः । यजमान एव तत्स्वयं परिधीन्परिदधाति । गंधर्वोसि विश्वावसु
रित्याह ॥८॥ विश्वमेवायुर्यजमाने दधाति । इंद्रस्य बाहुरसि दक्षि
ण इत्याह । इंद्रियमेव यजमाने दधाति । मित्रावरुणौ त्वोत्तरतः प

६

रिं धत्तामित्याह । प्राणापानौ मित्रावरुणौ । प्राणापानावेवास्मिन्दधा
ति । सूर्यस्त्वा पुरस्तात्पात्वित्याह । रक्षसामपहत्यै । कस्याश्चिदभि
शस्त्या इत्याह । अपरिमितादेवैनं पाति ॥ ६ ॥ वीतिहोत्रं त्वा कव
इत्याह । अग्निमेव होत्रेण समर्धयति । द्युमन्तꣳ समिधीमहीत्याह
समिध्यै । अग्ने बृहन्तमध्वर इत्याह वृध्यै । विशो यन्त्रे स्थ इत्याह । वि
शां यत्यै । उदीचीनाग्रे निदधाति प्रतिष्ठित्यै । वसूनाꣳ रुद्राणामा
दित्यानाꣳ सदसि सीदेत्याह । देवतानामेव सदने प्रस्तरꣳ साद

यति। जुहूरसि घृताचीनाम्नेत्याह॥१०॥ असौ वै जुहूः। अंतरि
क्षमुपभृत्। पृथिवी ध्रुवा। तासामेतदेव प्रियं नाम। यद्घृताची
ति। यद्घृताचीत्याह। प्रियेणैवैना नाम्नासादयति। एता असद
न्सुकृतस्य लोक इत्याह। सत्यं वै सुकृतस्य लोकः॥ सत्य एवैनाः
सुकृतस्य लोके सादयति। ताविष्णो पाहीत्याह। यज्ञो वै विष्णुः॥ य
ज्ञस्य धृत्यै। पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियमित्याह। य
ज्ञाय यजमानायात्मने। तेभ्य एवाशिषमाशास्तेनार्त्यै॥११॥ स्ये

त्योऽह इ पृथिवी वेदिर्यतिक्रियते विष्णुर्वै यज्ञः संमितं करोत्याह पाति
मा मेत्याह लोके सोऽह यत्तिषट् च ॥ ६ ॥ अग्निना वै होत्रा । देवा असु
रानभ्यभवन् । अग्नये समिध्यमानायानुब्रूही त्याह भ्रातृव्याभि
भूत्यै । एकविंशतिमिध्महारूणि भवंति । एकविंशो वै पुरुषः
। पुरुषस्याप्त्यै । पंचदशेध्महारूण्यभ्यादधाति । पंचदश वा अर्धमा
सस्य रात्रयः । अर्धमासशः संवत्सर आप्यते । त्रीन्परिधीन्परिदधा
ति ॥ १ ॥ ऊर्ध्वे समिधावादधाति । अनूयाजेभ्यः समिधमतिशिनष्टि ।

ब्रा॰ त्रः
६३

षट्संपद्यंते। षड्वा ऋतवः। ऋतूनेव प्रीणाति। द्विर्हि नोपवाज

यति। प्राजापत्यो वै वेदः। प्राजापत्यः प्राणः। यजमान आहवनीयं

॥ यजमान एव प्राणं दधाति॥ ॥ त्रिरुपवाजयति। त्रयो वै प्राणाः

॥ प्राणानेवास्मिन्दधाति। वेदेनोपयत्य स्रुवेण प्राजापत्यमाघा

रमाघारयति। यज्ञो वै प्रजापतिः। यज्ञमेव प्रजापतिं मुखत आ

रभते। अथो प्रजापतिः सर्वा देवताः। सर्वा एव देवताः प्रीणाति

। अग्निमग्नी त्रिस्त्रिः संमृड्ढीत्याह। त्र्यावृद्धि यज्ञः॥ ॥ अथो रक्षसाम

सं

पंहत्यै। परिधीन्त्संमार्ष्टि। पुनात्येवैनान्। त्रिस्त्रिःसंमार्ष्टि। त्र्यावृद्धियु
ज्ञः। अथोमेध्यत्वाय। अथोएतेवैदेवाश्वाः। देवाश्वानेवतत्संमार्ष्टि।
सुवर्गस्यलोकस्यसमष्ट्यै। आसीनोन्यमाघारमाघारयति।।४।।
तिष्ठन्नन्यं। यथानोवाहंवायुंज्यात्। एवमेवतदध्वर्युर्यज्ञंयुन
क्ति। सुवर्गस्यलोकस्याभ्यूढ्यै। वहन्त्येनंग्राम्याःपशवः। यएवंवेद
। भुवनमसिविप्रथस्वेत्याह। यज्ञोवैभुवनं। यज्ञएवयजमानंप्र
जयापशुभिःप्रथयति। अग्नेयष्टरिदंनमइत्याह।।५।।अग्निर्वैदेवा

ब्रा॰ तृ॰
६४

नां यशो। य एवं देवानां यशः। तस्मा एवं नमस्करोति। जुहेतु निरुक्तो कयति देवयज्याया उपह्वे हि देवस्तां सविताकयति देवयज्यायाइत्याह। आग्नेयी वै जुहूः। सावित्र्युपभृत्। ताभ्यामेवैनेन्द्रसंत्रआदत्ते। अग्नाविष्णू मा वामवक्रमिषमित्याह। अग्निः पुरस्तात्। विष्णुर्यज्ञः पश्चात्॥ ६॥ ताभ्यामेव प्रतिप्रोच्यात्याक्रामति। विजिहाथां मा मा संताप्तमित्याहाहिंसायै। लोकं मे लोककृतौ कृणुतमित्याह। आशिषमेवैतामाशास्ते। विष्णोः स्थानमसीत्याह। य

६

सो वै विष्णुः । एतत्खलु वै देवानामपराजितमायतनं । यद्यज्ञः । दे
वानामेवापराजित आयतने तिष्ठति । इत इंद्रो अकृणोद्वीर्याणी
त्याह ॥ ७ ॥ इंद्रियमेव यजमाने दधाति । समारभ्योर्ध्वो अध्वरो दि
विस्पृशामित्याह वृध्यै । आघारमाघार्यमाणमनुसमारभ्य । एत
स्मिन्काले देवाः सुवर्गं लोकमायन् । साक्षादेव यजमानः सुवर्गं
लोकमेति । अथो समृद्धेनैव यज्ञेन यजमानः सुवर्गं लोकमेति ।
अह्रुतो यज्ञो यज्ञपतेरित्याहानार्त्यै । इंद्रावान्स्वाहेत्याह । इंद्रिय

ब्रा॰त॰
६५

मेव यजमाने दधाति। बृहज्ञा इत्याह॥८॥ सुवर्गो वै लोको बृहज्ञाः। सुवर्गस्य लोकस्य समष्ट्यै। यजमान दे वत्यं वै जुहूः। भ्रातृव्य दे वत्योपभृत्। प्राण आघारः। यत्सꣳस्पर्शयेत्। भ्रातृव्ये ऽस्य प्राणं दध्यात्। असꣳस्पर्शयन्नत्याक्रामति। यजमान एव प्राणं दधाति। पाहि माग्ने दुश्चरितादा मा सुचरिते भजेत्याह॥९॥ अग्निर्वाव पवित्रम्। वृजिनमनृतं दुश्चरितम्। ऋजुकर्मꣳ सत्यꣳ सुचरितम्। अग्निरेवैनं वृजिनादनृताद्दुश्चरितात्पाति। ऋजुकर्मे सत्ये सु

चरिते भजति। तस्मादेवमासीत। आत्मनो गोपीथाय। शिरो वा
एतद्यज्ञस्य। यदाघारः। आत्मा ध्रुवा॥१०॥ आघारमाघार्य ध्रुवा
ं समनक्ति। आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति। द्विः समनक्ति
। द्वौ हि प्राणापानौ। तदाहुः। त्रिरेव समञ्ज्यात्। त्रिधातु हि शिर इ
ति। शिर इवैतद्यज्ञस्य। अथो त्रयो वै प्राणाः। प्राणानेवास्मिन्दधा
ति। मखस्य शिरोसि संज्योतिषा ज्योतिरंक्तामित्याह। ज्योतिरेवा
स्मा उपरिष्टाद्दधाति। सुवर्गस्य लोकस्यानुख्यात्यै॥११॥ परिदधा

तिप्राणंदधातिद्वियुक्तोधारयत्तिनमुइत्योहप्रस्माद्वीर्याणीत्योहभा
इत्योहभजेत्योहक्कवैवास्मिंदधातित्रीणिच॥७॥धिष्ण्यावाएते
स्तुप्यंते।यद्भुत्वा।यद्धोता।यदध्वर्युः।यदग्नीत्।यद्यजमानः।तान्यदं
तरेयात्।यजमानस्यप्राणान्त्संकर्षेत्प्रमायुकःस्यात्।पुरोडाशं
मप्रगृह्यसंचरत्यध्वर्युः॥१॥यजमानायैवतल्लोकंशिंषति।ना
स्यप्राणान्त्संकर्षति।नप्रमायुकोभवति।पुरस्तात्प्रत्यङ्ङासीनःइ
डोयाइडामादधाति।हस्ताꣳहोत्रे।पन्नावोवाइडो।पन्नावःपुरुषः। ६।

पशुष्वेव पशून्प्रतिष्ठापयति । इडायै वा एषा प्रजातिः ॥ ३ ॥ तां प्रजा
तिं यजमानोनुप्रजायते । द्विरंगुलौ वनक्ति पर्वणोः । द्विपाद्यजमा
नः प्रतिष्ठित्यै । सकृदुपस्तृणाति । द्विरादधाति । सकृदभिघारयति
। चतुः संपद्यते । चत्वारि वै पशोः प्रतिष्ठानानि । यावानेव पशुः । तमु
पह्वयते ॥ ४ ॥ मुखमिव प्रत्युपह्वयेत । संमुखानेव पशूनुपह्वय
ते । पशवो वा इडा । तस्मात्साक्षात्प्राश्यो । अध्वर्युणा च यजमानेन च
ऽउपहूतः पशुमानसानीत्याह । ऽउपहूतं ह्येनं कर्षयंते होता । इडायै हव

।·त्र·
६७

तो नामुपह्वे। उपहूतः पशुमान्भवति। य एवं वेद॥४॥ यां वै हस्तामि
डामादधाति। वाचः सा भागधेयं। यामुपह्वयते। प्राणानाꣳ सा। वाचं
चैव प्राणाꣳश्चावरुंधे। अथ वा एतर्ह्युपहूतायामिडायां। पुरोडाश
स्यैव बर्हिषदो मीमाꣳसा। यजमानं देवा अब्रुवन्। हविर्नो निर्वपेति
। नाहमभागो निर्वप्स्यामीत्यब्रवीत्॥५॥ न मयाऽभागयानुवक्ष्यथे
ति वागब्रवीत्। नाहमभागा पुरोनुवाक्या भविष्यामीति पुरोनुवा
क्या। नाहमभागा याज्या भविष्यामीति याज्या। न मयाऽभागेन वषट्करि

ष्व्ये॒ति व॑षट्का॒रः । यद्यज॑मानभा॒गं नि॑धा॒य पु॑रो॒डा॒शं ब॑र्हि॒ष॒दं कु॒
रो॒ति । ता॒नेव तद्भा॒गिनः करोति । चतुर्धा करोति । चत॒स्रो॒ दि॑शः । दि॒
क्ष्वे॒व प्रति॑तिष्ठति । ब॒र्हि॒ष॒दं क॑रोति ॥ ६ ॥ यज॑मानो॒ वै पु॑रो॒डा॒शः
। प्र॒जा ब॒र्हिः । यज॑मानमे॒व प्र॒जासु॒ प्रति॑ष्ठापयति । तस्मा॑द्दृ॒त्स्माद॒न्याः
प्र॒जाः प्रति॑तिष्ठन्ति । मांसेना॒न्याः । अथो॒ खल्वा॑हुः । दक्षि॑णा॒ वा ए॒ता
ह॒विर्य॒ज्ञस्या॑न्त॒र्वेद्य॒व॑रुध्यन्ते । यत्पु॑रो॒डा॒शं ब॑र्हि॒ष॒दं कु॑रो॒तीति । चतु॒
र्धा क॑रोति । च॒त्वारो॒ हि ते ह॒विर्य॒ज्ञस्य॒र्त्विजः ॥ ७ ॥ ब्र॒ह्मा होता॑ध्व

पुरग्नीतात्तमभिमृशेत ॥ इदं ब्रह्मणः ॥ इदं होतुः ॥ इदमध्वर्योः ॥ इ
दमग्नीध इति ॥ यद्येवादः सोमेध्वरे ॥ आदेशमृत्विग्भ्यो दक्षिणानी
यन्ते ॥ तादृशेवतत् ॥ अग्नीधे प्रथमायादधाति ॥१८॥ अग्निमुखाह्य
र्द्धिः ॥ अग्निमुखामेवर्द्धिं यजमानकृष्णोति ॥ स यदुपस्तीर्य द्विरा
दधत् ॥ उपस्तीर्य द्विरभिघारयति ॥ षट्संपद्यन्ते ॥ षड्वा ऋतवः ॥ ऋ
तूनेवप्रीणाति ॥ वेदेन ब्रह्मणे ब्रह्मभागं परिहरति ॥ प्राजापत्यो
वै वेदः ॥ प्राजापत्यो ब्रह्मा ॥१९॥ सविता यत्तस्य प्रसवे तस्मै अभ्यकाम

१८

मन्येन। ततो होत्रे। मध्यं वा एतद्यज्ञस्य यद्धोता। मध्यत एव यज्ञं
प्रीणाति। अथाध्वर्यवे। प्रतिष्ठा वा एषा यज्ञस्य यदध्वर्युः। तस्मा
द्धविर्यज्ञस्यैतामेवावृतमनु ॥१०॥ अन्वाहृक्षिणा नीयते। यज्ञस्य
प्रतिष्ठित्यै। अग्निमग्नीत्सकृत्सकृत्संमृड्ढीत्याह। पराङ्‌ि: वृधे त
र्हि यज्ञः। इषिता दैव्या होतार इत्याह। इषितं हि कर्म क्रियते। भ
द्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीत्याह। आशि
षमेवैतामाशास्ते। स्वगा दैव्या होतृभ्य इत्याह। यज्ञमेव तत्स्वगा

तृ० ९

करोति। स्वस्तिमतॄनुषेयुइत्याह। आशिषमेवैतामाशास्ते। स्वांयोनिं

हीत्याह। स्वामुमेवबर्हिस्सत्वंभागधेयेनुसमर्धयति॥११॥ चर त्य

ध्वर्युः प्रजातिर्कयते वेदेनब्रवीबर्हिषदंकरोत्य त्विजांदधाति कृत्वा

नुकरोतिचत्वारिच॥७॥ अपुस्करौवनुदुग्ध्यांवाजवतीभ्यां व्यूहति

ति। प्रतिष्ठानाअनुद्रुक्। अन्नंवाजः प्रतिष्ठित्यै। अन्नाद्यस्यावरुध्यै

धै। प्राचींजुहूमूहति। जातानेवभ्रातृव्यान्प्रणुदते। प्रतीचीमु

पभृतं। जनिष्यमाणानेवप्रतिनुदते। सविषूचएवापोह्यसपत्ना

६९

न्यजमानः। अस्मिंल्लोके प्रतितिष्ठति॥१॥ ताभ्यां द्विप्रतिष्ठिहि। वसु
भ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्याह। यथा यजुरेवैतत्। स्रुक्षु
प्रस्तरमनक्ति। इमे वै लोकाः स्रुचः। यजमानः प्रस्तरः। यजमान
मेव तेजसानक्ति। त्रेधानक्ति। त्रय इमे लोकाः॥२॥ एभ्य एवैनं लो
केभ्योऽनक्ति। अभिपूर्वमनक्ति। अभिपूर्वमेव यजमानं तेजसा
नक्ति। अक्तꣳ रिहाणा इत्याह। तेजो वा आज्यम्। यजमानः प्रस्तरः
। यजमानमेव तेजसानक्ति। वियन्तु वय इत्याह। वय एवैनं कृत्वा

र्टः
१०

।सुवर्गंलोकंगमयति॥३॥ब्रजांयोनिंमानिर्मृक्षमित्याह।ब्रजायैगो
पीथाय।आप्यायंतामापओषधयइत्याह।आपएवौषधीराप्यायय
ति।मरुतांपृषतयस्थेत्याह।मरुतोवैवृष्ट्याईशते।वृष्टिमेवावरुंधे
।दिवंगच्छततोनोवृष्टिमेरयेत्याह।वृष्टिर्वैद्यौः।वृष्टिमेवावरुंधे॥४
॥यावद्वाअध्वर्युःप्रस्तरंप्रहरति।तावदस्यायुर्मीयते।आयुष्पा
अग्नेस्यायुर्मेपाहीत्याह।आयुरेवात्मंधत्ते।यावद्वाअध्वर्युःप्रस्त
रंप्रहरति।तावदस्यचक्षुर्मीयते।चक्षुष्पाअग्नेसिचक्षुर्मेपाही

७०

त्याह। चक्षुरेवास्मिंधत्ते। धुवासीत्याह प्रतिष्ठित्यै। यं परिधिं पर्य धत्था इत्याह॥५॥ यथा यजुरेवैतत्। अग्ने देव पणिभिर्वीय माण इत्याह। अन्नयंएवैनं जुष्टं करोति। तं तएतमनुजोषंभरामीत्या ह। सजातानेवास्मा अनुकान्करोति। नेदेषत्वदपचेतयाता इत्या हानुख्यात्यै। यज्ञस्य पाथउप समितमित्याह। भूमानमेवो पैति। परिधीन्प्रहरति। यज्ञस्य समिष्ट्यै॥६॥ स्रुक्चौ संस्त्रावयति। य देवतत्रं क्रूरं। तत्तेन शमयति। जुकामुपभृत। यजमानदेवत्यावै

तै.
८१

जुहुः। भ्रातृव्यदेवत्यो पभृत्। यजमानायैव भ्रातृव्यमुपस्तिं करो
ति। सꣳस्राव भागा स्स्थेत्याह। वसवो वै रुद्रा आदित्याः सꣳस्राव भा
गाः। तेषां तन्नामधेयं॥७॥ तानेव तेन प्रीणाति। वैश्वदेव्यर्चा। ए
ते हि विश्वेदेवाः। त्रिष्टुग्भवति। इन्द्रियं वै त्रिष्टुक्। इन्द्रियमेव यज
माने दधाति। अग्ने वाममपन्नगृहस्य सदसि सादयामीत्याह। इयं
वा अग्निरपन्नगृहः। अस्या एवैनꣳ सदने सादयति। सुम्नाय सुम्नि
नी सुम्ने मा धत्तमित्याह॥८॥ प्रजा वै पशवः सुम्नम्। प्रजामेव पशू

८१

६५४

मात्मं धत्ते। ध्रुरिध्रुर्यो पातमित्याह। जायापत्यो र्गौपीथाय। अग्ने ह
व्याधीरी ततनोइत्याह। यथायजुरेवैतत्। पाहि माद्यद्विवः पाहि
प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादित्याह। आ
शिषमेवैतामाशास्ते। अविषन्नः पितुं कृणु सुषद्वा योनिं स्वाहेती
ध्मसंवश्चनान्यन्वाहार्यपचने भ्याधाय फलीकरणहोमं जुहोति।
अतिरिक्तानि वा इध्मसंवश्चनानि। ॥ अतिरिक्ताः फलीकरणाः।
अतिरिक्तमाज्योच्छेषणं। अतिरिक्त एवातिरिक्तं दधाति। अथो अ

तै·
७२

तिरिक्षेत्रैवातिरिक्तमाप्त्वावरुंधे। वेदिर्देवेभ्यो निलायत। तांवेदेनान्व
विंदन्। वेदेनवेदिंविविदुःपृथिवीं। सापप्रथेपृथिवीपार्थिवानि। ग
र्भंबिभर्तिभुवनेष्वंतः। ततोयज्ञोजायतेविश्वदानिरितिपुरस्तात्स्तं
बयजुषोवेदेनवेदिंसंमार्ष्ट्यनुवित्त्यै॥१०॥अथोयद्वेदश्चवेदिश्च
भवतः। मिथुनत्वायप्रजात्यै। प्रजापतेर्वाएतानिश्मश्रूणि। यद्वे
दः। पत्न्याउपस्थआस्यति। मिथुनमेवकरोति। विंदतेप्रजां।
वेदंहोतावनीयात्तृणंनेति। यज्ञमेवतत्संतनोत्योत्तरस्माद्

है

र्द्धमासात्। तꣳ संतत्रमुत्तरेऽर्द्धमास आलभते॥११॥ तं कालेको
लु आगते यजते। ब्रह्मवादिनो वदंति। स त्वा अध्वर्युः स्यात्। यो
यतो यज्ञं प्रयुङ्क्ते। तदेनं प्रतिष्ठापयतीति। वाता वा अध्वर्युर्यज्ञं
प्रयुङ्क्ते। देवा गातुविदो गातुं वित्त्वा गातुमितेत्याह। यत एव यज्ञं
प्रयुङ्क्ते। तदेनं प्रतिष्ठापयति। प्रतितिष्ठति प्रजया पशुभिर्यज
मानः॥१२॥ तिष्ठतीमे लोका गमयति द्योर्वृष्टिमेवावरुंधे पर्यधत्था
इत्याह समिष्टे भागधेयं धत्तमित्याह वाई धासं वस्वनान्यनुवित्ते

लभते यजमानः॥ ९॥ योवाअयथादेवतं यज्ञमुपचरति। आदेवताभ्यो वृश्च्यते। पापीयान्भवति। योयथादेवतं। नदेवताभ्यआवृश्च्यते। वसीयान्भवति। वारुणो वै पाशः। इमं विष्यामि वरुणस्य पाशमित्याह। वरुणपाशादेवैनं मुंचति। सवितृप्रसूतो यथादेवतं॥ १०॥ न देवताभ्यआवृश्च्यते। वसीयान्भवति। धातुश्च योनौ सुकृतस्य लोक इत्याह। अग्निर्वै धाता। पुण्यं कर्म सुकृतस्य लोकः। अग्निरेवैनं धाता। पुण्ये कर्मणि सुकृतस्य लोके दधा

७२

ति। स्योनं मे सह पत्या करोमीत्याह। आत्मनश्च यजमानस्य चा
नार्त्यै संत्वाय। समायुषा संप्रजयेत्याह। २॥ आशिषमेवैतामा
शास्ते पूर्णपात्रे। अंततोनुष्टुभा। चतुष्पदा एतछंदः प्रतिष्ठि
तं पत्निये पूर्णपात्रे भवति। अस्मिंल्लोके प्रतितिष्ठानीति। अस्मि
न्नेव लोके प्रतितिष्ठति। अपो वाग्वा अनुष्टुक्। वाङ्मिथुनं। आ
पोरेतः प्रजननं। एतस्माद्वै मिथुनाद्विद्योतमानस्तनयन्वर्ष
तिरेतः सिंचन्॥ ३॥ प्रजाः प्रजनयन्। यद्वै यज्ञस्य ब्रह्मणा यु

ज्यते। ब्रह्मणैवैतस्य विमोकः। अद्भिः शान्तिः। विमुक्तं वा एतर्हि यो
क्त्रं ब्रह्मणा। आहायैनुसत्नीसहापउपंम स्त्री तेरांस्यो। अंजली
पूर्णपात्रमानयति। रेत एवास्यां प्रजां दधाति। प्रजया हि मनुष्यः
पूर्णः। मुखं विमृष्टे। अवभृथस्यैव रूपं कृत्वोत्तिष्ठति॥४॥ सवित्
प्रसूतो यथा देवतं प्रजयेत्याह सिंचन्नग्र एकं चा॥१०॥ परिवेषो
वा एष वनस्पतीनां। यदुपवेषः। य एवं वेद। विंदते परिवेष्टारं। त
मुत्करे। यं द्वेषा मनुष्येषु। उपवेषमधारयन्। ये अस्मद् पचेतस

॥ तान्न समभ्यर्च मित्रा कुरु। उ पवेषो पविहिनः॥१॥ ब्रुजां पुष्टिम थो
ध नं। द्वि पहौ नृश्वतुष्मदः। धृकुवान नं पगात्कुर्विति पुरस्तात्त्वत्वं
चमुपं गूहति। तस्मात्सुरस्तात्त्वत्वं चंः शूद्रो अवर्स्यति। स्तम्भिम
त उपं गूहति। अप्रति वादिन्नूएवेना कुरुते। धृष्टिर्वा उपवेषः।
मुचर्तो वृज्ञो ब्रह्मणा संशितः। यो पवेषे सुकू। सामु मन्त्र तुयं
द्विष्म इति॥२॥ अ घांसि मेना मृगृह्य प्रहरति। निरस्तं तुहु अंकसः।
सपत्नो यः द्वेतुन्नमति। त्रिर्बाधयेन तद्द्विषाद्ईन्द्रएणं परान्त्रारातइ

·त· ७५

हितिस्त्रः परावतः ॥ इहि पंचजनाँऽँ अति। इहि तिस्रोतिरोचना यावं

तः सूर्यो असे हिदिवि। परमांत्वा परावतं ॥ ३ ॥ इंद्रो नयतु वृत्रहा। य

तो न पुनरायसि। शश्वतीभ्यः समाभ्य इति। त्रिरुद्धा एष वज्रो भ्र

ष्टेणासंशितः। स्रुचैवैनं विध्वा। एभ्यो लोकेभ्यो निर्णुद्य। वज्रेण

भ्रष्टेणास्तृणुते। हतोसावर्धिष्मामुमित्यो हस्तलेषे। यं द्विष्यात्तं ध्या

येत्। स्रुचैवैनं मर्पयति ॥ ४ ॥ नो द्विष्म इति परावतं मर्पयति ॥ १

॥ ग्नत्सुष्टंदिवःशिल्पमयं स्रोघृतं चदेवासुराः स एतस्मिं भूआ पोर्दि

७५

वीरघ्निनाधिषिम्याअश्रुस्नुञ्चो यो वाअयं याद्देवत्तं परिवेषो वा
एकोदरा॥१॥ यस्तुभ्यमयत्तएषाहि विश्वेषां देवानां मुजोष्टि
वीमघोरक्षंसांतां व्रजातिं द्वाभ्यां तं कालेकोच्चेन वसत्तति॥७॥
॥ ॥हरिः ॐ म॥ ॥ब्रह्मणे ब्राह्मणमालभते। क्षत्राय राजन्यम्
। मरुद्भ्यो वैश्यं। तपसे शूद्रं। तमसे तस्करं। नारकाय वीरहणम्।
पाप्मने क्लीबं। आक्रयाया योगूं। कामाय पुंश्चलूं। अतिक्रुष्टाय माग
धं॥१॥ गीताय सूतं। नृत्ताय शैलूषं। धर्माय सभाचरं। नर्माय रेभं

। नरिष्ठायै भीमलं । हसाय कारिं । आनन्दाय स्त्रीषखम् । प्रमदे कु
मारीपुत्रम् । मेधायै रथकारं । धैर्याय तक्षाणं ॥ २ ॥ श्रमाय कौलाल
म् । मायायै कर्मारं । रूपाय मणिकारं । शुभे वपं । शरव्याया इषुका
रं । हेत्यै धन्वकारं । कर्मणे ज्याकारं । दिष्टाय रज्जुसर्गं । मृत्यवे मृग
युं । अन्तकाय श्वनितं ॥ ३ ॥ संधये जारं । गेहायोपपतिं । निर्ऋत्यै परि
वित्तं । आर्त्यै परिविविदानं । अराध्यै दिधिषूपतिं । पवित्राय भिषज
म् । प्रज्ञानाय नक्षत्रदर्शं । निष्कृत्यै पेशस्कारीम् । बलायोपदां । वर्णा

यानुरुधं ॥४॥ नदीभ्यः पौंजिष्ठं । ऋक्षीकाभ्यो नैषादं । पुरुषव्याघ्रा
य दुर्मदं । प्रयुग्भ्य उन्मत्तं । गंधर्वाप्सरोभ्यो व्रात्यं । सर्पदेवजनेभ्यो
ऽप्रतिपदं । अयेभ्यः कितवं । ईर्यतायाऽअकितवं । पिशाचेभ्यो विद
लकारं । यातुधानेभ्यः कंटककारं ॥५॥ उत्सादेभ्यः कुब्जं । प्रमुदे
वामनं । द्वार्भ्यः स्रामं । स्वप्नायांधं । अधर्माय बधिरं । संज्ञानाय स्मर
कारीं । प्रकामोद्यायोपसदं । आशिक्षायै प्रश्निनं । उपशिक्षायाऽअभि
प्रश्निनं । मर्यादायै प्रश्नविवाकं ॥६॥ ऋत्यै स्तेनहृदयं । वैरहत्याय

ब्रा॰ त॰
७७

पिशुनं। विविक्त्यै क्षत्तारं। औपद्रष्ट्याय संग्रहीतारं। बलायानुचरं।
भूम्ने परिष्कन्दं। प्रियाय प्रियवादिनं। अरिष्ट्या अश्वसादं। मेधाय वा
सः पल्पूलीं। प्रकामाय रजयित्रीं॥७॥ भायै दार्वाहारं। प्रभाया
अग्न्येधं। नाकस्य पृष्ठायाभिषेक्तारं। ब्रध्नस्य विष्टपाय पात्रनिर्णे
गं। देवलोकाय पेशितारं। मनुष्यलोकाय प्रकरितारं। सर्वेभ्यो लो
केभ्य उपसेक्तारं। अवर्त्यै वधायोपमन्थितारं। सुवर्गाय लोकाय
भागदुघं। वर्षिष्ठाय नाकाय परिवेष्टारं॥८॥ अर्मेभ्यो हस्तिपं। जवा

यां मृ॒ष प॑मृ। पु॒ष्ठे गो पा॒लं। तिजं सेज पा॒लं। वी यी या वि पा॒लं। इ रां ये की

ना त्रौं। क्री ला लां य सु रा क्रा रं। भ त्रा यं ग हृ पं। श्रे यं से वि त्तु धं। अ ध्यं क्षा

या तुं क्षु त्ता रं॥ ९॥ मु न्य वें य स्ता पं। क्रो धा य नि सु रं। शो का या भि सुरं

। उ त्कू लु वि कू ला भ्यां त्रि स्थि नं। यो गो य यो क्ता रं। क्षे मा य वि मो क्तारं

। व पु षे मा न स्कृ तं। शी लां यां ज नी का रं। निर्ऋ त्यै को शा का रीं। य मा

या स्तं॥ १०॥ य म्यै य मु स्तं। अ थ र्व भ्यो व तो कां। सं व त्स रा यं प र्या रि णीं

। प रि व त्सं रा या वि जा तं। इ दा व त्स रा यां पु स्क वं रीं। इ द्व त्स रा या ती

शा॰त॰
७८

त्वरीं। वृत्स रायुविजर्जरं। सर्वत्सरायुपलिंकी। बनायवनपं।
अन्धतोरण्यायदावृपं॥११॥सरोभ्योधेवृरं। वेरंताभ्योदाखोनु
पुस्यावरीभ्योबेंदं। नुडूलाभ्यः शौष्कलं। पार्यायकैवर्तं। अवार्या
यमार्गारं। तीर्थेभ्यआंदं। विषमेभ्योमैनालं। स्वनेभ्यः पर्णकं। गु
हाभ्यः किरातं। सानुभ्योजंभकं। पर्वतेभ्यः किंपूरुषं॥१२॥ब्रति
ष्कलोयाकुतुलं। घोषायभषं। अंतायबहुवादिनं। अनंतायमू
कं। महसेवीणावादं। क्रोशायतूणवृधं। आक्रंदायदुंदुभ्याघातं।

।अवरस्पराय संखधं।ऋभुभ्यो जिनसंधायं।साध्येभ्यश्चर्मम्णं
॥१३॥ बीभत्सायै पौल्कसं।भूत्यै जागरणं।अभूत्यै स्वपनं।तुलायै
वाणिजं।वर्णाय हिरण्यकारं।विश्वेभ्यो देवेभ्यः सिध्मलं।पश्चाद्दोषा
य ग्लावं।ऋत्यै जनवादिनं।व्यृध्या अपगल्भं।संशराय प्रच्छिदं॥
१४॥ हसाय पुंश्चलूमालभते।वीणावादं गणकं गीताय।यादसे
शाबुल्यां।नर्माय भद्रवतीं।तूणवध्मं ग्रामण्यं पाणिसंघातं नृत्ताय
।मोदायानुक्रोशकं।आनंदाय तलवं॥१५॥ अक्षराजाय कितवं।

कृतायसभाविनं।त्रेतायाआदिनवदर्शं।द्वापरायबहिःसदं।क
लयेसभास्थाणुं।दुष्कृतायचरकाचार्यं।अध्वनेब्रह्मचारिणं।पि
शाचेभ्यःसैलगं।पिपासायैगोव्यछं।निर्ऋत्यैगोघातं।क्षुधेगोवि
कर्त्तं।क्षुत्तृष्णाभ्यांतं।योगांविकृंतंतंमाꣳसंभिक्षमाणउपतिष्ठते
।।१६।।भूम्यैपीठसर्पिणमालभते।अग्नयेꣳसलं।वायवेचांडालं
।अंतरिक्षायवꣳशनर्त्तिनं।दिवेखलतिं।सूर्यायहर्यक्षं।चंद्रम
सेमिर्मिरं।नक्षत्रेभ्यःकिलासं।अह्नेशुक्लंपिंगलं।रात्रियेकृष्णपिं

गाक्षं॥१७॥ वाचे पुरुषमालभते। प्राणमपानं व्यानमुदानं समा
नं तान्वायवे। सूर्याय चक्षुरालभते। मनश्चन्द्रमसे। दिग्भ्यः श्रोत्रम्
। प्रजापतये पुरुषं॥१८॥ अथैतानरूपेभ्य आलभते। अतिह्रस्व
मतिदीर्घं। अतिकृशमत्यंसलं। अतिशुक्लमतिकृष्णं। अतिश्ल
क्ष्णमतिलोमशं। अतिकिरिटमतिदन्तुरं। अतिमिर्मिरमतिमेमि
षं। आशायै जामिं। प्रतीक्षायै कुमारीं॥१९॥ ब्रह्मणे गीताय श्रु
मांय सुंधये नदीभ्य उत्साहेभ्य ऋतेभाया अमेभ्यो मन्यवे युध्ये

ा.त.
८०

इन्द्रो॑ इन्द्रा स॒रो॑ श्रोवा॒इन्द्रा व॒ति॒ सुत्का॑ये बि॒भत्सा॒ये इन्द्रा॑ इन्द्रा॒ह॑ सो॑ य॒स्
त्मा॑क्ष॒राजा पु॒त्र यो॑ इन्द्रा॑ भ्रुम्ये॑ इन्द्रो॑ वा॒चे॒ ष॒ड प्र॒न वै॑ का॒श्रवि॒ इन्द्रा॒तिः॥
१०॥ ब्र॒ह्म॒णे॑ पु॒ष्म्ये॑न वे॑ इन्द्रा॥ ॥हरिः॑ ॐ म्॥ ॥स॒त्यं प्र॑प॒द्ये॑। ऋ॒तं
प्र॑प॒द्ये॑। अ॒मृ॒तं प्र॑प॒द्ये॑। प्र॒जाप॑तेः प्रि॒यां त॒नुव॑ मना॑र्त्तां प्र॑प॒द्ये॑। इ॒दम॒
हं प॑ञ्चद॒शेन॒ व॒ज्रेण॑। द्वि॒षं तं भ्रात॑व्य॒ मव॑क्रामामि। यो॑ऽस्मान् द्वेष्टि॑। यं च॑
व॒यं द्वि॒ष्मः॥ भूर्भुवः॒ सुवः॑॥ हिं॥१॥ स॒त्यं इन्द्रा॥१॥ प्र॒वो॑ वाजा॑ अ॒भिद्य॑व
॥ ह॒विष्म॑न्तो घृ॒ताच्या॑। दे॒वाञ्जि॑गाति सुम्न॒युः॥ अग्न॒ आ या॑हि वी॒तये॑ ग्

णा नो हव्यदातये। नि होता सत्सि बर्हिषि॥ तं त्वा समिद्भिरंगिरः। घृते
न वर्द्धयामसि। बृहच्छोचा यविष्ठ्य। स नः पृथुश्रवाय्यं॥१॥ अच्छा देव
विवाससि। बृहदग्ने सुवीर्यं। ईडेन्यो नमस्यस्तिरः। तमांसि दर्श
तः॥ समग्निरिध्यते वृषा॥ वृषो अग्निः समिध्यते। अश्वो न देववाह
नः॥ तं हविष्मंत ईडते। वृषणं त्वा वयं वृषन्। वृषणः समिधीमहि
॥२॥ अग्ने दीद्यतं बृहत्। अग्निं दूतं वृणीमहे। होतारं विश्ववेदसं।
अस्य यज्ञस्य सुक्रतुं। समिध्यमानो अध्वरे। अग्निः पावक ईड्यः।

शोचिष्केशस्तमीमहे। समिद्धो अग्न आहुत। देवान्यक्षि स्वध्वरात
ं हि हव्यवाउसि। आजुहोत दुवस्यत। अग्निं प्रयत्यध्वरे। वृणीध्व
ं हव्यवाहनं। त्वं वरुण उत मित्रो अग्ने। त्वां वर्धन्ति मतिभिर्वसिष्ठा
ः। त्वे वसु सुषणनानि संतु। यूयं पात स्वस्तिभिः सदा नः॥३॥ स्रुवा
प्यमिधीमह्यसि सत्तच॥२॥ अग्ने महाँ असि ब्राह्मण भारत। अ
सावसौ। देवेद्धो मन्विद्ध। ऋषिष्टुतो विप्रानुमदितः। कविशस्तो ब्र
ह्मसंशितो घृताहवनः। प्रणीर्यज्ञानां। रथीरध्वराणां। अतूर्तो हो

ता। तूर्णिर्हव्यवाट्। आस्पात्रं जुहूर्देवानां॥१॥ चमसो देवपानः। अ
राँ इवाग्ने नेमिर्देवाँ स्त्वं परिभूरसि। आवह देवान्यजमानाय। अ
ग्निमग्न आवह। सोममावह। अग्निमावह। प्रजापतिमावह। अग्नी
षोमावावह। इंद्राग्नी आवह। इंद्रमावह। महेंद्रमावह। देवाँ आज्य
पाँ आवह। अग्निँ होत्रायावह। स्वं महिमानमावह। आ चाग्ने दे
वान्वह। सुयजा च यज जातवेदः॥२॥ देवानामिंद्रमावह षड्ढ॥३॥
अग्निर्होता वेत्त्वग्निः। होत्रं वेत्तु प्रावित्रं॥ स्मो वयं। साधु ते यजमान

त:    देवतो। घृतवंतीमध्वर्योस्रुचमास्यस्व। देवायुवंविश्ववारां। ईडाम
२    हैदेवाँ ईडेन्यान्। नमस्याम नमस्यान्। यजाम यज्ञियान्॥१॥ अ
ग्निर्होतानवे॥४॥ समिधो अग्न आज्यस्य वियंतु। तनूनपादग्न आ
ज्यस्य वेतु। इडो अग्न आज्यस्य वियंतु। बर्हिरग्न आज्यस्य वेतु। स्वा
हाग्निं। स्वाहा सोमं। स्वाहाग्निं। स्वाहा प्रजापतिं। स्वाहाग्नीषोमौ। स्वा
हेंद्राग्नी। स्वाहेंद्रं। स्वाहा महेंद्रं। स्वाहा देवाँ आज्यपान्। स्वाहाग्निं
होत्राज्जुषाणाः। अग्न आज्यस्य वियंतु॥१॥ इंद्राग्नी पंच च॥५॥ अ    ८२

ग्निर्वृत्राणि जंघनत्। द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः
। जुषाणो अग्निराज्यस्य वेतु। त्वँ सोमासि सत्पतिः। त्वँ राजोत वृ
त्रहा। त्वं भद्रो असि क्रतुः। जुषाणः सोम आज्यस्य हविषो वेतु। अ
ग्निः प्रत्नेन जन्मना। शुंभानस्तनुवँ स्वां। कविर्विप्रेण वावृधे। जु
षाणो अग्निराज्यस्य वेतु। सोम गीर्भिष्ट्वा वयं। वर्धयामो वचोविद
ः। सुमृडीको न आविश। जुषाणः सोम आज्यस्य हविषो वेतु॥१॥ स्वा
ँ षड्व॥६॥ अग्निर्मूर्धा दिवः ककुत्। पतिः पृथिव्या अयं। अपाँ रे

ताँसिजिन्वति।भुवोयज्ञस्यरजसश्चनेता।यत्रानियुद्भिःसचसेशि
वाभिः।दिविमूर्धानंदधिषेस्वर्षां।जिह्वामग्नेचकृषेहव्यवाहं
।प्रजापतेनत्वदेतान्यन्यः।विश्वाजातानिपरितावभूव।यत्कामा
स्तेजुहुमस्तन्नोअस्तु॥१॥वयंस्यामपतयोरयीणां।सवेदपुत्रः
पितरंसमातरं।ससूनुर्भुवत्सभुवत्पुनर्मघः।सद्यामौर्णोदन्त
रिक्षंसस्वः।सविश्वाभुवोअभवत्सआभवत्।अग्नीषोमासवे
दसा।सहूतीवनतंगिरः।संदेवत्राबभूवथुः।युवमेतानिदिविरो

चनानि। अग्नीषोमा सक्रतू अधत्तं॥२३॥ युवं सिंधूँरभिशस्ते
रवद्यात्। अग्नीषोमावमुंचतं गृभीतान्। इंद्राग्नी रोचना दिवः। प
रि वाजेषु भूषथः। तद्वां चेति प्र वीर्यं। श्नथद्वृत्रमुत सनोति वाजं
। इंद्रा यो अग्नी सहुरी सपर्यात्। इरज्यंता वसव्यस्य भूरेः। सहस्त
मा सहसा वाजयंता। एंद्र सानसिं रयिं॥२४॥ सजित्वानं सदा
सहं। वर्षिष्ठमूतये भर। प्रससाहिषे पुरुहूत शत्रून्। ज्येष्ठस्ते
शुष्म इह रातिरस्तु। इंद्रा भर दक्षिणेना वसूनि। पतिः सिंधूनाम

त॰ सिरेवतीनां। मृहाꣳइंद्रो यओजसा। पर्जन्यो वृष्टिमाꣳइव। स्तो

८४ मैर्वृत्सस्य वावृधे। मृहाꣳइंद्रो नृवदाचर्षणिप्राः॥४॥ उत द्विबर्हा

अमिनःसहोभिः। अस्मद्रियग्वावृधेवीर्याय। उरुःपृथुःसुकृ

तःकर्तृभिर्भूत्। पिप्रीहिदेवाꣳउशतोयविष्ठ। विद्वाꣳऋतूꣳर्

ऋतुपतेयजेह। येदैव्याऋत्विजस्तेभिरग्ने। त्वꣳहोतृणामस्याय

जिष्ठः। अग्निꣳस्विष्टकृतं। अयाडग्निरग्नेः प्रियाधामानि। अया

ट्सोमस्यप्रियाधामानि॥५॥ अयाडग्नेः प्रियाधामानि। अयाट्

८४

प्रजापतेः प्रिया धामानि। अयाडग्नीषोमयोः प्रिया धामानि। अया
डिंद्राग्नियोः प्रिया धामानि। अयाडिंद्रस्य प्रिया धामानि। अयाण्म
हेंद्रस्य प्रिया धामानि। अयाड्देवानामाज्यपानां प्रिया धामानि। य
क्षदग्नेर्होतुः प्रिया धामानि। यक्षत्स्वं महिमानं। आयजतामेज्या
इषः। कृणोतु सो अध्वरा जातवेदाः। जुषतां हविः। अग्ने यदद्य
विशो अध्वरस्य होतः। पावक शोचे वेष्ट्वं हि यज्वा। ऋता यजा
सि महिना वि यद्भूः। हव्या वह यविष्ठ या ते अद्य।। ६।। अस्तु धृतं

त॰ ५

रयिंचर्षणिप्राःसोमस्यप्रियाधामानीषुःषड्ढो॥७॥उपहूतꣳर
थंतरꣳसहपृथिव्या।उपमारथंतरꣳसहपृथिव्याह्वयतां।उ
पहूतंवामदेव्यꣳसहांतरिक्षेण।उपमावामदेव्यꣳसहांतरि
क्षेणह्वयतां।उपहूतंबृहत्सहदिवा।उपमाबृहत्सहदिवाह्व
यतां।उपहूताःसप्तहोत्राः।उपमासप्तहोत्राह्वयंतां।उपहू
ताधेनुःसहर्षभा।उपमाधेनुःसहर्षभाह्वयतां॥१॥उपहूतो
भक्षःसखा।उपमाभक्षःसखाह्वयतां।उपहूतां३हो।इडोप

हूता।उपहूतेडा।उपोअस्माँ२इडाह्वयतां।इडोपहूता।उपहूते
डा।मानवीघृतपदीमैत्रावरुणी।ब्रह्मदेवकृतमुपहूतं॥२॥दैव्याअ
ध्वर्यवउपहूताः।उपहूतामनुष्याः।यइमंयज्ञमवान्।येयज्ञपतिं
वर्धान्।उपहूतेद्यावापृथिवी।पूर्वजेऋतावरी।देवीदेवपुत्रे।उप

प

हूतोयजमानः।उत्तरस्यांदेवयज्यायामुपहूतः।भूयसिहविष्करं
णउपहूतः।दिव्येधामन्नुपहूतः।इदंमेदेवाहविर्जुषंतामितितस्मि
न्नुपहूतः।विश्वमस्यप्रियमुपहूतं।विश्वस्यप्रियस्योपहूतस्योपहू

त.
६

तः॥३॥ सहर्षभा कयत्ता सुपंकृतं॑ हविष्करणउपंकृतस्त्वा रि
च॥न॥ देवं बर्हिः। वसुवनेवसुधेयस्यवेतु। देवो नराशं॑सः। वसु
वनेवसुधेयस्यवेतु। देवोअग्निःस्विष्टकृत्। सुद्रविणामंद्रःकविः
।सत्यमन्मायजीहोता। होतुर्होतुरायजीयान्। अग्नेयांदेवानया
ट। यां॑ अपिप्रेः। येतेहोत्रेअमत्सत। तां॑ससनुषीं॑होत्रांदेवंग
मां। दिविदेवेषुयज्ञमेरयेमं। स्विष्टकृच्चाग्नेहोताभूः। वसुवनेवसु
धेयस्यनमोवाकेवीहि॥१॥ अपिप्रेः पंचच॥९॥ इदंद्यावापृथिवी

८६

भद्रमभूत।आगर्मसूक्तवाकं।उतनमोवाकं।ऋध्यास्मसूक्तोच्यम
ग्ने।त्वꣳसूक्तवागसि।उपश्रितोदिवःपृथिव्योः।ओमन्वतीतेस्मि
न्यज्ञेयजमानद्यावापृथिवीस्तां।शंगयेजीरदानू।अत्रस्नूअप्रवे
दे।उरुगव्यूतीअभयंकृतौ॥१॥वृष्टिद्यावारीत्यापा।शंभुवौमयो
भुवौ।ऊर्जस्वतीचपयस्वतीच।सूपचरणाचस्वधिचरणाच।त
योराविदि।अग्निरिदꣳहविरजुषत।अवीवृधतमहोज्यायोकृत
।सोमइदꣳहविरजुषत।अवीवृधतमहोज्यायोकृत।अग्निरिदꣳ

तृ०
७

हविरजुषत॥२॥अवीवृधत महो ज्यायोऽकृत। प्रजापतिरिदंहविरजुषत। अवीवृधत महो ज्यायोऽकृत। अग्नीषोमाविदंहविरजुषेतां। अवीवृधेतां महो ज्यायोऽक्रातां। इन्द्राग्नी इदंहविरजुषेतां। अवीवृधेतां महो ज्यायोऽक्रातां। इन्द्र इदंहविरजुषत। अवीवृधत महो ज्यायोऽकृत। महेन्द्र इदंहविरजुषत॥३॥अवीवृधत महो ज्यायोऽकृत। देवा आज्यपा आज्यमजुषंत। अवीवृधंत महो ज्यायोऽक्रत। अग्निर्होत्रेणेदंहविरजुषत। अवीवृधत महो ज्यायोऽकृत। अस्याम ऋधुर्होत्रा

८७

यां देवं गमयां। आशास्ते यं यजमानो सौ। आयुराशास्ते। सुप्रजास्त्वमा
शास्ते। सजातवनस्यामाशास्ते।। ४।। उत्तरां देवयज्यामाशास्ते। भूयो
हविष्करणमाशास्ते। दिव्यं धामाशास्ते। विश्वं प्रियमाशास्ते। यदनेन
हविषाशास्ते। तदश्यात्तदृध्यात्। तदस्मै देवा रासंतां। तदग्निर्देवो
देवेभ्यो वनते। वयमग्नेर्मानुषाः। इष्टं च वीतं च। उभे च नो द्यावापृ
थिवी अंहसस्पातां। इह गतिर्वामस्येदं च नमो देवेभ्यः।। ५।। अभयं
कृतावकृताग्निरिदं हविरजुषत महेंद्र इदं हविरजुषत सजात

ग्रा॰ त॰ ८८

वनस्पामात्रौस्तेवीतंचत्राणिच॥१०॥ तच्छंयोरावृणीमहे। गातुं
यज्ञाय। गातुंयज्ञपतये। दैवीस्वस्तिरस्तुनः। स्वस्तिर्मानुषेभ्यः।
ऊर्ध्वंजिगातुभेषजं। शन्नोअस्तुद्विपदे। शंचतुष्पदे॥१॥ तच्छंयोर
घे॥११॥ आप्यायस्वसंते। इहत्वष्टारमग्रियंतन्नस्तुरीपं। देवानांप
त्नीरुशतीरवंतुनः। प्रावंतुनस्तुजयेवाजसातये। याःपार्थिवासो
याअपामपिव्रते। तानोदेवीःसुहवाःशर्मयच्छत। उतग्नाव्यंतु
देवपत्नीः। इंद्राण्यग्नाय्यश्विनीराट्। आरोदसीवरुणानीशृणो

८

तु । त्रियंतु देवीर्मक्रतुर्जनीनां ॥१॥ अग्निर्होता गृहपतिः स राजा
। विश्वा वेद जनिमा जातवेदाः । देवानामुत यो मर्त्यानां । यजिष्ठः स
प्र यजतामृतावा । वयमु त्वा गृहपते जनानां । अग्ने अकर्म समि
धा बृहन्तं । अस्थूरि णो गार्हपत्यानि सन्तु । तिग्मेन नस्तेजसा संशि
शाधि ॥२॥ जनीनामुशोचे ॥१२॥ उपहूतं रथंतरँ सह पृथि
व्या । उप मा रथंतरँ सह पृथिव्या ह्वयतां । उपहूतं वामदेव्यँ स
हान्तरिक्षेण । उप मा वामदेव्यँ सहान्तरिक्षेण ह्वयतां । उपहूतं

ता. त्र.
८९

बृहत्सहदिवा। उपमा बृहत्सहदिवा कयतां। उपकृताः सप्तहोत्राः। उपमा सप्तहोत्राः कयतां। उपकृता धेनुः सहर्षभा। उपमा धेनुः सहर्षभा कयतां॥ १॥ उपकृतो भस्त्रः सरघा। उपमा भस्त्रः सरघा कयतां। उपकृतां ३ हो। इडोपकृता। उपकृते डो। उपो अस्मा ३ इडा कयतां। इडोपकृता। उपकृते डो। मानवी घृतपदी मैत्रावरुणी। ब्रह्मदेवकृतमुपकृतं॥ २॥ दैव्या अध्वर्यव उपकृताः। उपकृता मनुष्याः। य इमं यज्ञमवान्। ये यज्ञपतिं वर्धान्। उपकृते द्यावापृथिवी। पूर्वे

जेहूतावरी। देवीदेवपुत्रे। उपहूतेयंयजमाना। इंद्राणीवाविधवा
।अदितिरिवसुपुत्रा। उत्तरस्यांदेवयज्यायामुपहूता। भूयसिह
विष्करणउपहूता। दिव्येधामन्नुपहूता। इदंमेदेवाहविर्जुषंता
मितितस्मिन्नुपहूता। विश्वमस्याःप्रियमुपहूतं। विश्वस्यप्रियस्यो
पहूतस्योपहूता॥३॥ सहर्षभाकयतामुपहूतंॐसुपुत्राःषड्व॥
१३॥ सत्वंनोअग्नेमहाननुग्निर्होतासमिधोग्निर्वृत्राण्यग्निर्मूर्धोपहू
तंदेवंबर्हिरिदंद्यावापृथिवीतंछंयोराप्यायस्वोपहूतंत्रयोदश॥

आ॰त॰
९०

१३॥ सुत्यं नु यः स्तोम वृह्निर्द्यां वा न वर्दिः श्राति ॥२९॥ ॥ हरिः ॐ
म्॥ ॥ अंजंति त्वामध्वरे देवयंतः। वनस्पते मधुना दैव्येन। यदूर्ध्व
स्तिष्ठाद्द्रविणेह धत्तात्। यद्वा क्षयो मातुरस्या उपस्थे। उछ्रयस्व व
नस्पते। वर्ष्मन्पृथिव्या अधि। सुमिती मीयमानः। वर्चो धा यज्ञवाह
से। समिद्धस्य श्रयमाणः पुरस्तात्। ब्रह्म वन्वानो अजरं सुवीरं॥
१॥ आरे अस्मदमतिं बाधमानः। उछ्रयस्व महते सौभगाय। ऊर्ध्व
ऊषुण ऊतये। तिष्ठा देवो न सविता। ऊर्ध्वो वाजस्य सनिता यदंजि

भिः। वायुर्विकया महे। ऊर्ध्वो नः पाह्यंहसो नि केतुना। विश्वं

समत्रिणं दह। कृधी न ऊर्ध्वांचरथाय जीवसे। विदा देवेषु नो दुवः॥

२॥ जातो जायते सुदिनत्वे अह्नां। समर्य आ विदथे वर्द्धमानः। पुनंति

धीरा अपसो मनीषा। देवया विप्र उदियर्त्ति वाचं। युवा सुवासाः परिवी

तु आगात्। स उ श्रेयान्भवति जायमानः॥ तं धीरासः कवय उन्नयंति

। स्वाध्यो मनसा देवयंतः॥ पृथुपाजा अमर्त्यः॥ घृतनिर्णिक्स्वाहु

तः॥ अग्निर्यज्ञस्य हव्यवाट्। तंऽसबाधो यतस्रुचः॥ इत्याधिया यज्ञ

रं:
९

वं तः॥ आ चक्रुरग्निमूतये। त्वं वरुण उत मित्रो अग्ने। त्वां वर्धंति मति
भिर्वसिष्ठाः। त्वे वसु सुषणनानि संतु। यूयं पात स्वस्तिभिः सदा नः॥३
॥सुवीरं३ वसु स्वाकृतो ष्टोचं॥१॥ होता यक्षदग्निं समिधा सुषमिधा
समिद्धं नाभा पृथिव्याः संगथे वामस्य। वर्ष्मं दिव इडस्पदे वेत्वाज्यस्य
होतर्यज। होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपां। मध्वाद्य
देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज॥१॥ होता
यक्षन्नराशंसं नृशस्तं नॄं प्रणेत्रं। गोभिर्वपावान्स्याद्वीरैः शक्ती

प॰९

९१

श्रात्रंयैः स्वपमुयावाहिरण्यंयेस्रुंदनीवेत्वाज्यस्यहोतर्यज। होतायक्ष
दग्निमिडईडितोदेवोदेवाँआवक्षद्दूतोहव्यवाडमूरः। उपेमंयज्ञ
मुपेमांदेवोदेववृहूतिमवतुवेत्वाज्यस्यहोतर्यज॥२॥ होतायक्ष
द्बर्हिःसुष्टरीमोर्णम्रदाअस्मिन्यज्ञेविचप्रचंप्रथताँस्वासस्थंदे
वेभ्यः। एमेनदद्यवसवोरुद्राआदित्याःसदंतुप्रियमिंद्रस्यास्तुवेत्वा
ज्यस्यहोतर्यज। होतायक्षद्दुरऋष्वाः कवष्योकोषधावनीरुदाता
भिजिहतांविपक्षोभिःश्रयंतां। सुप्रायणाअस्मिन्यज्ञेविश्रयंताम

त्र:
१२

ता दधो वियंत्वाज्यस्य होतुर्यज ॥३॥ होता यक्षदुषासानक्ता बृहती सु
पेशसा नृँः पतिभ्यो योनिं कृण्वाने। संस्मयमाने इंद्रेण देवैरेदं बर्हिः
सीदतां वीतामाज्यस्य होतुर्यज। होता यक्षद्दैव्या होतारा मंद्रा पोतारा क
वी प्रचेतसा। स्विष्टमद्यान्यः करदिषा स्वभिगूर्त्तमन्य ऊर्जा सतवसे
मं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतुर्यज ॥४॥ होता यक्षत्तिस्रो दे
५ वीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वतां। देवेभ्यो देवीर्देवमपो
वियंत्वाज्यस्य होतुर्यज। होता यक्षत्त्वष्टारमचिष्टुमपाकं रेतोधां

९२

विश्वं वसं यन्नो धां। पुरुरूपमकामकर्शनं सुपोषः पोषैः स्यात्सुवी
रो वीरै र्वेत्वाज्यस्य होतर्यज।।५।। होता यक्षद्वनस्पतिमुपावस्रक्ष
द्धियो जोष्टारं शशमं नरः। स्वदात्स्वधितिर्ऋतुथाद्य देवो देवेभ्यो
हव्यावाड्वेत्वाज्यस्य होतर्यज। होता यक्षदग्निं स्वाहाज्यस्य स्वाहा
मेदसः स्वाहा स्तोकानां स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनां
। स्वाहा देवाँ आज्यपान्त्स्वाहाग्निं होत्राज्जुषाणा अग्न आज्यस्य वि
यंतु होतर्यज।।६।। त्रियमिंद्रं स्यात्सुवेत्वाज्यस्य होतर्यज सुवीरो वी

त: रैवैत्याज्यस्य होतुर्यज चत्वारिंच ॥२॥ अग्निं तनूनपातं नराशं
३ समग्निमिडईडितो बर्हिर्दुरउषासानक्ता दैव्या तिस्रस्त्वष्टारं व
नस्पतिमग्निं ॥ ॥ समिद्धो अद्य मनुषो दुरोणे। देवो देवान्यजसि जा
तवेदः। आ च वह मित्रमहश्चिकित्वान्। त्वं दूतः कविरसि प्रचेताः
। तनूनपात्पथ ऋतस्य यानान्। मध्वा समंजन्त्स्वदया सुजिह्व।
मन्मानि धीभिरुत यज्ञमृंधन्। देवत्रा च कृणुह्यध्वरं नः। नरा
शंसस्य महिमानमेषां। उप स्तोषाम यजतस्य यज्ञैः ॥१॥ तेसु

९३

ऋतं वृः स्रुच योधियुंधाः॥ स्वदं तु देवा उभयानि हव्या। आजुह्वान

ईड्यो वंद्यश्च। आयाह्यग्ने वसुभिः सजोषाः॥ त्वं देवानामसि यव्हहो

ता। स एनान्यक्षीषितो यजीयान्। प्राचीनं बर्हिः प्रदिशा पृथिव्या

॥ वस्तोरस्या वृज्यते अग्रे अन्हां। व्युप्रथते वितरं वरीयः॥ देवेभ्यो

अदितये स्योनं॥४॥ व्यचस्वतीरुर्विया विश्रयंतां। पतिभ्यो न जन

युः शुंभमानाः॥ देवीर्द्वारो बृहतीर्विश्वमिन्वाः॥ देवेभ्यो भवथ सुप्रा

यणाः॥ आसुष्वयंती यजते उपाके। उषासानक्ता सदतान्नि योनौ

श्रा.त.
९४

। दिवोयोषणे बृहती सुरुक्मे। अधिश्रियं शुक्रपिशं दधाने। दैव्याहो
तारा प्रथमा सुवाचा। मिमाना यज्ञं मनुषो यजध्यै॥७॥ प्रचोदयंता
विदथेषु कारू। प्राचीनं ज्योतिः प्रदिशा दिशंता। आनो यज्ञं भारती
तूयमेतु। इडा मनुष्वदिह चेतयंती। तिस्रो देवीर्बर्हिरेदं स्योनं।
सरस्वती स्वपसः सदंतु। य इमे द्यावापृथिवी जनित्री। रूपैरपिं
शद्भुवनानि विश्वा। तमद्य होतरिषितो यजीयान्। देवं त्वष्टारमिह
यक्षि विद्वान्॥९॥ उपावसृज त्मन्या समंजन्। देवानां पाथ ऋतुथा

हवींषि। वनस्पतिः शमिता देवो अग्निः। स्वदंतु हव्यं मधुना घृते
न। सद्यो जातो व्यमिमीत यज्ञं। अग्निर्देवानामभवत्पुरोगाः। अस्य
होतुः प्रदिश्यृतस्य वाचि। स्वाहाकृतं हविरदंतु देवाः॥५॥ यज्ञैः
स्मोनं यजध्यै त्रिधानुशोचं॥३॥ अग्निर्होता नो अध्वरे। वाजी सन्प
रि णीयते। देवो देवेषु यज्ञियः। परि त्रिविष्ट्यध्वरं। यात्यग्नी रथीरि
व। आ देवेषु प्रयो दधत्। परि वाजपतिः कविः। अग्निर्हव्यान्यक्रमी
त्। दधद्रत्नानि दाशुषे॥२॥ अग्निर्होता नो मनवे॥४॥ अजैदग्निः। अ

संन्नवाजानि। दैवो दैवेभ्यो हव्यावाट्। प्रांजोभिर्हिन्वानः। धेनाभिः क
ल्पमानः। यज्ञस्यायुः प्रतिरन्। उपप्रेष होतः। हव्या देवेभ्यः॥१॥
अजैद् द्वेषो॥५॥ दैव्याः शमितार उत मनुष्या आरभध्वं। उपनयत मे
ध्या दुरः। आशासाना मेधपतिभ्यां मेधं। प्रास्मा अग्निं भरत। स्तृणी
त बर्हिः। अन्वेनं माता मन्यतां। अनु पिता। अनु भ्राता सगर्भ्यः। अनु
सखा सयूथ्यः। उदीचीनाँ अस्य पदो निधत्तात्॥१॥ सूर्यं चक्षुर्गम
यतात्। वातं प्राणमन्ववसृजतात्। दिशः श्रोत्रं। अंतरिक्षमसुं। पृ

थिवीं ऽश्वरीरं। एकधास्य त्वचमाछ्यतात्। पुरा नाभ्या अपिशसो व
पामुत्खिदतात्। अंतरेवोष्माणं वारयतात्। श्येनमस्य वक्षः कृणु
तात्। प्रशसा बाहू॥ शला दोषणी। कश्यपेवांऽसा। अछिद्रे श्रो
णी। कवषोरू स्रेकपर्णाष्ठीवंता। षड्विंऽशतिरस्य वंक्रयः। ता अनु
ष्ठ्योच्यावयतात्। गात्रं गात्रमस्यानूनं कृणुतात्। ऊवध्यगोहं पा
र्थिवं खनतात्। अस्ना रक्षः संऽसृजतात्। वनिष्ठुमस्य मा राविष्ट
॥२॥ उरूकं मन्यमानाः। नेद्वस्तोके तनये। रविता रवच्छमितारः। अ

ग्रा·ल·
१.६

ग्निं गोरामीध्वं। सुरामिंरामीध्वं। रामीध्वमग्निंगो। अग्निंगुब्बापांप
श्च। उभौ देवानां रात्रितारौ। ताविमं प्रस्तुं अपयतां प्रविद्वांसो
। यपायपास्य अपंणं तपांतपा॥५॥ धुत्ताह्नारुमारांविहृतपांत
पा॥६॥ जुषस्वं सप्रथस्तमं। वचो देवप्सरस्तमं। हव्या जुह्वान आ
सनि। इमन्नो यज्ञममृतेषु धेहि। इमा हव्या जातवेदो जुषस्व। स्तोका
नामग्ने मेदसो घृतस्य। होतः प्राशान प्रथमो निषद्य। घृतवन्तः पा
वक ते। स्तोकाश्चोतन्ति मेदसः। स्वधर्मं देववीतये॥१॥ श्रेष्ठं नो धेहि

वार्यं। तुभ्यं स्तोका घृतश्चुतः। अग्ने विप्राय संत्य। ऋषिः श्रेष्ठः समि
ध्यसे। यज्ञस्य प्राविता भव। तुभ्यं श्चोतंत्यध्रिगो शचीवः। स्तोका
सो अग्ने मेदसो घृतस्य। कविशस्तो बृहता भानुना गाः। हव्या जुष
स्व मेधिर। ओजिष्ठं ते मध्यतो मेद उद्भृतं। प्र ते वयं ददामहे। श्चोतंति
ते वसो स्तोका अधि त्वचि। प्रति तां देवशो विहि॥५॥ ईवबीतयुवन्तं
त्रीणि च॥७॥ आ वृत्रहणा वृत्रहभिः शुष्मैः। इंद्र यातं नमोभिरग्ने अ
र्वाक्। युवं राधोभिरकवेभिरिंद्र। अग्ने अस्मे भवतमुत्तमेभिः।

ब्रा·तृ·
९७

होतायक्षदिंद्राग्नी।छागस्यवपायामेदसः।जुषेतांहविः।होतर्यज।
विह्वयध्वमानेस्तावस्यंइछन्।इंद्राग्नीत्वासवतुनवांसजातान्॥१॥ना
न्यायुवस्त्रमतिरस्तिमह्यं।सवांधियंवाजयंती।पतलक्ष्मं।होतायक्षदिं
द्राग्नी।पुरोडाशस्यजुषेतांहविः।होतर्यज।तामीडनैअग्निरंद्र
त्वाय।हविष्मंतःसद्मिन्मानुषासः।यस्यंद्वैवरासहोद्धर्हिर्म्रो।अ
हान्यस्मैसुदिनोभवंतु।होतायक्षदिंद्राग्नी।पुरोडाशस्यजुषेतांहविः
।होतर्यज॥२॥सजातान्ग्निंद्वेचो।८॥गीर्भिर्विप्रःप्रमतिमिछमानः

। ईळे रयिं पृथुशंसं पूर्व्यभाजं । इंद्राग्नी वृत्रहणा सुवज्रा । प्र णो नव्येभि
स्तिरतं देष्णैः । मा छेद्म रश्मीँ रिति नाधमानाः । पितॄणां शक्तीर
नुयच्छमानाः । इंद्राग्निभ्यां कं वृषणो मदंति । ता ह्यद्री धिषणाया उप
स्थे । अग्निं सुदीतिं सुदृशं गृणंतः । नमस्यामस्त्वेड्यं जातवेदः
। त्वां दूतमरतिं हव्यवाहं । देवा अकृण्वन्नमृतस्य नाभिं ॥ ॥ जा
तवेदो देव ॥९॥ त्वं ह्यग्ने प्रथमो मनोता । अस्या धियो अभवो द
स्म होता । त्वं सीं वृषन्नकृणोर्दुष्टरीतु । सहो विश्वस्मै सहसे सह

ग्रा॰ त॰
१८

ध्यै। अधा होता न्यसीदो यजीयान्। इळस्पद इषयन्नीड्यः सन्। तं
त्वा नरः प्रथमं देवयंतः। महो राये चितयंतो अनु ग्मन्। वृतेव यंतं
बहुभिर्वसव्यैः। त्वे रयिं जागृवांसो अनु ग्मन्॥१॥ रुशंतमग्निं द
र्शतं बृहंतं। वपावंतं विश्वहा दीदिवांसं। पदं देवस्य नमसा व्यंत
ः। श्रवस्यवः श्रव आपन्नमृक्तं। नामानि चिद्दधिरे यज्ञियानि। भद्रा
यां ते रणयंत संदृष्टौ। त्वां वर्धंति क्षितयः पृथिव्यां। त्वां राय उभया
सो जनानां। त्वं त्राता तरणे चेत्यो भूः। पिता माता सदमिन्मानुषाणां

॥२॥ स पुर्व्येण्यः स प्रियो विश्वग्निः। होता मंद्रो निषसादा यजीयान्।
तं त्वा वयं दम आ दीदिवांसं। उपज्ञुबाधो नमसा सदेम। तं त्वा व
यं सुधियो नव्यमग्ने। सुम्नायव ईमहे देवयंतः। त्वं विशो अनयो दी
धानः। दिवो अग्ने बृहता रोचनेन। विशां कविं विश्पतिं शश्वती
नां। नितोशनं वृषभं चर्षणीनां॥३॥ प्रेतीषणिमिषयंतं पावकं। रा
जंतमग्निं यजतं रयीणां। सो अग्न ईजे शशमे च मर्तः। यस्त आ
नट् समिधा हव्यदातिं। य आहुतिं परि वेदा नमोभिः। विश्वेत्स वा

ा.त.
९९

माईधते त्वोतः।अस्मा उ ते महि महे विधेम। नमोभिरग्ने समिधोत ह
व्यैः। वेदी सूनो सहसो गीर्भिरुक्थैः। आ ते भद्रायां सुमतौ यतेम
॥४॥ आ यस्ततन्थ रोदसी वि भासा। श्रवोभिश्च श्रवस्य१स्तरुत्रः।
बृहद्भिर्वाजैः स्थविरेभिरस्मे। रेवद्भिरग्ने वितरं वि भाहि। नृवद्व
सो सदमिद्धेह्यस्मे। भूरि तोकाय तनयाय पश्वः। पूर्वीरिषो बृह
तीरारे अघाः। अस्मे भद्रा सौश्रवसानि सन्तु। पुरूण्यग्ने पुरुधा
त्वाया। वसूनि राजन्वसुता ते अश्यां। पुरूणि हि त्वे पुरुवार सन्ति।

९९

अग्ने वसूंषि धुक्ते राजँल्लिते ॥५॥ आ गुवाँ सो अनुगम्न्मानुषाणां च
र्षणीनां यते मारुणां देवे ॥१०॥ आ भेरतं शिक्षतं वज्रबाहू । अस्मा
ँ इन्द्राग्नी अवतं शचीभिः । इमे नु ते रश्मयः सूर्यस्य । येभिः सपित्वं
पितरो न आयन् । होता यक्षदिन्द्राग्नी । छागस्य हविष आत्ताम्अद्य । म
ध्यतो मेद उद्भृतं । पुरा द्वेषोभ्यः । पुरा पौरुषेय्या गृभः । घस्तां नूनं ॥
१॥ घासे अज्राणां यवसप्रथमानां । सुमत्क्षराणां शतरुद्रियाणां ।
अग्निष्वात्तानां पीवोपवसनानां । पार्श्वतः श्रोणितः शितामत उत्साद

ब्रा॰ त॰
१००

तः। अंगो दंगर वत्तानां। करतएवैंन्नाग्नी। जुषेताऽं हविः। होत र्यजि
। देवेभ्यो वनस्पतेह वींऽं षि। हिरण्यपर्ण प्रदिवस्तेअर्थं। राज्ञहनि
णिन्नत्राना/यानि पृपे। ऋतस्यवृक्षि पृपिभीरजिष्ठैः। होता यक्षद्वन
स्पतिमभिहि। पिष्टतमया रभिष्ठया रत्नान याधिंत। यत्रैंन्नाग्नि मो
ष्णागस्य हविषः। प्रियाधामानि। यत्र वनस्पतेः। प्रियापाथाऽं सि। य
त्रैदेवानामाज्यपानां। प्रियाधामानि। यत्राग्ने र्होतुः। प्रियाधामानि। त
त्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्त्रक्षत। रभीयाऽं समिवकृत्वी। ॥२

॥ करद्देवं देवो वनस्पतिः। जुषतां हविः। होतर्यज। पिप्रीहि देवाँ
उँशतो यविष्ठ। विद्वाँ ऋतूँ ऋतुपते यजेह। ये दैव्या ऋत्विज
स्तेभिरग्ने। त्वं होतॄणामस्यायजिष्ठः। होता यक्षदग्निं स्विष्टकृ
तं। अयाडग्निरिन्द्राग्नियोर्भागस्य हविषः प्रिया धामानि। अया
ड्वनस्पतेः प्रिया पाथांसि। अयाड्देवानामाज्यपानां प्रिया धामा
नि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत्स्वं महिमानं। आयजतामे
ज्या इषः। कृणोतु सो अध्वरा जातवेदाः॥ जुषतां हविः॥ होतर्य

जं॥४॥ नू न मर्प कृत्वी पा पाऽसिसु म्न ॥११॥ उ पो ह यद्भि द यं वाजि
नो गृः। गी भिर्वि प्राः प्रमति मि छ मा नाः। अ र्वं तो न का ष्ठां न र्ख माणाः।
इं द्रं स्त्री जो कु र्व तो न रस्ते। व न स्प ते र श ना य्या मि धा य। पि ष्ट तं म या व
यु नानि वि द्वान्। व ह दे वे भ्यो ह वि षो ह वी ऽंषि। प्र च ह ता र म मृ ते षु
वो चः। अ ग्ने इं स्वि ष्ट कृ त। अ या ड ग्नि रिं द्रा ग्नि यो र्म्हा ग स्य ह विषः
प्रि या धा मा नि॥१॥ अ या ड न स्प तेः प्रि या पा था ऽ सि। अ या डू वा नां
मा ज्य पा नां प्रि या धा मा नि। य क्ष दू गे र्हो तुः प्रि या धा मा नि। य क्ष त्स्वं

महिमानं॥ आ यजता मे ज्या इषः॥ कृणोतु सो अध्वरा जातवेदाः॥ जु
षतां हविः॥ अग्ने यदद्य विशो अध्वरस्य होतः॥ पावकशोचे वेष्ट्वं
हि यज्वा॥ ऋता यजासि महिना वि यद्भूः॥ हव्या वह यविष्ठ या ते अद्य
॥२॥ धामानि भरे कं च॥१२॥ देव बर्हिः सुदेवं देवैः स्यात् सुवीरं वीरै
र्वस्तोर्वृज्येताक्तोः प्रभ्रियेतात्यन्या राया बर्हिष्मतो मदेम वसुव
ने वसुधेयस्य वेतु यज॥ देवीर्द्वारः संघाते विड्वीर्यामञ्छिथिरा ध्रुवा
देवहूतौ वत्स ईमेनास्तरुण आ मिमीयात् कुमारो वा नवजातो

१.तृ.

१०२

मैत्राअर्वीरेणुर्ककाट्ः प्रणग्वसुवनेवसुधेयस्यविर्यंन्तुयजे॥१॥दे
वीतुषासानक्ताद्यास्मिन्यज्ञेप्रयत्यकेतामपिन्नन्नेदैवीर्विश्राःप्रायांसि
ष्टांसुप्रीतेसुधितेवसुवनेवसुधेयस्यवीतांयजे।देवीजोष्ट्रीवसु
धितीययोरन्यात्वाद्वेषांसियूयवद्वान्यावक्षद्वसुवार्याणियजमा
नायवसुवनेवसुधेयस्यवीतांयजे॥२॥देवीऊर्जाहुतीदूषमूर्ज
मन्यावक्षत्सग्धिंसपीतिमन्यानवेनपूर्वंदयमानास्यामपुराणे
ननवंतामूर्जमूर्जाहुतीऊर्जयमानेअधातांवसुवनेवसुधेयस्यवी

१०३

तां यज। देवा दैव्या होतारा नेष्टारा पोतारा हुता घेन्द्रा ऽसा वा भरद्वसू वसुवने वसुधेयस्य वीतां यज॥३॥ देवीस्तिस्त्रस्तिस्त्रो देवी रिडा सरस्वती भारती द्यां भारत्यादित्यैर स्पृक्षत्सरस्वती मंरुद्रैर्यज्ञमावीदिहैवेड या वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य वियंतु यज। देवो नराशंसस्त्रिशीर्षा षडक्षः शतमिदेनं शितिपृष्ठा आदधति सहस्त्रमीं प्रवहंति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पति स्तोत्र मश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज॥४॥ देवो व

त्र०

१०३

त्रसपतिर्वर्षन्नावाघृतनिर्णिग्धामग्नेपास्मसुहंतरिक्षंमध्येनात्रा
:दृषिवीमुपरेणाहृंऽहीहसुवनेवसुधेयस्यवेतुयजाउंदेवंबर्हिं
र्वारितीनांनिधेधासिप्रच्युतीनामप्रच्युतंनिकामधरणंपुरुस्मा
र्हयत्रांस्वदेनाबर्हिषान्याबर्हिऽष्यभिष्यामवसुवनेवसुधेयस्य
वेतुयजाउदेवोअग्निस्विष्टकृत्सुद्रविणमन्द्रःकविःसत्यमंन्मायजा
होताहोतुर्होतुरायजीयानग्नेयांदेवानयाड्यांऽअपिप्रयेतेहोत्रे
अमत्सततांऽससनुषींऽहोत्रांदेवंगमांदिविदेवेषुयज्ञमेरयेमंऽ

१०

श्रौ० त०
१०४

सुवनेवसुधेयस्यवीतां।देवीऊर्जाहुती।वसुवनेवसुधेयस्यवीतां
॥१॥देवादैव्याहोतारा।वसुवनेवसुधेयस्यवीतां।देवीस्तिस्रस्ति
स्रोदेवीः।वसुवनेवसुधेयस्यवियंतु।देवोनराशꣳसः।वसुवनेव
सुधेयस्यवेतु।देवोवनस्पतिः।वसुवनेवसुधेयस्यवेतु।देवंबर्हि
र्वारितीनां।वसुवनेवसुधेयस्यवेतु॥२॥देवोअग्निःस्विष्टकृत।सु
द्रविणामंद्रःकविः।सत्यमन्मायजीहोता।होतुर्होतुरायजीयान्।अ
ग्नेयांदेवानयाट्।याꣳअपिप्रेः।येतेहोत्रेअमत्सत।ताꣳससनुषीं

ऽं होत्रां देवंगमां। दिवि देवेषु यज्ञमेरयेमं। स्विष्टकृच्चाग्ने होताभूः
। वसुवने वसुधेयस्य नमोवाके वीहि ॥ ३ ॥ वीतां वेत्वभूरेकं च ॥ १४ ॥
अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशं
बध्नन्निन्द्राग्निभ्यां छागं ऽ सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राग्नि
ध भ्यां छागेनाघस्तां तं मेदस्तः प्रतिपचताग्रभीष्टामवीवृधेतां पुरोडा
शेन त्वामद्यर्ष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आ
संगतेभ्य एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्य

त.
३०५

डुस्तान्यस्मा आ चुरास्वाचं गुरस्वेषितमद्य होतरसि भद्रवाच्याय प्रे
षितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥१॥ अग्निमद्येके ॥१५॥ अ
जंति होता यक्षत्समिधो अद्याग्निरद्य दैव्या जुषस्वा वृत्रहणा गी
र्भिस्तुष्टाभरतमुपोह्य दैवं बर्हिः सुदेवं बर्हिरग्निमद्य पंचद
श ॥१५॥ अजंति ते सुकृतं वो जुषस्वा भरतं देवो वनस्पतिः पंच
चत्वारिंशत् ॥४५॥ ॥हरिः ॐ॥ ॥७॥ हरिः ॐ म॥ ॥सर्वान्वा
एषोऽग्नीन्कामान्त्र वैत्रायति योऽग्नीनन्वाधाय व्रतमुपैति सयदनिश्ना

देवं

१०

श्वा

प्र थ्रा यात्। अकामयत्रीता एनं कामा नानुप्रयायुः। अतेजा अवीर्यः स्यात्
। स ऊर्ध्वात्। तुष्टं ला अंगिरस्तमः। विम्बोः सुक्षितपुः ष्पर्णंकू। अग्ने
कामायेमिरिति। कामानेवास्मिं दधाति। १। कामयत्रीता एनं कामा
अनुप्रयांति। तेजस्वी वीर्यावान्भवति। संततिर्वा एषा यज्ञस्य। योग्नी
नन्वाधाय व्रतमुपैति। स यद्दुद्वायति। विच्छित्तिरेवास्य सा। तं ग्रांच
मुद्धृत्य। मनसोपतिष्ठेत। मनो वै प्रजापतिः। प्राजापत्यो यज्ञः। २।
मनसैव यज्ञं संतनोति। भूरित्याह। भूतो वै प्रजापतिः। भूतिमे

तै:
६

वो पैति। वि वा एष इंद्रियेण वीर्येण ऋध्यति। यस्याहिताग्नेरग्निरपक्षा
यति। या वृक्षम्य या प्रविध्येत्। यदि तावदपक्षायेत्। तं संभरेत्
। इदं त एकं पर उ त एकं।१३। तृतीयेन ज्योतिषा संविशस्वा संवेश
नस्तनुवै चारुरेधि। प्रियेदेवानां परमे जनित्र इति। ब्रह्मणैवैन
ं संभरति। से व ततः प्रायश्चित्तिः। यदि परस्तरामपक्षायेत्। अ
नुप्रयायावस्येत्। सा एव ततः प्रायश्चित्तिः। ओषधीर्वा एतस्य प
सून्पयुः प्रविशंति। यस्याहिताग्नेर्विषवृक्षा अपारोहंति धयंति।१४। ता

न्यद्दुह्यात् । यातयाम्ना हविषा यजेत । यन्न दुह्यात् । यज्ञपरुरन्तरि
यात् । वायव्यां यवागूं निर्वपेत् । वायुर्वै पयसः प्रदापयिता । स एवा
स्मै पयः प्रदापयति । पयो वा ओषधयः । पयः पयः । पयसैवास्मै पयो
वरुन्धे ॥५॥ अथोत्तरस्मै हविषे वत्सानुपाकुर्यात् । सैव ततः प्राय
श्चित्तिः ॥ अन्तरा वा एष देवा भागधेयेन व्यर्द्धयति । ये यजमान
स्य सायं गृहमागच्छन्ति । यस्य सायं दुग्धं हविरार्त्तिमार्छति । इन्द्रा
य व्रीहीन्निरुप्योपवसेत् । पयो वा ओषधयः । पय एवारभ्य गृही

त्वे॰
१०७

त्वोपवसति। यस्मात्तःस्यात्तात्तच्छृतंकुर्यात्॥६॥ अथैतरसैद्रःपुरो
डाशःस्यात्। इंद्रियेएवास्मैसमीचीदधाति। पयोवाओषधयःप
पुःपयः। पयसैवास्मैपयोवरुंधे। अथोत्तरस्मैहविषेवत्सानपाकु
र्यात्। सैवततःप्रायश्चित्तिः॥उभयान्वाएषदेवाभागधेयेनव्य
र्द्धयति। येयजमानस्यसायंचप्रातश्चगृहमागच्छंति। यस्योभय
हविरार्तिमार्च्छति॥७॥ ऐंद्रंपंचशरावमोदनंनिर्वपेत्। अग्निं
देवतानांप्रथमंयजेत्। अग्निमुखाएवदेवताःप्रीणाति। अग्निंवा

१०७

अन्वन्याद्देवताः। इंन्द्रमन्वन्याः। ताएवोभयीः प्रीणाति। पयोवाओ षधयः। पयः पयः। पयसैवास्मै पयोवरुंधे। अथोन्तरस्मै हविषेव त्सान्नपाकुर्यात्॥५॥ सैवततः प्रायश्चित्तिः। अर्द्धोवाएतस्ययज्ञ स्यमीयते। यस्यव्रत्येहन्पत्न्यनालंभुका भवति। तामपरुध्य य जेत। सर्वेणैवयज्ञेनयजते। तामिष्ट्वोपह्वयेत। अमूहमस्मि। सा त्वं। द्यौरहं। पृथिवीत्वं। सामाहं। ऋक्त्वं। ताविह संभवाव। सहरे तोदधावहै। पुंसेपुत्रायवेत्तवै। रायस्पोषायसुप्रजास्त्वाय सु

वीर्यायेति। अर्द्ध एवैनामुपकल्पयते। सैव ततः प्रायश्चित्तिः॥१०॥ इ
धाति यस्त उत्तर एकं धयंति रुंधे कुर्याद्धूर्छत्सु पाकुर्यात्स्य पृथिवीत्वमु
शेर्च॥११॥ सर्वान्विवै यद्दिपरस्तरामोषधीरन्यतरान्स यं एव बोभयां
त्रर्हे वै। यद्विषण्णो न जुहुयात्। अप्रजा अपशुर्यजमानः स्यात्।
यद्दनायतने निनयेत्। अनायतनः स्यात्। प्राजापत्यं यजुर्वल्मी
कवपायामवनयेत्। प्राजापत्यो वै वल्मीकः। यज्ञः प्रजापतिः। प्र
जापतावेव यज्ञं प्रतिष्ठापयति। भूरित्याह। भूतो वै प्रजापतिः

॥१॥ भ्रूतिंऋवोपैति। तत्कृत्वा। अन्यांदुग्ध्वापुनर्होतव्यं। सेवत
तः प्रायश्चित्तिः। यत्कीटावपन्नेनजुहुयात्। अप्रजाअपशुर्यजं
मानःस्यात्। यद्दनायतनेनिनयेत्। अनायतनःस्यात्। मध्यमेनप
र्णेनद्यावापृथिव्यंयुर्चीतिः परिधिनिर्नयेत्। द्यावापृथिव्योरेवैन
स्मतिष्ठापयति॥२॥ तत्कृत्वा। अन्यांदुग्ध्वापुनर्होतव्यं। सेवततः
प्रायश्चित्तिः। यद्वहृष्टेनजुहुयात्। अपरूपमस्यात्मंजायेत। कि
लासोवास्याद्दर्दुरोसेनोवा। यस्मत्त्वेयात्। यत्तंविछिंद्यात्। सजुहुयात्

ब्रा.त.
१०९

। मित्रो जनान्कल्पयति प्रजानन्॥३॥ मित्रो दाधार पृथिवीमुत द्यां। मित्रः कृष्टीरनिमिषाभिचष्टे। सत्याय हव्यं घृतवज्जुहोतेति। मित्रेणैवैनं कल्पयति। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्हेतव्यं। सैव ततः प्रायश्चित्तिः॥ यत्सर्वस्यामाकृत्यां कृताया मुत्तराकृतिः स्कंदेत। द्विपाद्भिः पशुभिर्यजमानो व्यृध्येत। यदुत्तरया भिजुहुयात्॥४॥ चतुष्पाद्भिः पशुभिर्यजमानो व्यृध्येत। यन्नुवेत्थ वनस्पते देवानां गुह्यानामानि। तत्र हव्यानि गामयेति वानस्पत्यर्चा समिधमा

धायां। तूष्णीमेव पुनर्जुहुयात्। वनस्पतिनैव यूपस्तस्यार्थेचानार्त्रीं
चाडुंतौ विहरंधार। तत्कृत्वा। अन्यां दुग्ध्वा पुनर्होतव्यं। सेव ततः प्रा
यश्चित्तिः। यस्तु पुरा प्रयाजेभ्यः प्राङ् गोरस्कंदेत्। अध्वर्यवे च यज
मानायुच्चाकं स्यात्॥ ५॥ यद्दक्षिणा। ब्रह्मणे च यजमानायुच्चाक
ं स्यात्। यस्तु प्रत्यक्। होत्रे च पत्नियै च यजमानायुच्चाकं स्यात्।
यदुदङ्। अग्नीधे च पशुभ्यश्च यजमानायुच्चाकं स्यात्। यद्यभि
जुहुयात्। रुद्रोस्य पशून्घातुकः स्यात्। मन्नाभिजुहुयात्। अ

ब्रा॰ त॰
११०

श्रांतः प्रक्रियेत ॥६॥ स्रुवस्य बुध्नेनाभिनिदध्यात् । मा ते मो मायुरि
स्ते मुन्मा यजमानस्तमत् । नमस्ते अस्त्वायते । नमो रुद्र परायते । न
मो यत्र निषीदसि । अमुं मा हिंसीरमुं मा हिंसीरिति येन स्रुवं हे
त । तं प्रहरेत् । सहस्रशृंगो वृषभो जातवेदाः । स्तोमपृष्ठो घृतवान्त्सु
प्रतीकः । मा नो हासीन्मेत्थितो नेत्वा जहाम । गोपोषं नो वीरपोषं च
यच्छेति । ब्रह्मणे वैनं प्रहरति । सेव ततः स्थापयिष्यति ॥७॥ वै प्रजा
पतिस्थापयति प्रजानन्तभिजुकुयात्स्याधिये तजहां मन्त्रीणि

त

च ॥ २ ॥ यदि स्वर्ण्णेन प्राजापत्यं पुर्च्चां यस्त्रीला वं पन्नेनु यद्वै वृष्टे नु
यस्तु वैस्यां यस्तु राज्यं याजेभ्यः प्राउं गारो यद्दक्षिणा ॥ विवाएषइंद्रि
येण वीर्येण र्ध्यते । यस्याहि ताग्नेरुग्निर्मुध्ये मानो न जायते । यत्रान्य
प[illegible]स्येत् । ततआहत्यहोतव्यं । अग्नावेवास्याग्निहोत्रं कृतं भव
ति । यद्यन्यं न विंदेत् । अजायां होतव्यं । आग्नेयी वा एषा । यदजा
। अग्नावेवास्याग्निहोत्रं कृतं भवति ॥ ९ ॥ अजस्य तु नाश्नीयात्
। यदजस्याश्नीयात् । यामेवाग्नावाहुतिं जुहुयात् । तामश्नीयात् । त

ब्रा॰ त॰
१११

स्मादजस्य नास्नीयात्। यद्यजां न विंदेत। ब्राह्मणस्य दक्षिणे हस्ते हो
तव्यं। एष वा अग्निर्वैश्वानरः। यद्ब्राह्मणः। अग्नावेवास्याग्निहो
त्रंहुतंभवति॥२॥ ब्राह्मणंतु वसत्यै नापरुंध्यात्। यद्ब्राह्म
ण
वसत्या अपरुंध्यात्। यस्मिन्नेवाग्नावाकुतिं जुहुयात्। तंभाग
धेयेन व्यर्धयेत्। तस्माद्ब्राह्मणो वसत्यै नापरुध्यः। यदि ब्राह्म
णं न विंदेत्। दर्भस्तंबे होतव्यं। अग्निवान्वै दर्भस्तंबः। अग्नावे
वास्याग्निहोत्रंहुतंभवति। दर्भांस्तु नाध्यासीत॥३॥ यद्

२१

र्भ्निनुध्यासीत । यामेवाग्नावाकूतिं जुहुयात् । तामध्यासीत । त
स्माद्भ्नाध्यासितव्यः । यदि ह भ्नन्विंदेत् । अप्सु होतव्यं
। आपो वै सर्वा देवताः । देवतास्वेवास्याग्निहोत्रं हुतं भव
ति । आपुस्तु न परिचक्षीत । यद्यपः परिचक्षीत ॥ ४ ॥ यामेवा
स्वाकूतिं जुहुयात् । तां परिचक्षीत । तस्मादापो न परिचक्ष्या
ः । मेध्या चु वा एतस्या मेध्या चं तनुवो संसृज्येते । यस्या हि
ताग्नेरन्येरग्निभिरग्नयः संसृज्यंते । अग्नये विविचये पुरो

तः
१२

डाशमष्टाकपालं निर्वपेत्। मेध्यांश्चैवास्यामेध्यां च तनुवौ व्याव
र्तयति। अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्। अ
ग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोपधावति। स एवैनं व्रतमा
लंभयति॥५॥ गर्भꣳ स्रवन्तमगदमकः। अग्निरिन्द्रस्त्वष्टा बृ
हस्पतिः। पृथिव्यामवचुश्चोतैतत्। नाभिप्राप्नोति निर्ऋतिं प
राचैः। रेतो वा एतद्वाजिनमाहिताग्नेः। यदग्निहोत्रम्। तद्यत्स्र
वेत्। रेतोऽस्य वाजिनꣳ स्रवेत्। गर्भꣳ स्रवन्तमगदमकरित्या

हारेत एवास्मिं वाजिनं दधाति ॥६॥ अग्निरित्याह । अग्निर्वै रे
तोधाः । रेत एव तद्दधाति । इंद्र इत्याह । इंद्रियमेवास्मिं दधाति ।
त्वष्टेत्याह । त्वष्टा वै पशूनां मिथुनानां रूपकृत् । रूपमेव प
शुषु दधाति । बृहस्पतिरित्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्र
ह्मणैवास्मै प्रजाः प्रजनयति । पृथिव्यामवचुश्चोतैं तदित्याह ।
अस्यामेवैनत्प्रतिष्ठापयति । नाभिप्राप्नोति निर्ऋतिं पराचैरि
त्याह । रक्षसामपहत्यै ॥७॥ अजाग्नावेवास्यामीहोत्रं कृतभ

तः वतिभवत्यासीतपरिचक्षीतलंभयतिदधातिदेवानांबृहस्पति

३२ :पंचेच॥२॥याःपुरस्तात्स्रुस्रवंति।उपरिष्टात्स्रुवंतंस्रुयाः।ताभी

रश्मिपवित्राभिः।श्रद्धांयज्ञमारभे।देवांगातुविदः।गातुंयज्ञाय

विंदत।मनसस्पतिनादेवेन।वाताद्यज्ञःप्रयुज्यतां।तृतीयस्ये

दिवः।गायत्रियासोमआभृतः॥१॥सोमपीथायसन्नयितुं।व

र्कंखमंतरमाददे।आपोदेवीःशुद्धास्थ।इमापात्राणिशुंधत।उ

पातंक्यायदेवानां।पर्णवल्कमुतशुंधत।पयोगृहेषुपयोअघ्नि ११२

यासु। पयो वत्सेषु पयइंद्रा यहविषेघ्रियस्व। गायत्री पर्णवल्केन। पयुःसोमं करोतिमं॥ २॥ अग्निं ग्रह्णामि सुरथं यो मयो भूः। यथुर्घं तमारोहति सूर्यमर्के। आदित्यं ज्योतिषां ज्योतिरुत्तमं। श्वो यत्तायंरमतां देवतांभ्यः। वसून् रुद्रानादित्यान्। इंद्रेण सह देवतोः। ताः पूर्वः परिग्रह्णामि। स्व आयतने मनीषयो। इमामूर्जं पंचदशीं ये प्रविष्टाः। तान्देवान्परिग्रह्णामि पूर्वः॥ ३॥ अग्निर्हव्यवाडिहतानावहतु। पौर्णमासं हविरिदमेषां मयि। आमावास्यं

त्र· हुविरिदमेषांमयि।अंतराग्नीपुरुरावः।देवुसरंसदुमागमनता
१४ न्सर्वुःपरिगरस्नामि।स्वआयतनेमनीषया।इहत्रजाविश्वरूपा
रमंतां।अग्निंगृहपतिमभिसंवसानाः।ताःपूर्वुःपरिगण्हामि॥
४॥स्वआयतनेमनीषया।इहपुरावोविश्वरूपारमंतां॥अग्निंगृ
हपतिमभिसंवसानाः।तान्सर्वुःपरिगण्हामि।स्वआयतनेमनीष
या।अयंपितुणामग्निः।अवाहुव्यापितृभ्यआ।तंपूर्वःपरिगरह्णा
मि।अविषंन्नःपितुंकरत।अजस्रंत्वासभापालाः॥५॥विजयभां ११५

ग्रंसमिंधतां। अग्ने ह्रीं ह्रां यं मे स भ्य। विजित्यै स्वाहा इदं न मम। अग्नये

मा वसत्यायं। अभिहराणि स्वाहा इदं न मम। आवसथ्ये श्रियं मंत्रं। अ

हिर्बुध्नियो नियच्छतु। इदमहं मुन्निज्येष्ठेभ्यः। वसुभ्यो प्रत्तं प्रब्रवी

मि। इदमहं मिंद्र ज्येष्ठेभ्यः॥६॥ रुद्रेभ्यो प्रत्तं प्रब्रवीमि। इदमहं व

रुणज्येष्ठेभ्यः। आदित्येभ्योप्रत्तं प्रब्रवीमि। पयस्वती रोषधयः।

पयस्वद्वीरुधां पयः। अपां पयसो यत्पयः। तेन मामिंद्र संसृज।

अग्ने व्रतपते व्रतंचरिष्यामि। तच्छकेयं तन्मे राध्यतां। वायो व्रत

ह. पतआदित्यव्रतपते॥७॥व्रतानांव्रतपतेव्रतंचरिष्यामि।तच्छ
५ केयंतन्मेराध्यतां।इमांप्राचीमुदीचीं।इषमूर्जमभिसंस्कृतां।
बहुपर्णामशुष्काग्रां।हरामिपशुपामहं।यत्कृष्णोरूपंकृत्वा।
प्राविशस्त्वंवनस्पतीन्।ततस्त्वामेकविंशतिधा।संभरामिसु
संभृता॥८॥त्रीन्परिधींस्तिस्रःसमिधः।यज्ञायुरनुसंचरान्
।उपवेषंमेक्षणंधृष्टिं।संभरामिसुसंभृता।याजाताओषधयः
।देवेभ्यस्त्रियुगंपुरा।तासांपर्वराध्यासं।परिस्तरमाहरन्।अ

पां मे ध्रुवं युक्तियं। सदेवं शिवमस्तु मे॥९॥ आछेत्ता वो मा रिषं।
जीवानि शरदः शतं। अपरिमितानां परिमिताः। सन्नह्ये सुकृता
य कं। एनो मा नि गां कतमच्चनाहं। पुनरुत्थाय बहुला भवन्तु।
सुकृतां छिन्नं बर्हिरूर्णा मृदु। स्योनं पितृभ्यस्त्वा भराम्यहं। अस्मि
न्सीदंतु मे पितरः सोम्याः। पितामहाः प्रपितामहाश्चानुगैः सह
॥१०॥ त्रिवृत्संज्ञा रोहूभिः। इयोन्द्वादेश संमितः। पुत्ते पवित्रं पोतं
तमं। पयोहस्यं करोतु मे। इमोर्ज्जणा पाप्मनो। युत्तस्यां गा निसर्वेशाः

र: ६

।आप्याययंतौ संचरतां। पवित्रे हव्यशोधने। पवित्रे स्थो वैष्णवी
।वायुर्वां मनसा पुनातु॥११॥ अयं प्राणश्चापानश्च। यजमानमपि
गच्छतां। यज्ञे ह्यभूतां पोतारौ। पवित्रे हव्यशोधने। त्वया वेदिं विवि
दुः पृथिवीं। त्वया यज्ञो जायते विश्वदानिः। अच्छिद्रं यज्ञमन्वेषि
विद्वान्। त्वया होता संतनोत्यर्धमासान्। त्वं यज्ञियꣳ स्तोमोसि तं त्वं नां
।पवित्रेण सहागहि॥१२॥ शिवे यꣳ रज्जुरभिधानी। अघ्नियामुप
सेवतां। अपर्वस्त्वꣳ सा यज्ञस्य। उखेडपदं धास्यहं। पशुभिः स

णी तं बिभृता। इंद्रो यज्ञं तं दधि। उ प वेषोसि पुस्ता यो। त्वां परि वृष
मं धारयन्। इंद्रा पह हविः कृण्वंतः। शिवः शग्मो भवासि नः॥१३॥
अमृन्मयं देवपात्रं। यज्ञस्यायुषि प्रयुज्यतां। त्रिः पवित्रमतिनी
ताः। आपो धारयमातिशुः। देवेन सवित्रोत्पूताः। वसोः सूर्यस्य र
श्मिभिः। गां दोह पवित्रे रज्जुं। सर्वा पात्राणि शुंधत। एता आचरं
ति मधुमद्दुहानाः। प्रजावती र्यशसो विश्वरूपाः॥१४॥ बह्वीर्भवं
तीरुपजायमानाः। इह व इंद्रो रमयतु गावः। पूषास्थ। अयक्ष्मा वः

प्रजया सꣳ सृजामि। रायस्पोषेण बहुला भवन्तीः। ऊर्जं पयः पिन्व-
माना घृतं च। जीवो जीवन्तीरुप वः सदेयं। द्यौश्चेमं यज्ञं पृथिवी च
सं दुहातां। धाता सोमेन सह वातेन वायुः। यजमानाय द्रविणं द-
धातु॥ ४॥ उत्सं दुहन्ति कलशं चतुर्बिलं। इडां देवीं मधुमतीꣳ
सुवर्विदं। तदिन्द्राग्नी जिन्वतꣳ सूनृतावत्। तद्यजमानममृत-
त्वे दधातु। कामधुक्षः प्रणो ब्रूहि। इन्द्राय हविरिन्द्रियं। अमूं यस्यां
देवानां। मनुष्याणां पयो हितं। बहु दुग्धीन्द्राय देवेभ्यः। हव्यमाप्या

यत्तां पुनः ॥१६॥ वृत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतां । यत्तस्य
संततिरसि । यत्तस्य त्वा संततिमनुसंतनोमि । अहं स्तमसि वि
ष्णो वेत्वा । यत्त्वा यापि इह धाम्यहं अङ्गिररिक्ते न पात्रेण । याः पूताः
परित्रेरते । अयं पयः सोमं कृत्वा । स्वां योनिमपि गच्छतु ॥१७॥ पूर्ण
वृक्षः पवित्रं । सोम्यः सोमाद्धि निर्मितः । इमो पूर्णं चेदं भं चे । देवाना
उहस्थो धनो । भ्रातृव्येषाय गोपाय । विष्णो हव्यं हिरक्षसि । उ
भावृणीउ पस्तृणते । देवताउपवसंतु मे । अहं ग्राम्यानुपवसामि

तै॰
८

।मसुखं गोपतये प्रस्रन॥१८॥आभर्तइमंगं स्नामि पूर्वस्तः पूर्वैःप
रिगं स्नामि सभा पालाइं द्रज्येष्ठेभ्यआदित्य न्नतपतेसुसंभर्ता
मेसहपुनातुगहिनोविश्वरूपादधातुपुनर्गच्छतुपस्रन॥७॥दे
वीद्वैवेषु परीक्रमध्वं।प्रथमाद्वितीयेषु।द्वितीयास्तृतीयेषु।त्रि
रैकादशाइहमावत।इदंशकेयं यदिदं करोमि।आत्माकरो
त्वात्मनेइइदं केरिष्येभेषजं।इदंमेविश्वभेषजा।अश्विनाप्रावतं
युवं।इदमहंसेनायाअभीत्वर्यै॥१॥मुखमपोहामि।सूर्यज्योति

११८

विभाहि। महतइँद्रिभायं। आप्यांयतांघृतयोनिः। अग्निर्हव्यानुम
न्यतां। खमंक्ष्वत्वचंमंक्ष्व। सुरूपंत्वांवसुविदं। पशूनांतेजसा। अ
ग्नयेजुष्टमभिघारयामि। स्योनंतेसदनंकरोमि॥१॥ घृतस्यधा
रयासुशेवंकल्पयामि। तस्मिन्सीदामृतेप्रतितिष्ठ। व्रीहीणांमे
धसुमनस्यमानः। आर्द्रःप्रथस्नुर्भुवनस्यगोपाः। शृतउत्स्नाति
जनितामतीनां। यस्तआत्मापशुषुप्रविष्टः। देवानांविष्ठामनुयो
वितस्थे। आत्मन्वान्सोमघृतवान्हिभूत्वा। देवान्गच्छसुवर्विंदय

जेमानायमहं।२२। भूतिः पृथिव्येरसो मोत्क्रमीत्।।३।। देवाः पितरः पितरो देवाः। योहमस्मि स सन्यजे। यस्यास्मि न तमंतरेमि। स्वं म इष्टं स्वं दत्तं। स्वं पूर्तं स्वं श्रांतं। स्वं हुतं। तस्य मेग्निरुपद्रष्टा। वायुरुपश्रोता। आदित्योनुख्याता।। द्यौः पिता।।४।। पृथिवी माता। प्रजापतिर्बंधुः। य एवास्मि स सन्यजे। मा भेर्मा संविक्था मा त्वा हिंसिषं। मा ते तेजोपक्रमीत्। भरतमुद्धरेमनुषिंच। अवहानानि ते प्रत्यवहास्यामि। नमस्ते अस्तु मा मा हिंसीः।। यद्वहानानि

तेवृघन्। विलोमाकोर्षमात्मनः॥५॥आज्येनप्रत्यनज्मेनत्। त
त्रआप्यायतांपुनः॥अज्मांयोयवमात्रात्। आव्याधात्कृत्स्नतामि
दं।मारुरुपामयुक्तस्य।स्रुद्वं स्विष्टमिदं हविः॥मन्तुनाहुष्टांघृ
तपदीं।मित्रावरुणसमीरितां।दक्षिणार्धादसंभिंदन्।अवद्यां
म्येकृतोमुखं॥६॥इडेभागंजुषस्वनः॥जिन्वगाजिन्वावतः। त
स्यास्तेभक्षिवाणस्याम।सर्वात्मानःसर्वगणाः॥ब्रध्नपिन्वस्व।दद
तोमेमाक्षायि।कुर्वतोमेमोपदसत्।दिशांक्लृप्तिरसि।दिशोमे

र॰
१०

कस्यं तां। कस्यं तां मे दिवः॥७॥ दैवीभ्य मानुषीभ्य। अहोरात्रे मेक
स्येतां। अर्द्धमासा मेकस्यं तां। मासा मेकस्यं तां। ऋतवो मेकस्यं तां।
संवत्सरो मेकस्यतां। कृत्तिरस्तिकस्यतां मे। आयूंनां त्वायणपाले
भ्यः। चतुर्भ्यो अमृतेभ्यः। इदं भूतस्याध्यक्षेभ्यः॥८॥ विधेमहविषा वयं। भजतां भागीभागं। माभागो भक्त। निरभागं भजामः। अ
पस्सिञ्च। ओषधीर्जिन्व। द्विपात्पाहि। चतुष्पादव। दिवो वृष्टिमेरय
। ब्राह्मणानामिदं हविः॥९॥ सोम्यानां सोमपीथिनां। निर्भक्तो ब्रा

१२०

क्षणः। नेहा ब्रा॑ह्मणस्या॑स्ति। समं॑क्तां बुर्हिर्हृविषा॑ घृतेन॑। समा॑दि॒
त्यैर्वसु॑भिः सं मुरुद्भिः। समिं॑द्रेण विश्वे॑भिर्देवेभि॑रंक्तां। दिव्यं न
भो॑ गच्छतु यत्स्वाहा॑। इंद्रा॒णी वा॑ विधवा भूयासं। अदि॑तिरिव सुपु
त्रा। अस्थूरि त्वा गार्ह॑पत्य॥१०॥ उप॒ निषदे॑ सुप्रजास्त्वाय॑। संपत्नी
पत्या॑ सुकृतेन॑ गच्छतां। यज्ञस्य॑ युक्तौ धुर्या॒वभूतां। संजा॒ना॒नौ वि
जहता॒मरा॑तीः। दिवि ज्योति॑रजरमार॑भेतां। दश॑ ते तनुवो॑ यज्ञ
यज्ञि॑याः। ताः प्री॒णा॒तु यज॑मानो घृतेन॑। नारिष्ठयोः प्रशि॒षमीड॑मा

नः। देवानां देव्ये प्रियजमानो मर्तो भूत्। यं वां देवा अकल्पयन्॥१॥
॥ ऊर्जो भागं शतक्रतू। एतद्वां तेन प्रीणानि। तेन तृप्यतमं हहौ।
। अहं देवानां सुकृतामस्मि लोके। ममेदमिष्टं न मिथुर्भवाति। अहं
नारिष्ठावनु यजामि विद्वान्। यदाभ्यामिंद्रो अदधाद्भागधेयं। अदि
रस्तद्वत देवसोम। अस्मिन्यज्ञे मरुतो मृडता नः। मा नो विदद्
भिभा मो अशस्तिः॥१२॥ मा नो विदद्वृजना द्वेष्यां या। ऋषभं वाजिनं
वयं। पूर्णमासं यजामहे। स नो दोहतां सुवीर्यं। रायस्पोषं सहस्

१२१

स्त्रिणं। प्राणाय सुराधसे। पूर्णमासाय स्वाहा। अमावास्या सुभगा सु
शेवा। धेनुरिव भूय आप्यायमाना। सा नो दोह ताꣳ सुवीर्यं रायस्पो
षꣳ सहस्त्रिणं। अपानाय सुराधसे। अमावास्यायै स्वाहा। अभिस्त
णीहि परिधेहि वेदिं। जामिं माहिꣳसीरमुया शयाना। होतृषदना ह
रिताः सुवर्णाः। निष्का इमे यजमानस्य ब्रध्ने॥ १३॥ अभात्रव्यै क रो
मिक्र मीत्सुतात्मनं एकुतो मुखां मुदिशो ध्यक्षेभ्यो हविर्गाहिं पत्या
कस्य पुन्नत्वात्तिः सा नो दोह ताꣳ सुवीर्यꣳ स हच्च॥ ५॥ परिस्तृणी

महतो भूतस्य पते। ब्रह्माणं त्वा वृणी महे। अहं भूपतिरहं भुवनपतिः। २

त परिधत्ताग्निं। परिहितोग्निर्यजमानं भुनक्तु। अपाꣳ रस ओषधीनाꣳ सुवर्णः। निष्काइमे यजमानस्य संतु कामदुघाः। अमुत्रामुष्मिंल्लोके। भूपतिर्भुवनपतिः॥ अहं महतो भूतस्य पतिः॥१॥ देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि। देव सवितरेतं त्वा वृणते। बृहस्पतिं दैव्यं ब्रह्माणं। तदहं मनसे प्रब्रवीमि। मनो गायत्रिये। गायत्री त्रिष्टुभे। त्रिष्टुब्जगत्यै। जगत्यनुष्टुभे। अनुष्टुक्पङ्‌क्त्यै। पंक्तिः प्रजापतये॥२॥ प्रजापतिर्विश्वेभ्यो देवेभ्यः। विश्वेदेवा बृ

१२२

हस्पतये। बृहस्पतिर्ब्रह्मणे। ब्रह्म भूर्भुवः सुवः। बृहस्पतिर्देवानां ब्र
ह्मा। अहं मनुष्याणां। बृहस्पते युक्तं गोपाय। इदं तस्मै हव्यं करोमि। यो
वो देवाश्चरति ब्रह्मचर्यं। मेधावी दिक्षु मनसा तपस्वी॥१॥ अंतर्दूतश्च
रति मानुषीषु। चतुःशिखंडा युवतिः सुपेशाः। घृतप्रतीका भुवनस्य
मध्ये। मर्मृज्यमाना महते सौभगाय। मह्यं धुक्ष्व यजमानाय कामान्।
भूमिर्भूत्वा महिमानं पुपोष। ततो देवी वर्धयते पयांसि। यज्ञिया य
ज्ञं विचयंति शं च। ओषधीरापः इह शक्करीश्च। यो मा हृदा मनसा य

श्च वाचा॥४॥ यो ब्रह्मणा कर्मणा द्वेष्टि देवाः। यः श्रुतेन हृदयेनेष्यता
च। तस्येन्द्र वज्रेण शिरश्छिनद्मि। ऊर्णम्रदसं प्रथमानꣳ स्योनं। देवे
भ्यो जुष्टꣳ सदनाय बर्हिः। सुवर्गे लोके यजमानꣳ हि धेहि। मां नाक
स्य पृष्ठे परमे व्योमन्। चतुःशिखण्डा युवतिः सुपेशाः। घृतप्रती
का वयुनानि वस्ते। सा स्तीर्यमाणा महते सौभगाय॥५॥ सा मे धु
क्ष्व यजमानाय कामान्। शिवा च मे रग्मा चैधि। स्योना च मे सुषदा
चैधि। ऊर्जस्वती च मे पयस्वती चैधि। इषमूर्जं मे पिन्वस्व। ब्रह्म ते

ओं मे पिन्वस्व। क्षत्रमोजो मे पिन्वस्व। विशं पुष्टिं मे पिन्वस्व। आयु
रन्नाद्यं मे पिन्वस्व। प्रजां पशून्मे पिन्वस्व॥६॥ अस्मिन्यज्ञ उपभृ
द्य इन्नु मे। अविक्षोभाय परिधीं दधामि। धर्त्ता धरुणो धरीयान्। अ
ग्निर्द्वेषांसि निरितो नुदाते। विछिन्दन्विधृती भ्यां सपत्नान्
जाता भ्रातृव्या न्ये च जनिष्यमाणाः। विशो यंत्राभ्यां विधमाम्येना
न्। अहं स्वानामुत्तमो सानि देवाः। विशो यंत्रे नुदमाने अरातिं। वि
श्वं पाप्मानममतिं दुर्मरायुं॥७॥ सीदंती देवी सुकृतस्य लोके। ध

तीस्थो विधृतौ स्वधृतौ। प्राणान्मयि धारय तं। प्रजां मयि धारय तं
। पशून्मयि धारय तं। अयं वस्तरउभयस्य धर्त्ता। धर्त्ता प्रियाजानां
मुतान्नेयाजानां। स दाधार समिधो विश्वरूपाः। तस्मिन्स्तनु चो अध्या
सादयामि। आरोह पथो जुकुदेवयानानां ॥५॥ यत्र र्षयः प्रथम
जाये पुराणाः। हिरण्यपक्षाजिरा संभृतांगा। वहासि मा सुकृतां
यत्र लोकाः। अवाहं बाधउ पभृतां सपत्नान्। जाता भ्रातृव्यान्ये
चेजनिष्यमाणाः। होहैयेतन्गसुडघामि वघेनु। अहमुत्तरो भूया १२४

सं।अधरे मत्सपत्नाः।यो मां वाचा मनसा दुर्मरायुः।हृदाराती या
द्भिदासेदग्ने।९।इदमस्य चित्तमधरं ध्रुवायाः।अहमुत्तरो भूया
सं।अधरे मत्सपत्नाः।ऋषभोसि शाक्वरः।घृताचीनाः सूनुः।प्रि
येण नाम्ना प्रिये सदसि सीद।स्योनो मे सीद सुषदः पृथिव्यां।प्रथ
यि प्रजया पशुभिः सुवर्गे लोके।दिवि सीद पृथिव्यामंतरिक्षे।अ
हमुत्तरो भूयासं।।१०।।अधरे मत्सपत्नाः।इयं स्थाली घृतस्य पू
र्णा।अच्छिन्नपयाः शतधार उत्सः।मारुतेन शर्मणा दैव्येन।यज्ञो

सिसर्वतः श्रितः। सर्वतो मां भूतं भविष्यच्छ्रयतां। शतं मे संत्वाशि
षः। सहस्रं मे संतु सूनृताः। इरावतीः पशुमतीः। प्रजापतिरसि
सर्वतः श्रितः॥३३॥ सर्वतो मां भूतं भविष्यच्छ्रयतां। शतं मे संत्वा
शिषः। सहस्रं मे संतु सूनृताः। इरावतीः पशुमतीः। इदमिंद्रिय
ममृतं वीर्यं। अनेनेंद्राय पशवोचिकित्सन्। तेन देवा अवतोप
मां। इहेषमूर्जं यशः। सहओजः सनेयां श्रृतं मयि श्रयतां। यस्पृथि
वीम चर्मत्स्त्वविंष्टः॥१२॥ येनासिंचद्बलमिंद्रे प्रजापतिः। इदं तच्छु

ॐ मधु वाजिनीवत् । ये नो परिष्ठा दधिनोन्महेन्द्र । इधि मां धिनोतु ।
अयं वेदः पृथिवीमन्वविंदत् । गुहा सतीं गहने गह्वरेषु । स विंद
तु यजमानाय लोकं । अछिद्रं यज्ञं भूरिकर्मा करोतु । अयं यज्ञः
समस्तसद्धविष्मान् । ऋचा सामा यजुषा देवताभिः ॥१३॥ तेन लो
कान्स्सूर्यवतो जयेम । इन्द्रस्य सख्यममृतत्वमस्यां । यो नः कनीयइ
हकामयाते । अस्मिन्यज्ञे यजमानाय मह्यं । अप तमिंद्राग्नी भुवनां
नुदेतां । अहं प्रजां वीरवतीं विदेय । अग्ने वाजजित् । वाजं त्वा सरि

ष्यंतं।वाजंजेष्यंतं।वाजिनंवाजजितं॥१४॥वाजजित्यायैसंमार्ज्मि।
अग्निमन्नादमन्नाद्याय।उपहूतोद्यौःपिता।उपमांद्यौःपिताह्वय
तां।अग्निराग्नीध्रात्।आयुषेवर्चसे।जीवात्वैपुण्याय।उपहूताप्ट
थिवीमाता।उपमांमाताप्टथिवीह्वयतां।अग्निराग्नीध्रात्॥१५॥आ
युषेवर्चसे।जीवात्वैपुण्याय।मनोज्योतिर्जुषतामाज्यं।विच्छिन्नंय
ज्ञंसमिमंदधातु।बृहस्पतिस्तनुतामिमंनः।विश्वेदेवाइहमाद
यंतां।यंतेअग्नआवृश्चामि।अहंवाक्षिपितश्चरन्।प्रजांचतस्य

मूलं च । नीचैर्दैवानिर्दष्टत ॥१६॥ अग्ने यो नोऽभिदासति । समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतः । मा तस्योच्छेषि किंचन । यो मां द्वेष्टि जातवेदः । यं चाहं द्वेष्मि यश्च माम् । सर्वां स्तानग्ने संदह । यां श्चाहं द्वेष्मि ये च माम् । अग्ने वाजजित् । वाजं त्वा ससृवांसम् ॥१७॥ वाजं जिगिवांसम् । वाजिनं वाजजितम् । वाजजित्यायै संमार्ज्मि । अग्निमन्नादमन्नाद्याय । वेदिर्बर्हिः । शृतं हविः । इध्मः परिधयः स्रुचः । आज्यं यज्ञ ऋचो यजूंषि । याज्याश्च वषट्काराः । सं मे सन्नतयो नमन्ताम् ।

इ धमुसं नहं नेकुते॥१८॥ द्विवः स्वीलो वं ततः। इ थिव्या अध्युत्थितः।
ते नासहस्त्रकांडेन। द्विषंत रंश्रोचयामसि। द्विषन्मे बहुशोचतु
। ओषधे मोअहं रंस्तुचं। यत्तुन मंस्ते यत्त। नमोनमं श्च ते यत्त। शि
वे नंमेसंतिष्ठस्व। स्योनेनंमेसंतिष्ठस्व॥१९॥ सुभूतेनमेसंतिष्ठ
स्व। ब्रह्म वर्चसेनंमेसंतिष्ठस्व। यत्तस्यर्द्धिमनुसंतिष्ठस्व। उप
ते यत्तु नमः। उपते नमः। उपते नमः। त्रिष्फलीक्रियमाणानां। यो
त्सुंगो अवृशिष्यते। रक्षसां भागधेयं। आपस्तत्प्रवहतादितः॥ ॥१२७॥

२०॥ उलूखले मुसले यच्च शूर्पे। आशिश्लेष दृषदि यत्कपाले। अव
प्रुषो विप्रुषः संयजामि। विश्वेदेवा हविरिदंजुषंतां। यज्ञे या विप्रु
षः संति बह्वीः। अग्नौ ताः सर्वाः स्विष्टाः सुहुताजुहोमि। उद्यन्नद्यमि
त्रमहः। सपत्नान्मे अनीनशः। दिवैनान्विद्युताजहि। निम्रोचन्नध
रान्कृधि॥२१॥ उद्यन्नद्य विनो भज। पिता पुत्रेभ्यो यथा। दीर्घायुत्व
स्य हेशिषे। तस्य नो देहि सूर्य। उद्यन्नद्य मित्रमहः। आरोहन्नुत्त
रां दिवं। हृद्रोगं मम सूर्य। हरिमाणं च नाशय। शुकेषु मे हरिमा

२·

पं।रोपृणा को सुदुग्धमसि॥२२॥अयो हारिद्रवेषु मे। हरिमाणं निदध्मसि॥उद्गाद्वयमादित्यः। विश्वेन सहसा सह॥द्विषंतं मम रंधयन्‌। मो अहं द्विषुते रंधं॥यो नः शपादशपतः। यश्च नः शपतः शपात्‌। उषाश्च तस्मै निम्रुक्‌ सर्वं पापं समूहतां॥२३॥यो नः सपत्नो यो रणः। मर्त्तो भिदासति देवाः। इध्मस्येव प्रक्षायतः। मा तस्योच्छेषि किंचन। अवसृष्टः परापत। शारे ब्रह्मसंशिता। गच्छामित्रान्‌ प्रविश। मैषां कं चनोच्छिषः॥२४॥ पतिः प्रजापतये त पुत्रीवाचा सोभ

गायप्रस्नोसि पित्वस्त्वष्टुर्मेरा पुंहैव पानानन्नेतरि सोहमुत्तरोभ्र
यासं प्रजापतिरसि सर्वतः श्रितः त्वविष्टं देवताभिर्वर्जिताजितंप्र
थिवीक्रयतामग्निराग्नीध्राहश्वतससवाङ्सङ्कृतेस्योनेनमे
संतिष्ठस्वेतः कश्चिद्धमस्यहतामुष्येच ॥६॥ सक्षेदं पञ्चस्य। विध
र्तरिदं पञ्चस्य। नाकेदं पञ्चस्य। रमतिः पनिष्ठा। ऋतं वर्षिष्ठं। अमृता
यान्याकः ॥ सूर्योवरिष्ठो अक्षभिर्विभाति। अनुद्यावापृथिवीदे
वपुत्रे। दीक्षासितपसो योनिः। तपोसि ब्रह्मणोयोनिः ॥१॥ ब्रह्मा

ते॰
१९॥

सि क्षत्रस्य योनिः। क्षत्रमसि क्षत्रस्य योनिः। ऋतमसि भूरारभे। श्र
द्धां मनसा। दीक्षां तपसा। विश्वस्य भुवनस्याधिपत्नी। सर्वे कामा
यजमानस्य सन्तु। वातं प्राणं मनसान्वारभामहे। प्रजापतिं यो भु
वनस्य गोपाः। स नो मृत्योस्त्रायतां पात्वꣳहसः॥ २॥ ज्योग्जीवा जु
रामशीमहि। इन्द्र शाकर गायत्रीं प्रपद्ये। तां ते युनज्मि। इन्द्र शाक्
र त्रिष्टुभं प्रपद्ये। तां ते युनज्मि। इन्द्र शाकर जगतीं प्रपद्ये। तां ते
युनज्मि। इन्द्र शाकरानुष्टुभं प्रपद्ये। तां ते युनज्मि। इन्द्र शाकर पं

ड्ढिं॒ष्वपंथे॥२॥ तांते॑युनज्मि। आहंदी॒क्षामं॑रुहमृतस्य॒पत्नीं॑। गा
य॒त्रेण॒छंद॑सा॒ब्रह्म॑णाच। ऋतं॑स॒त्ये॑धायि। स॒त्यमृ॒ते॑धायि। ऋ
तंचमेस॒त्यंचा॑भूतां। ज्योति॑रभूवं॒सुवर॑गमं। सु॒वर्गंलो॒कंनाक॑
स्य॒पृ॒ष्ठं। ब्र॒ध्नस्य॒विष्ट॒पम॑गमं। पृ॒थि॒वीदी॒क्षा॥४॥ तया॒ग्निर्दी॒क्षया॑
दीक्षि॒तः। यया॒ग्निर्दी॒क्षया॑दीक्षि॒तः। तया॑त्वादी॒क्षया॑दीक्षयामि।
अं॒तरि॑क्षंदी॒क्षा। तया॑वा॒युर्दी॒क्षया॑दीक्षि॒तः। यया॑वा॒युर्दी॒क्षया॑
दीक्षि॒तः। तया॑त्वादी॒क्षया॑दीक्षयामि। द्यौर्दी॒क्षा। तया॑दि॒त्योदी॒क्ष

यो हविः क्षितः। ययाग्निस्त्वो हविः क्षयो हविः क्षितः॥५॥ तयो त्वा हविः क्षयो हविः क्षयामि। दिशो हविः क्षा। तयो चन्द्रमो हविः क्षयो हविः क्षितः। यया चन्द्रमा हविः क्षयो हविः क्षितः। तयो त्वा हविः क्षयो हविः क्षयामि। आपो हविः क्षा। तया वरुणो राजा हविः क्षयो हविः क्षितः। यया वरुणो राजा हविः क्षयो हविः क्षितः। तयो त्वा हविः क्षयो हविः क्षयामि। ओषधयो हविः क्षा॥६॥ तया सोमो राजा हविः क्षयो हविः क्षितः। यया सोमो राजा हविः क्षयो हविः क्षितः। तयो त्वा हविः क्षयो हविः क्षयामि। वाग्हविः क्षा। तयो ब्राणो हविः क्षयो हविः क्षितः

१२०

।यया प्राणो दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। पृथिवी
त्वा दीक्षमाणमनुदीक्षतां। अंतरिक्षं त्वा दीक्षमाणमनुदीक्षतां
।द्यौस्त्वा दीक्षमाणमनुदीक्षतां॥७॥ दिशस्त्वा दीक्षमाणमनुदी
क्षतां। आपस्त्वा दीक्षमाणमनुदीक्षतां। ओषधयस्त्वा दीक्षमा
णमनुदीक्षतां। वाक्त्वा दीक्षमाणमनुदीक्षतां। ऋचस्त्वा दीक्ष
माणमनुदीक्षतां। सामानि त्वा दीक्षमाणमनुदीक्षतां। यजूꣳषि
त्वा दीक्षमाणमनुदीक्षतां। अहश्च रात्रिश्च। कृषिश्च वृष्टिश्च। त्वि

षिश्चापश्चितिश्च॥८॥ आपश्चौषधयश्च। ऊर्क्सूनृता च। तास्त्वा
दीक्षमाणमनुदीक्षन्तां। स्वेह क्षेह क्षपितेह सीद। देवानाꣳ सुम्नो
महते रणाय। स्वासस्थः तनुवा संविशस्व। पितेवैधि सूनव आ
सुशेवः। शिवो मा विशिव मा विश। सत्यं म आत्मा। श्रद्धा मे क्षितिः॥
९॥ तपो मे प्रतिष्ठा। सवितृप्रसूता मा दिशो दीक्षयन्तु। सत्यमस्मि
।अहं त्वदस्मि मदसि त्वमेतत्। ममासि योनिस्तव योनिरस्मि। म
मैव सन्वह हव्यान्यग्ने। पुत्रः पित्रे लोककृज्जातवेदः। आजुकानः

सुप्रतीकः पुरस्तात्। अग्नेस्त्वा योनिमासीद साध्या। अस्मिन्सधस्थे
अध्युत्तरस्मिन्॥१०॥ विश्वेदेवा यजमानश्च सीदत। एकमिषे वि
ष्णुस्त्वान्वेतु। द्वेऊर्जे विष्णुस्त्वान्वेतु। त्रीणि व्रताय विष्णुस्त्वान्वे
तु। चत्वारि मायोभवाय विष्णुस्त्वान्वेतु। पंच पशुभ्यो विष्णुस्त्वा
न्वेतु। षड्रायस्पोषाय विष्णुस्त्वान्वेतु। सप्त सप्तभ्यो होत्राभ्यो वि
ष्णुस्त्वान्वेतु। सखायः सप्तपदाअभूम। सख्यं तेगमेयं॥११॥ स
ख्यात्ते मायोषं। सख्यान्मे मायोष्ठाः। सासि सुब्रह्मण्ये। तस्यास्त ए

तै॰
३२

थिवीपादः॥ सासिसुब्रह्मण्ये॥ तस्यास्तेंतरिक्षंपादः॥ सासिसुब्र
ह्मण्ये॥ तस्यास्तेद्यौःपादः॥ सासिसुब्रह्मण्ये॥ तस्यास्तेदिशःपाद
ः॥१२॥ परोरजास्तेपंचमःपादः॥ सानइषमूर्जंधुक्ष्व॥ तेजइंद्रियं
॥ ब्रह्मवर्चसमन्नाद्यं॥ विमिमेत्वापयस्वतीं॥ देवानांधेनुंसुदुघा
मनपस्फुरंतीं॥ इंद्रःसोमंपिबतु॥ क्षेमोअस्तुनः॥ इमांनराःकृणुत
वेदिमेत्य॥ वसुमतींरुद्रवतीमादित्यवतीं॥१३॥ वर्ष्मंदिवः॥ ना
भाप्टथिव्याः॥ यथायंयजमानोनरिष्येत्॥ देवस्यसवितुःसवे॥ च

१३२

तुः त्रिखंडा युवतिः सुपेशाः। घृतव्रतीकाभुवनस्य मध्ये। तस्यां सुपर्णा वृषणा निषेदतुः यत्र देवा दधिरे भागधेयं। अपुत्रं स्त्रं ध यंतु दुह। अपच्चुक्राणि वर्त्तय। गृहं सोमस्य गच्छतं। नवा उ वे तन्म्रियसे न रिष्यसि। देवां इदेषि पथिभिः सुगेभिः। यत्रयंति सुकृतो नापि दुष्कृतः। तत्र त्वा देवः सविता दधातु॥ १४॥ ब्रह्मणो यो निरं हंसः पृक्तिं प्रपद्ये दीक्षाय यादित्यो दीक्षयादीक्षित स्तया त्वा दीक्षयादीक्षया मयोर्ष योदीक्षा दर्या स्त्वादीक्षे मा णमनुदी

क्षताम पचितिश्वाक्षितिरुत्तरस्मिन्नामेयुंहिरुः पादआदित्यवं
तीवर्त्तयपंचवच॥७॥यद्दस्यपारेरजसः। शुक्रंज्योतिरजायत। तं
नःपर्षदतिद्विषः। अग्नेवैश्वानरस्वाहा। यस्मान्नीषावारिष्ठाः। त
तोनोअभयंकृधि। प्रजाभ्यःसर्वाभ्योमृड। नमोरुद्रायमीढुषे
। यस्मान्नीषान्यषदः। ततोनोअभयंकृधि॥९॥प्रजाभ्यःसर्वाभ्यो
मृड। नमोरुद्रायमीढुषे। उदुस्रतिष्ठप्रतितिष्ठमारिषः। मेमंयज्ञं
यजमानंचरीरिषः। सुवर्गेलोकेयजमानंहिधेहि। शंन्नएधि

१२१

द्रुपदे वैरं चतुष्पदे। यस्माज्जाता वे पिशाः पुत्रा यिशाः सुमतो स्याः।
ततो नो अभयं कृधि। प्रजाभ्युः सर्वाभ्यो मृड। नमो रुद्राय मीढुषे
॥२॥ यइदमकः। तस्मै नमः। तस्मै स्वाहा। न वाउ वेतन्म्रियसे। आ
शां नां त्वा विश्वा आशाः। युत्तस्य हिस्य कृत्वियो। इंद्राग्नीचेतन
स्य च। कृता कृतस्य तत्पतं। अकृतस्य कृतस्य च। कृतस्य चाकृ
तस्य च। अकृतस्य कृतस्य च। इंद्राग्नी अस्य सोमस्य। वीतंपिब
तं जुषेथां। मा यजमानं तमो विदत्। मर्त्विजो मोइमाः प्रजाः। मा

यःसोममग्निमपिबात्।सं सं सहमुभयंकृतं॥२॥कृष्णि मीढुषे कृत
स्य च सत्तचे॥८॥अनागसस्त्वा वयं।इंद्रेण प्रेषितावपीवायु
षे अस्त्वं शर्म भूः।मित्रस्ते अस्तु शर्म भूः।वरुणस्ते अस्तु शर्म
भूः।अपांक्षया कृतस्य गर्भः।भुवनस्य गोपाः।श्येना अतिथ
यः।पर्वतानां ककुभः।प्रयुतो न पातारः।वत्मुनेंद्रं ऋयता घो
षेणामीवां श्चातयत॥९॥युक्तास्थ वहता देवा ग्रावाण इंदुरिं
द्र इत्यवादिषुः।एंद्रमचुच्यवुः।परमस्याः परावतः।आस्मात्सध

स्यात्। और्वोरोरुन्तरिक्षात्। आसुभूतमसुषन्तु॥ ब्रह्मवर्चसं ममआ
सुषन्तु॥ समरे रक्षांस्यवधिषुः। अपहतं ब्रह्मज्यस्य। वाङ्म
त्वा मनश्च श्रीणीतां॥२॥ प्राणश्च त्वापानश्च श्रीणीतां। चक्षु
श्च त्वा श्रोत्रं च श्रीणीतां। दक्षश्च त्वा बलं च श्रीणीतां। ओजश्च
त्वा सहश्च श्रीणीतां। आयुश्च त्वा जरा च श्रीणीतां। आत्मा च
त्वा तनूश्च श्रीणीतां। शृतोसि शृतंकृतः। शृताय त्वा शृतेभ्यस्त्वा
। यमिन्द्र माकुर्वरुणं यमाकुः। यंमित्र माकुर्यं मुसुत्य माकुः॥३॥

योदेवानांदेवतमस्तपोजाः॥ तस्मैत्वातेभ्यस्त्वा। मयित्यदिंद्रियंम
हत्। मयिदक्षोमयिक्रतुः॥ मयिधायिसुवीर्यं। त्रिशुग्घर्मोविभातु
मे। आकूत्यामनसासह। विराजाज्योतिषासह। यज्ञस्यपयसासह
। तस्यदोहमशीमहि॥४॥ तस्यसुम्नमशीमहि। तस्यभक्षमशीम
महि। वाग्जुषाणासोमस्यतृप्यतु। विश्वोजनान्नसमित्र। यस्मान्न
जातःपरोअन्योअस्ति। यआविवेशभुवनानिविश्वा। प्रजापतिः
प्रजयासंविदानः॥ त्रीणिज्योतींषिसचतेसषोडशी। एषब्रह्मा

१२५

यत्कृत्विर्यः। इंद्रो नामश्रुतो गृणे॥५॥ त्वते मुहेद्विद्यर्थेन्द्राङ्गसिषुं
हरी। यत्कृत्विर्यः। त्वते वच्चे। वृनुषोहर्यतं मदं। इंद्रो नाम घृतं न
यः। हरिभिश्चारु सेचते। श्रुतो गृण आ त्वा विशंतु। हरिवर्पसं
गिरः। इंद्राधिपतेधिपतिस्त्वं देवानामसि। अधिपतिं मां। आयु
ष्मंतं वर्चस्वंतं मनुष्येषु कुरु॥६॥ इंद्रस्य संम्राड्वरुणश्च राजा
। तौ ते भक्षं चक्रतुरग्र एतं। तयोरनुभक्षं भक्षयामि। वाग्जुषा
णा सोमस्य तृप्यतु। प्रजापतिर्विश्वकर्मा। तस्य मनो देवं यज्ञेन रा

धया सं। अ र्थे गा अ स्य जं हि तः। अ वु सा नं प ते वु सा नं मे वि दं हा न मो रु
द्रा यं वा स्तो ष्य तये। आ यं ने वि द्र वं णे॥ ७॥ उ द्या नं य स रा यं णो आ
वर्त्तं ने वि वर्त्तं ने। यो गो पा प ति त ऽ कु वे। या न्य पा मि त्या न्य द्वे तो ना
न्य स्मि। पु म स्यं वु लि ना च रा मि। इ हे व सं तः स ति त या त या मः। जी
वा जी वे भ्यो नि ह रा म ए न त्। अ नृ णा अ स्मि न्न नृ णाः प र स्मि न्
तृ ती ये लो के अ नृ णाः स्या म। ये दे व या ना उ त पि तृ या णाः॥ ८॥ स
र्वा न्प थो अ नृ णा आ क्षी ये म। इ द मू नु श्रे यो व सा न मा गं न्मा। शि

देनो द्यावापृथिवी उभे इमे । गोमद्धनवदश्ववदूर्जस्वत् । सुवी
रावीरैरनुसंचरेम । अर्कैः पवित्रैरजसो विमानैः । पुनाति
देवानां भुवनानि विश्वा । द्यावापृथिवी पयसा संविदाने । घृतंदु
हाते अमृतं प्रपीने । पवित्रमर्कैरजसो विमानैः । पुनाति देवा
नां भुवनानि विश्वा । सुवर्ज्योतिर्यशो महत् । अशीमहि गाधमु
त प्रतिष्ठां ॥ १८ ॥ चातयत श्रीणीताᳪँ सत्यमाकुरशीमहि ग्राणे
कुरुविक्रवणे पितुर्याणामर्कैरजसो विमानैस्त्रीणि च ॥ १९ ॥ उद

नं॰ ८

स्तांसीत्सविता मित्रो अर्यमा। सर्वान्नमित्रान्वधीद्युगेन। बृहन्तं मा
मकरद्वीरवंतं। रथंतरे श्रयस्व स्वाहा पृथिव्यां। वामदेव्ये श्रयस्व
स्वाहांतरिक्षे। बृहति श्रयस्व स्वाहा दिवि। बृहता त्वोपस्तभ्नोमि
। आ त्वा ददे यशसे वीर्याय च। अस्मास्वघ्निया यूयं दधाथेन्द्रियं
पयः। यस्ते द्रप्सो यस्त उद्रुषः।१। दैव्यः केतुर्विश्वं भुवनमावि
वेश। स नः पात्वरिष्ट्यै स्वाहा। जनुमा सर्वो प्रजोयमेतु। विश्वे दे
वा मरुतः सामार्कः। आश्विपुः छंदांसि निविदो यज्ञं ऋषि। अस्मो।

११७

पृथिव्ये पघृत्तियं। प्रजापतेर्वर्त्तनिमनुवर्त्तस्व। अनुवीरैरनुरा
ध्यामगोभिः। अन्वश्वैरनुसर्वैरुपुष्टैः। अनुप्रजयान्विंद्रियेण॥
२॥ देवानोयज्ञमृतुधानयंतु। प्रतिक्षत्रेप्रतितिष्ठामिराष्ट्रे। प्रत्य
श्वेषुप्रतितिष्ठामिगोषु। प्रतिप्रजायांप्रतितिष्ठामिभव्ये। वि
श्वंमुन्याभिवावृधे। तद्दन्यस्यामधिश्रितं। दिवेचविश्वकर्मणे।
पृथिव्यैचाकरंनमः। अस्कांद्यौःपृथिवीं। अस्कानृषभोयुवागाः
॥३॥ स्कन्नेमाविश्वाभुवना। स्कन्नोयज्ञःप्रजनयतु। अस्कान

त:
१९

जं त्रि त्रा जं नि। आ स्कं न्ना ज्ज्ञो य तृ वृ षा। स्कं न्ना स्त्र जं नि षी म हि
। ये दे वा ये षा मि दं भो ग धे यं बु भू व। ये षां त्र यो जा तु ला न्द्र या जा:
। इं द्र ज्ये ष्ठे भ्यो व रु ण रा ज भ्यः। अ ग्नि हो तृ भ्यो दे वे भ्यः स्वा हा।
उ त त्या नो दि वो म ति:॥४॥ अ दि ति रु त्या ग म त्। सा शं ता ती म
ये स्क र त्। अ प स्त्रि धः। उ त त्या दै व्या भि ष जा। शं नः स्क र तो अ श्वि
ना। यु यां ता म स्म त्र पः। अ प स्त्रि धः। श म ग्नि र ग्नि भि स्क र त्। शं न
स्त प तु सूर्यः। शं वा तो वा त्व र पाः॥५॥ अ प स्त्रि धः। त दि स्तु हं न

विचिकेतविद्वान्। यमृतः पुनरप्येतिजीवान्। त्रिवृद्यजुर्वे
नस्परपृहत्। जीवोगर्भोनमृतः सजीवात्। वृत्यसेपिपीष
ते। विश्वानिविद्वषेभर। अरंगमायुजर्मवे। अपश्यादुध्वनेन
रे। इंद्रुरिंद्रुमवोगात्। इंद्रोरिंद्रोपात्। तस्यतइंद्रविंद्रपीतस्य
मधुमतः। उपद्रुतस्योपद्रुतोभक्षयामि॥६॥ उदर्षइंद्रियेण
गामृतिररूपाअंगाणिच॥१०॥ ब्रह्मप्रतिष्ठामनसोब्रह्मवा
चः। ब्रह्मयज्ञानांहविषामाज्यस्य। अतिरिक्तंकर्मणोयच्चहीं

तृ॰
२९

नः। युक्तः पर्वाणि ऋत्विर न्नैति कल्पयन्न्। स्वाहा कृताऽकृति रेतु देवा
न्। आश्रावितम त्याश्रावितं। वषट् कृतम त्यन्नं कं च यज्ञे। अतिरि
क्तं कर्मणो यच्च हीनं। यज्ञः पर्वाणि ऋत्विर न्नैति कल्पयन्न्। स्वाहा
कृताऽकृति रेतु देवान्॥१॥ यद्वो देवा अतिपादयानि। वाचा च प्रयुक्ते
यं तं देव हेडनं। अरायो अस्माँ अभिदुच्छुनायते। अन्यत्रास्म
न्मरुत स्तं निधेतन। तृतं म आपस्तदुता यतेपुनः। स्वादिष्ठा
धीति रुचथाय शस्यते। अयं समुद्र उत विश्वभेषजः। स्वाहा

१२९

हृतस्युसमुत्तपृणुतभुविः। उदुयंतमसस्परि। उदुत्यंचित्रं॥
२॥ इमंमेवरुणतत्वायामि। त्वन्नोअग्नेसत्वंन्नोअग्ने। त्वमग्ने
अयासिप्रजापते। इमंजीवेभ्यःपरिधिंदधामि। मेषान्नुगाद
परोअर्धमेतं। शतंजीवंतुशरदःपुरूचीः। तिरोमृत्युंदधतांप
र्वतेन। इष्टेभ्यःस्वाहावषडनिष्टेभ्यःस्वाहा। भेषजंदुरिष्ट्यैस्वा
हानिष्कृत्यैस्वाहा। दौराध्यैस्वाहादेवीभ्यस्तनूभ्यःस्वाहा॥३॥ ऋ
द्ध्यैस्वाहासमृध्यैस्वाहा। यतइंद्रभयामहे। ततोनोअभयंकृधि

त॰
५०

। मघवंछुग्धि तव तन्न ऊतये। विद्विषो विमृधो जहि। स्वस्तिदा
विशस्पतिः। वृत्रहा विमृधो वशी। वृषेंद्रः पुर एतु नः। स्वस्तिदा
अभयंकरः। आभिर्गीर्भिर्यदतो न ऊनं॥५॥ आप्यायय हरि
वो वर्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि। भूयिष्ठभाजो
अध ते स्याम। अनाज्ञातं यदाज्ञातं। यज्ञस्य क्रियते मिथु। अग्ने त
दस्य कल्पय। त्वं हि वेत्थ यथातथं। पुरुषसंमितो यज्ञः। यज्ञः
पुरुषसंमितः। अग्ने तदस्य कल्पय। त्वं हि वेत्थ यथातथं। य

त्वो कृत्रा मनसा दीनदक्षान । यज्ञस्य मन्वते मर्त्यासः । अग्निष्ट
द्धोता क्रतुविद्विजानन । यजिष्ठो देवाऽꣳ ऋतुशो यजाति ॥ ५ ॥ दे
वाऽꣳस्त्रिवृत्तन्तुभ्यः स्वाहोनं पुरुषसंमितोग्ने तदस्य कल्पयुपंचे
च ॥ ११ ॥ यद्देवा देवहेडनं । देवासश्चकृमा वयं । आदित्यास्तस्मा
न्मा मुंचत । ऋतस्यर्तेन मामुत । देवा जीवनकाम्या यत् । वाचा
नृतमूदिम । अग्निर्मा तस्मादेनसः । गार्हपत्यः प्रमुंचतु । दुरि
ता यानि चकृम । करोतु मामनेनसं ॥ ९ ॥ ऋतेन द्यावापृथिवी

तः
५१

।कृतेन त्वँ सरस्वति। कृतान्मा मुंचताँ हंसः। यदन्यकृतमारि
म। सजातशँसादुत वा जामिशँसात्। ज्यायसः शँसादुत
वा कनीयसः। अनाज्ञातं देवकृतं यदेनः। तस्मात्त्वमस्माँ जातवे
दो मुमुग्धि। यद्वाचा यन्मनसा। बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां॥
२॥शिश्नैर्यदनृतं चकृमा वयं। अग्निर्मा तस्मादेनसः। यद्धस्ताभ्यां
चकर किल्बिषाणि। अक्षाणां वग्नुमुपजिघ्नमानः। दूरेपश्या च
राष्ट्रभृच्च। तान्यप्सरसावनुदत्तामृणानि। अदीव्यन्नृणं यदहं च

कारा।य द्दाहास्यन्संजगा राजनेभ्यः। अग्निर्मा तस्मादेनसः
। यन्मयि माता गर्भे सति ॥२॥ एनश्चकार यत्पिता। अग्निर्मा
तस्मादेनसः। यदापिपेष मातरं पितरं। पुत्रः प्रमुदितो धय
न्। अहिंसितौ पितरौ मया तत्तदग्ने अनृणो भवामि। य
दंतरिक्षं पृथिवीमुत द्यां। यन्मातरं पितरं वा जिहिंसिम।
अग्निर्मा तस्मादेनसः। यदाशसा निःशसा यत्पराशसा ॥३
॥ यदेनश्चकृमा नूतनं यत्पुराणं। अग्निर्मा तस्मादेनसः। अ

तिक्रामा मिडुरितं यरेनेः । जहोमि रित्रं परमे सधस्थे । यत्र
यंति सुकृतो नापि दुष्कृतः । तमारोहामि सुकृतां नु लोकं । त्रि
ते देवा अमृजतैतदेनः । त्रितए तन्मनुष्येषु मामृजे । ततो
मा यदि किंचिदानशे अग्निर्मा तस्मादेनसः ॥ ५ ॥ गार्हपत्य
: प्रमुंचतु । दुरिता यानि चकृम । करोतु मामनेनसं । दिवि
जाता अप्सुजाताः । या जाता ओषधीभ्यः । अथो या अग्निजा
आपः । ता नः शुंधंतु शुंधनीः । यदापो नक्तं दुरितं चराम य.

शुद्दिवान्तत्तं नुं यस्तुराणं। हिरण्यवर्णास्तत्र स्तुनीतनः। इमं
मे वरुण तत्वा यामि। त्वन्नो अग्नेस त्वं नो अग्ने। त्वमग्ने अयासि॥६॥ अनेन सर्व मष्टी वज्ञ्यां सुतिपरा। रा सोनुरो स्निर्मात
सा देनसः पुनीत नस्त्रीणि च॥९॥ गा ई पत्यो यज्ञस्ता भ्यां य
न्मयि माता यदापि पेषुयदंतरिक्षं यद्दारा सातिक्रामामि
त्रितेदेवा हिविजाता यदा प इमं मे वरुण तत्वा यामि त्वन्नो
अग्नेस त्वन्नो अग्ने त्वमग्ने अयासि यत्ते ग्रावृष्णा चिच्छिदुः सो

त:
४३

मराजन्। प्रियाण्यंगानि स्वधिता परूंषि। तत्संधत्स्वाज्येनो
त वर्धयस्व। अनागसो अधमित्संक्षयेम। यत्ते ग्रावा बाहुच्यु
तो अचुच्यवुः। नरो यत्ते दुदुहुर्दक्षिणेन। तत्त आप्यायतां
तत्ते निष्ट्यायतां देव सोम। यत्ते त्वचं बिभिदुर्यच्च योनिं। य
दास्थानात्प्रच्युतो वेनसि त्मना। १। त्वया तत्सोम गुप्तमस्तु
नः। सा नः संधासत्परमे व्योमन्। अहाच्छरीरं पयसा समेत्य
। अन्योन्यो भवति वर्णो अस्य। तस्मिन्वयमुपहूतास्तव स्म

॥ आ नो भज सदसि विश्वरूपे । नृचक्षाः सोम उत सुष्वुग स्तु । मा नो वि हासीर्गिर आवृणानः ॥ अनागास्तनुवो वावृ धानः ॥ आ नो रूपं वहतु जायमानः ॥ २२ ॥ उपक्षरंति जुह्वो घृतेन । प्रियाण्यंगानि तव वर्द्धयंतीः ॥ तस्मै ते सोम नम इ द्वषट्‌ च । उप मा राजन्त्सुकृते ह्वयस्व ॥ सं प्राणापानाभ्यां समु चक्षुषा त्वं । सं श्रोत्रेण गच्छस्व सोम राजन् । यत्त आ स्थितं शं रामु तत्ते अस्तु । जानीतां नः संगमने पथीनां । ए

तं ४४

तंजानीतात्परमेव्योमन्॥वृकाः सधस्थाविदरूपमस्य॥
२॥ यदागच्छात्पथिभिर्देवयानैः॥ इष्टापूर्ते कृणुताद्गाविरस्मै॥
अरिष्टो राजन्नगदः परेहि॥ नमस्ते अस्तु चक्षसे रघूयते॥ ना
कुमारो हसह यजमानेन॥ स्वर्गं गच्छतात्परमे व्योमन्॥ अभू
द्देवः सविता वंद्यो नु नः॥ इदानीमह्न उपवाच्यो नृभिः॥ वियो र
त्ना भजति मानवेभ्यः॥ श्रेष्ठं नो अत्र द्रविणं यथा दधत्॥ तन्न
पं नो मित्रावरुणाविहावतं॥ अन्वाहीध्यापामिद्धनः सखाया

।आदित्यानां प्रसितिर्हेतिः।उग्रा ऽतापाष्ठा घृविषा परिणो
वृणक्तु।आप्यायस्वसंते।४॥ त्मनाजायमानोस्य द धुसंचेव च
॥१३॥ यद्धिहृदा क्षेमनसा यच्चं वाचा। यद्वा प्राणैश्चक्षुषा यच्च श्रो
त्रेण। यद्रेतसा मिथुनेनाप्यात्मना।अद्भ्यो लोका दधिरे तेज इं
द्रियं। शुक्रा दीक्षायै तपसो विमोचनीः।आपो विमोक्त्री मयि
तेज इंद्रियं। यदृचा साम्ना यजुषा। पशूनां चर्मकृविषा दिदी
क्षे। यच्छंदोभिरोषधीभिर्वनस्पतौ। अद्भ्यो लोका दधिरे तेज

।·त· ई{illegible}
१४५

इंद्रियं॥१॥ स्रुक्का दीक्षा ये तपसो विमोचनीः। आपो विमोक्त्री
र्मयि तेज इंद्रियं। येन ब्रह्म येन क्षत्रं। येनेंद्राग्नी प्रजापतिः सो
मो वरुणो येन राजा। विश्वे देवा ऋषयो येन प्राणाः। अग्नौ लोका
दधिरे तेज इंद्रियं। स्रुक्का दीक्षा ये तपसो विमोचनीः। आपो वि
मोक्त्रीर्मयि तेज इंद्रियं। अपां पुष्पमस्योषधीनाꣳ रसः। सोम
स्य प्रियं धाम॥२॥ अग्नेः प्रियतमꣳ हविः स्वाहा। अपां पुष्पम
स्योषधीनाꣳ रसः। सोमस्य प्रियं धाम। इंद्रस्य प्रियतमꣳ हविः

स्वाहा। अपांपुष्पमस्योषधीनांꣳरसः। सोमस्य प्रियं धाम। विश्वेषां देवानां प्रियतमꣳहविः स्वाहा। वयꣳसोमव्रते तव। मनस्तनूषु पिप्रतः। प्रजावन्तो अशीमहि॥३॥ देवेभ्यः पितृभ्यः स्वाहा। सोम्येभ्यः पितृभ्यः स्वाहा। कव्येभ्यः पितृभ्यः स्वाहा। देवास इह मादयध्वं। सोम्यास इह मादयध्वं। कव्यास इह मादयध्वं। अनन्तरिताः पितरः सोम्याः सोमपीथात्। अपैतु मृत्युरमृतं न आगन्। वैवस्वतो नो अभयं कृणोतु। पर्णं वनस्पतेरि

:तै.
४६

व॥४॥अभिनःश्रीयतांरयिः।सचंतान्नःशचीपतिः।परं
मृत्योअनुपरेहिपंथां।यस्तेस्वइतरोदेवयानात्।चक्षुष्मते
शृण्वतेतेब्रवीमि।मानःप्रजांरीरिषोमोतवीरान्।इदमु
श्रेयोवसानमागन्म।यज्ञोजिद्धनजिदश्वजिद्यत्।पर्णंवन
स्पतेरिव।अभिनःश्रीयतांरयिः।सचंतान्नःशचीपतिः॥
५॥वनस्पतावृक्षोलोकाइद्धिरेतेजइंद्रियंधामाश्रीमहिवा
भिनःश्रीयतांरयिरेकंच॥१४॥सवोन्याविषण्णोनविवेषाः

पुरस्ताद्देवा देवेषु परिस्तृणीत सक्षेदं यदस्य पारे नागसञ्व
हस्तां प्सी ब्रह्मं प्रतिष्ठा यद्देवा यन्ते ग्रावाणाः यद्दिद्री क्षेच्चतुर्हर्त्री
॥१४॥ सर्वान्भूतिमेव यामेवा प्स्वाङ्कुतिं ब्रूतानां ब्रह्मपते पर्ण
वृल्कः सोम्या नां मुस्मिन्य सेमे यो नो ज्यो ग्रीवाः परो रजाः प्रतेम
हेब्रह्मं प्रतिष्ठा गार्हपत्यस्त्रिंशं राउत्तरस्यां तं ॥१३०॥ ॥श्रीः॥
॥हरिः ओम्॥ ॥हरिः ॐ॥ ॥सांग्रहंण्येष्ट्या यजते। इमां जु
नतां संगृस्त्तानीति। ग्राहं स्मा रत्नीरश्रा ना भवति। ग्राहं स्रा मा

सः संवत्सरः । संवत्सरमेवावरुंधे । मौंजी भवति । ऊर्ग्वै मुं
जाः । ऊर्जमेवावरुंधे । चित्रा नक्षत्रं भवति । चित्रं वा एतत्कर्म
॥१॥ यदश्वमेधः समृध्यै । पुण्यनामदेवयजनमध्यवस्यति ।
पुण्यामेव तेन कीर्तिमभिजयति । अपदातीन्नृत्विजः समावृ
हंत्यास्तुब्रह्मण्यायः । सुवर्गस्य लोकस्य समष्ट्यै । केशश्मश्रु
वपते । नखानि निकृंतते । दतो धावते । स्नाति । अहतं वासः
परिधत्ते । पाप्मनोऽपहत्यै । वाचं यत्वोपवसति । सुवर्गस्य लोक

स्य गुप्त्यै। रात्रिं जागरयन्त आसते। सुवर्गस्य लोकस्य समष्ट्यै

॥२॥ कर्मेधस्ते पंच च ॥१॥ चतुष्टय्य आपो भवंति। चतुःशफो

वा अश्वः प्राजापत्यः समृद्ध्यै। ताद्दिग्भ्यः समाभृता भवंति। दि

क्षु वा आपः। अन्नं वा आपः। अद्भ्यो वा अन्नं जायते। यदेवाद्भ्यो

न्नं जायते। तदवरुंधे। ता सुब्रह्मौदनं पचति। रेत एव तद्दधा

ति ॥१॥ चतुःशरावो भवति। दिक्ष्वेव प्रतितिष्ठति। उभयतो

रुक्मो भवतः। उभयत एवास्मिंन्रुचं दधाति। उद्धरति शृत

त्वाय। सर्पिषा भवति मेध्यत्वाय। चत्वार आर्षेयाः प्राश्नंति।
दिश्यामेव ज्योतिषि जुहोति। चत्वारि हिरण्यानि ददाति। दिश्यामे
व ज्योतीꣳष्यवरुंधे॥२॥ यदाज्यमुच्छिष्यते। तस्मिन्रशनां न्यु
नत्ति। प्रजापतिर्वा ओदनः। रेत आज्यं। यदाज्ये रशनां न्युन
त्ति। प्रजापतिमेव रेतसा समर्धयति। दर्भमयी रशना भव
ति। वृक्वा एष क्षुद्रं प्रभृतिं मध्यमुपगच्छति। यद्दर्भाः। पवित्रं वै द
र्भाः॥३॥ यद्दर्भमयी रशना भवति। पुनात्येवैनं। पूतमेनं मे

ध्यमालंभते। अश्वंस्सवाआलंब्धस्य महिमोदंक्रामत्। स म
हर्त्विजः प्राविंशत्। तन्महर्त्विजां महर्त्विक्त्वं। यन्महर्त्विजः प्रा
श्नंति। महिमानमेवास्मिंतद्दधति। अश्वस्यवाआलंब्धस्यरे
तउदक्रामत्। तत्सुवर्णं हिरंण्यमभवत्। यत्सुवर्णं हि
रंण्यंददाति। रेतएवास्मिंद्धाति। ओदनंददाति। रेतोवाओद
नः। रेतोहिरंण्यं। रेतसैवास्मिन्रेतोदधाति॥४॥ दधाति रु
धेद्दभौअभवत्षट्च॥२॥ योवैब्रह्मणेदेवेभ्यःप्रजापतयेप्र

तै:
४९

ति प्रोच्या स्तुमे ध्यं वध्नाति। आ देवताभ्यो वृश्च्यते। पापीयान्भ
वति। यः प्रतिप्रोच्य। न देवताभ्य आ वृश्च्यते। वसीयान्भवति
। यदाह। ब्रह्मन्प्रस्तुमे ध्यं भंत्स्यामि देवेभ्यः प्रजापतये तेनेरा
ध्यास्तमिति। ब्रह्म वै ब्रह्मा। ब्रह्मण एव देवेभ्यः प्रजापतये
प्रतिप्रोच्या स्तुमे ध्यं वध्नाति॥९॥ न देवताभ्य आ वृश्च्यते। व
सीयान्भवति। देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते
प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्व

र्यं आस्तां। पूष्णो हस्ताभ्यामित्याहुयत्यै। व्यृद्धं वा एतद्यज्ञस्य
। यदयजुष्केण क्रियत इमामगृभ्णन्रशनामृतस्येत्यधि
वदति यजुष्कृत्यै। यज्ञस्य समृद्ध्यै ॥ २ ॥ तदाहुः। द्वादशारत्नी
रशना कर्तव्या३ त्रयोदशारत्नी३रिति। ऋषभो वा एष
ऋतूनां। यत्संवत्सरः। तस्य त्रयोदशो मासो विष्टपं। ऋष
भ एष यज्ञानां। यदश्वमेधः। यथा वा ऋषभस्य विष्टपं। ए
वमेतस्य विष्टपं। त्रयोदशमरत्निं रशनायामुपादधा

·तृ·
५०

ति॥३॥ यर्षर्षभस्य विष्टपं सं स्कुरोति। तादृगेव तत्। पूर्व
आयुषि विदधेषु कव्ये त्याह। आयुरेवास्मिन्दधाति। तयो दे
वाः सुतमाबभूवुरित्याह। भूतिमेवोपावर्त्तते। ऋतस्य सा
मन्त्सुरमारपंतीत्याह। सत्यं वा ऋतं। सत्येनैवैनमृतेनारभ
ते। अभिधा असीत्याह॥४॥ तस्मादश्वमेधयाजी सर्वाणि भू
तान्यभिभवति। भुवनमसीत्याह। भूमानमेवोपैति। यंता

सीत्याह। यंतारमेवैनं करोति। धर्त्रासीत्याह। धर्त्तारमेवैनं

करोति। सोऽग्निं वैश्वानरमित्याह। अग्नावेवैनं वैश्वानरे जुहो
ति। सप्रथसमित्याह। प्रजयैवैनं पशुभिः प्रथयति। स्वा
हाकृत इत्याह। होम एवास्यैषः। पृथिव्या इत्याह। अस्यामे
वैनं प्रतिष्ठापयति। यन्ता राड्यन्तासि यमनो धर्त्तासि धरुण
इत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे। कृष्यै त्वा क्षेमाय
त्वा रय्यै त्वा पोषाय त्वेत्याह। आशिषमेवैतामाशास्ते। स्वगा
त्वा देवेभ्य इत्याह। देवेभ्य एवैनꣳ स्वगा करोति। स्वाहा त्वा प्र

ब्रा॰ त॰
१५१

जापतय इत्याह। प्राजापत्यो वा अश्वः। यस्या एव देवताया
आलभ्यते। तयैवैनꣳ समर्धयति॥६॥ बध्नाति समृध्या उप
हृधायसीत्याह सत्रपसमित्याह देवेभ्य इत्याह पंचचच॥७॥ य
ः पितुरनुजायाः पुत्रः। स पुरस्तान्नयति। यो मातुरनुजायाः पु
त्रः। स पश्चान्नयति। विषूचमेवास्मात्पाप्मानं विवृहतः। यो अ
र्वंतं जिघाꣳसति तमभ्यमीति वरुण इति श्वानं चतुरक्षं प्रसौ
ति। परो मर्तः पर श्वेति श्वनः श्चतुरक्षस्य प्रहंति। श्वैव वै पाप्मा

१५

भ्रातृव्यः। पाप्मानमेवास्य भ्रातृव्यं हन्ति। सेध्मकं सुसंतं भव
ति। ११। कर्मकर्मैवास्मै साधयति। पौंस्नं यो हन्ति। पुंस्त्वं
वै हे वाः स्रुचु न्यहृष्णुः। स्रुचैवास्य स्रुचं हन्ति। पाप्मा वा एतमी
प्सतीत्याहुः। योऽश्वमेधेन यजत इति। अश्वस्याधस्ता इह मुपा
स्यति। वज्रो वा अश्वः प्राजापत्यः। वज्रेणैव पाप्मानं भ्रातृव्य
मवक्रामति। दक्षिणापद्मावयति। १२। पाप्मानमेवास्माद्धमे
लमपद्मावयति। ऐषीकउद्हो भवति। आयुर्वा इषीकाः। आ

ब्रा·त·
१५२

पुरैवास्मिन्दधाति। अमृतं वाऽ इषीका। अमृतमेवास्मिन्दध
ति। वैतसश्शाखोपसंबद्धा भवति। अप्सुयोनिर्वा अश्वः। अप्सु
जो वैतसः। स्वायां हैवैनं योनौ निर्मिमीते। पुरस्तात्प्रत्यंचमभ्युद्
हति। पुरस्ताद्धैवास्मिन्प्रतीच्यमृतं दधाति। अहं च त्वं च वृत्र
हन्निति ब्रह्मा यजमानस्य हस्तं गृह्णाति। ब्रह्म क्षत्रेण एव सं द
धाति। अभिक्रत्वेन्द्र भूरध ज्मन्नित्यध्वर्युर्यजमानं वाचयत
त्यभिजित्यै ॥३॥ भवति ज्ञावयति मिमीते पंच च ॥४॥ चुत्वा १५

रंक्र त्विजः समुक्षंति। आभ्य एवैनं चतसृभ्यो दिग्भ्योभिस
मीरयंति। ता तेनं राजपुत्रैः सह। अध्वर्युः। पुरस्तात्प्रत्यङ् ति
ष्ठन्नोक्षति। अनेनाश्वेन मेध्येनेष्ट्वा। अयं राजा वृत्रं वध्या
दिति। राज्यं वा अध्वर्युः। क्षत्रं राजपुत्रः। राज्येनैवास्मिन्क्ष
त्रं दधाति। ता तेनं राजभिरुग्रैः सह ब्रह्मा। ६। दक्षिणत उ
दङ् तिष्ठन्नोक्षति। अनेनाश्वेन मेध्येनेष्ट्वा। अयं राजाप्र
तिधृष्योऽस्त्विति। बलं वै ब्रह्मा। बलं मराजो ग्रः। बलेनैवास्मि

ब्रा. तै.
१५३

न्त्वं दधाति। त्वं तेनं सूतग्रामणिभिः सह होता। पुष्यास्वाहेति
भुन्त्रोक्षति। अनेनाश्वेन मेध्येनेष्ट्वा। अय ं राजा सर्वे विराः॥२॥
वकुरुवे वकुर्त्याये वकुजाविकाये। वकुव्रीहियवाये वकुमाष
तिलाये। वकुहिरंण्याये वकुहस्तिकाये। वकुदासपुरुषाये
रयिमत्यै पुष्टिमत्यै। वकुराय स्पोषाये राजास्त्विति। भूमा वै
होता। भूमास्तु तग्रामण्यः। भूम्नैवास्मिन्भूमानं दधाति। रा
तेनं क्षत्त्र संग्रहीतृभिः सह होता। उत्तरतो दक्षिणा तिष्ठ

१५

स्कंति ॥३॥ अनेनाश्वेनमेध्येनेष्ट्वा । अयꣳराजा सर्वमायु
रेतीति । आयुर्वा उक्था । आयुः क्षत्रसंग्रहीतारः । आयुष्ये
वास्मिन्नायुर्दधाति । शतꣳशतं भवंति । शतायुः पुरुषः श
तेंद्रियः । आयुष्येवेंद्रिये प्रतितिष्ठति । चतुःशता भवंति । च
तस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति ॥४॥ ब्रह्मा विराउ क्षतिर्दि
शा एकं च ॥५॥ यथा वै हविषो गृहीतस्य स्कंदति । एवं वा ए
तदश्वस्य स्कंदति । यन्निक्रमनालब्धमुत्सृजंति । यत्स्तोक्या

ब्रा॰ त॰
१५४

अन्नाद्य । सर्वकृतमेवैनेनकरोत्यस्कंदाय । अस्कन्नꣳहितत् । यद्धुतस्यस्कंदति । सहस्रमन्नाद्य । सहस्रसंमितःसुवर्गो लोकः । सुवर्गस्यलोकस्याभिजित्यै ॥१॥ यत्परिमिताअनु ब्रूयात् । परिमितमवरुंधीत । अपरिमिताअन्नाह । अपरिमितःसुवर्गोलोकः । सुवर्गस्यलोकस्यसमष्ट्यै । स्तोक्या जुहोति । याएववर्ष्याआपः । ताअवरुंधे । अस्यांजुहोति । इयंवाअग्निर्वैश्वानरः ॥२॥ अस्यामेवैनाःप्रतिष्ठापयति । उ

१५१

वाचेह प्रजापतिः। स्तोक्यासु वा अहमश्वमेधꣳ संस्थाप
यामि। ते न ततः संस्थिते न चरामीति। अग्नये स्वाहेत्याह
। अग्नय एवैनं जुहोति। सोमाय स्वाहेत्याह। सोमायैवैनं
जुहोति। सवित्रे स्वाहेत्याह। सवित्र एवैनं जुहोति॥३॥ स
रस्वत्यै स्वाहेत्याह। सरस्वत्या एवैनं जुहोति। पूष्णे स्वाहेत्या
ह। पूष्ण एवैनं जुहोति। बृहस्पतये स्वाहेत्याह। बृहस्पत
य एवैनं जुहोति। अपां मोदाय स्वाहेत्याह। अद्भ्य एवैनं जु

होति। वायवे स्वाहेत्याह। वायवएवैनं जुहोति॥४॥ मित्राय
स्वाहेत्याह। मित्रायैवैनं जुहोति। वरुणाय स्वाहेत्याह। व
रुणायैवैनं जुहोति। एताभ्यएवैनं देवताभ्यो जुहोति। द
श हृत्वा संपादं जुहोति। दशाक्षरा विराट्। अन्नं विराट्। विरा
जैवान्नाद्यमवरुंधे। प्रवाएषोस्माल्लोकाच्यवते। यः पराचीः
राहुतीर्जुहोति। पुनः पुनरभ्यावर्त्तं जुहोति। अस्मिन्नेव लो
के प्रतितिष्ठति। एताꣳह वाव सोश्वमेधस्य संस्थितिमुवा

चास्कंदाय । अस्कन्नꣳ हि तत् । यद्युक्तस्य सꣳस्थितस्य स्कंदति
॥ ५ ॥ अभिजित्यै वैश्वानरः सवित्र एवैनं जुहोति वायव ए
वैनं जुहोति च्यवते षट्च ॥ ६ ॥ प्रजापतये त्वा जुष्टं प्रोक्षामी
ति पुरस्तात्प्रत्यङ् तिष्ठन्प्रोक्षति । प्रजापतिर्वै देवानामन्ना
दो वीर्यवान् । अन्नाद्यमेवास्मिन्वीर्यं दधाति । तस्मादश्वः पशू
नामन्नादो वीर्यवत्तमः । इंद्राग्निभ्यां त्वेति दक्षिणतः । इंद्राग्नी
वै देवानामोजिष्ठौ बलिष्ठौ । ओज एवास्मिन्बलं दधाति । तस्मा

दश्वः पशूनामोजिष्ठो बलिष्ठः । वायवे त्वेति पश्चात् । वायुर्वै दे
वानामाशुः सारसारितमः ॥१॥ जवमेवास्मिन्दधाति । तस्मादश्व
ः पशूनामाशुः सारसारितमः । विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरत
ः । विश्वे वै देवा देवानां यशस्वितमाः । यश एवास्मिन्दधाति । त
स्मादश्वः पशूनां यशस्वितमः । देवेभ्यस्त्वेत्यधस्तात् । देवा वै
देवानामपचिततमाः । अपचितिमेवास्मिन्दधाति । तस्मादश्व
ः पशूनामपचिततमः ॥२॥ सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टात् ।

सर्वे वै देवास्त्विषिमंतो हरस्विनः। त्विषिमेवास्मिन्हरो दधाति
। तस्मादश्वः पशूनां त्विषिमान्हरस्वितमः। दिवे त्वांतरिक्षा
य त्वा पृथिव्यै त्वेत्याह। एभ्य एवैनं लोकेभ्यः प्रोक्षति। सते त्वा
सते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्य इत्याह। तस्मा
दश्वमेधयाजिनं सर्वाणि भूतान्युपजीवंति। ब्रह्मवादिनो
वदंति। यत्प्राजापत्योऽश्वः। अथ कस्मादेनमन्याभ्यो देवताभ्यो
प्रोक्षतीति। अश्वे वै सर्वा देवता अन्वायत्ताः। तं यद्विश्वेभ्य

श्री·स· स्वाभूतेभ्य इति श्रोक्षति। देवता एवास्मिन्नन्वायातयति। त

१५७ स्माद्दध्मे सर्वा देवता अन्वायत्ताः॥३॥ सा रसा रितमो पंचित

तमः प्राजापत्यो ध्वः पंचच॥७॥ यथा वै हविषो गृहीतस्य स्कं

दति। एवं वा एतदध्वस्य स्कंदति। यत्प्रोक्षितमनालब्धमु

त्सृजंति। यदध्वचरितानि जुहोति। सर्वहुतमेवैनं करो

त्यस्कंदाय। अस्कन्नं हि तत्। यद्धुतस्य स्कंदति। ईकाराय

स्वाहेंकृताय स्वाहेत्याह। एतानि वा अध्वचरितानि। चरिते १५

रेवैतं स मर्दयति ॥१॥ तद्धाकुः । अनाकृतमेवा अश्वच
रितानि । नेता होतव्या इति । अथो खल्वाकुः । होतव्या एव
। अत्र वा वैवं विद्वानश्वमेधं संस्थापयति । यदश्वच
रितानि जुहोति । तस्माद्धोतव्या इति । बहिर्धिवा एन मेत
द्दायतनाद्धाति । भ्रातृव्यमस्मै जनयति ॥२॥ यस्यां ना
यतनेन्यत्राग्नेराहुती जुहोति । सावित्रिया इष्ट्याः पुरस्ता
त्स्विष्टकृतः । आहवनीयेश्वचरितानि जुहोति । आयत

ब्रा. त्र.
१५८

न ए वा स्याकुत्ती जुहोति। नास्मै भ्रातृव्यं जनयति। तदाहुः॥ यु
क्तमुखे यज्ञमुखे होतव्याः। यज्ञस्य क्ळृप्त्यै। सुवर्गस्य लोकस्या
नुख्यात्या इति। अथो खल्वाहुः॥ ३१॥ यद्यज्ञमुखे यज्ञमुखे जुहु
यात्। पशुभिर्यजमानं व्यर्धयेत्। अव सुवर्गाल्लोकात्पद्येत। पा
पीयान्त्स्यादिति। सकृदेव होतव्याः। न यजमानं पशुभिर्व्यर्धय
ति। अभि सुवर्गं लोकं जयति। न पापीयान्भवति। अष्टाचत्वारि
ंशतमश्वस्तूपराणि जुहोति। अष्टाचत्वारिंशदक्षरा जगती।

जागतो श्वः प्रजा पुत्स्यः समर्ध्ये। एकमतिरिक्तं जुहोति। तस्मा
देकः प्रजा स्वर्द्धुकः॥४॥ अर्धपतिर्जनयतिरखल्वोकुर्जगतीत्री
णिच॥८॥ विभर्मात्राप्रभः पित्रेत्याह। इयं वै माता। असौ पिता।
आभ्यामेवैनं परिददाति। अश्वोसि हयोसीत्याह। व्यास्तेवैन
मेतत्। तस्माच्छ्रेष्ठः प्रजाजायंते। अत्योसीत्याह। तस्मादश्वः स
र्वान्पशून्त्येति। तस्मादश्वः सर्वेषां पशूनां श्रैष्ठ्यं गच्छति॥९॥
प्रयन्नः श्रैष्ठ्यमाप्नोति। यएवं वेद। नरोस्यर्वासि सप्तिरसि वाज्य

ब्रा॰त॰
१५९

सीत्याह। रूपमेवास्यैतन्महिमानं व्याचष्टे। पृथुर्नामासीत्या
ह। एतद्वा अश्वस्य प्रियंनामधेयं। प्रियेणैवैनंनामधेयेनाभि
वदति। तस्मादप्यामित्रौसंगत्य। नाम्नाचेद्ध्वयेते। मित्रमेवभ
वतः॥५॥ आदित्यानांपत्वान्विहीत्याह। आदित्यानेवैनंगम
यति। अग्नयेस्वाहास्वाहेंद्राग्निभ्यामिति पूर्वहोमांजुहोति। पू
र्वएवद्विषंतंभ्रातृव्यमतिक्रामति। भूरसिभुवेत्वाभव्याय
त्वाभविष्यतेत्वेत्युत्सृजतिसर्वत्वाय। देवाआशापालाएतंदे

१५

वेभ्योश्वं मेधायप्रोक्षितं गोपायतेत्याह। शतं वै तल्प्या राजपु
त्रा देवा आशापालाः। तेभ्य एवैनं परिददाति। ईश्वरो वा अश्व
ः प्रमुक्तः परां परावतं गंतोः। इह धृतिः स्वाहेह विधृतिः स्वाहे
ह रंतिः स्वाहेह रमतिः स्वाहेति चतुर्षु पत्सु जुहोति॥५॥ एता
वा अश्वस्य बंधनं। ताभिरेवैनं बध्नाति। तस्मादश्वः प्रमुक्तो
बंधनमागच्छति। तस्मादश्वः प्रमुक्तो बंधनं न जहाति। राष्ट्रं
वा अश्वमेधः। राष्ट्रे खलु वा एते व्यायच्छंते। येश्वं मेध्यं रक्षं

ति। तेषां यतरच्चन गच्छंति। राष्ट्रा देवते राष्ट्रं गच्छंति। अथ यतरद
च्चन न गच्छंति॥४॥ राष्ट्रा देवते व्यवच्छिद्येते। परा वा एष सिच्यते
। योऽबलोऽश्वमेधेन यजते। यद्यमित्रा अश्वं विंदेरन्। हन्येतास्य
यज्ञः। चतुःशता रक्षंति। यज्ञस्याघाताय। अथान्यमानीय प्रो
क्षेयुः। सैव ततः प्रायश्चित्तिः॥५॥ गच्छति भवतः प्रत्युज्जेहे
ति न गच्छंति नवं च॥१॥ प्रजापतिरकामयताश्वमेधेन यजे
येति। स तपोऽतप्यत। तस्य तेपानस्य। सप्तात्मनो देवता उद

क्रामन्। सा दीक्षाभवत्। स एतानि वैश्वदेवान्यपश्यत्। ता
न्यजुहोत्। तैर्वै स दीक्षामवारुंध। यद्वैश्वदेवानि जुहोति। दी
क्षामेव तैर्यजमानोवरुंधे॥१॥ सप्त जुहोति। सप्तहिता दे व
तोष्टुक्क्रामन्। अनुष्टुहं जुहोति। अनुष्टुहमेव दीक्षामवरुंधे
। त्रीणि वैश्वदेवानि जुहोति। चुत्वायौं ज्रहणानि। सप्तसंप
द्यंते। सप्त वै शीर्षण्याः प्राणाः। प्राणा दीक्षा। प्राणैरेव प्राणं दी
क्षामवरुंधे॥२॥ एकविंशतिं वैश्वदेवानि जुहोति। एकवि

शा॰ त॰
१६१

ऽस्त्रिंशद्वैदेवलोकाः। द्वादश मासाः पंचर्त्तवः। त्रय इमे लोकाः। असावादित्य एकत्रिंशः। एष सुवर्गो लोकः। तद्दैवं क्षत्रं। सा श्रीः। तद्ब्रध्नस्य विष्टपं। तत्स्वाराज्यमुच्यते॥३॥ त्रिंशता तमो जुह्णाति जुहोति। त्रिंशदक्षरा विराट्। अन्नं विराट्। विराज्यैवान्नाद्यमवरुंधे। त्रेधा विभज्य देवताजुहोति। त्रयो वै देवाः। त्रय इमे लोकाः। एषां लोकानामाप्त्यै। एषां लोकानां क्लृप्त्यै। अपूर्वा एतस्मात्स्राणाः क्रामंति॥४॥ योऽहु

क्षा मंतिरेच यंति। स ह्याहं प्रचरंति। स ह वैरीषण्याः प्राणाः।
प्राणा दीक्षा। प्राणैरेव प्राणां दीक्षामवरुंधे। पूर्णाकुतिमुत्तमां
जुहोति। सर्वं वै पूर्णाकुतिः। सर्वमेवाप्नोति। अथोइयं वै पूर्णा
कुतिः। अस्यामेव प्रतितिष्ठति।।५।। रुंधे प्राणां दीक्षामवरुंध
उच्यते क्रामंतिति ष्ठति।।१०।। प्रजापतिरश्वमेधमसृजत।
तं सृष्टं न किंचनोदयच्छत्। तं वैश्वदेवान्येवोदयच्छन्। य
द्वैश्वदेवानि जुहोति। यस्मात्सोदयत्सौ स्वात्तामधि माधीतायस्सा

हा। स्वाहा धीतं मनसे स्वाहा। स्वाहा मनः प्रजापतये स्वाहा। का
य स्वाहा कस्मै स्वाहा कतमस्मै स्वाहेति प्राजापत्यं मुखं भवत
ः। प्रजापतिमुखाभिरेवैनं देवताभिरुपयच्छते॥१॥ अदित्यै स्वा
हादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहेत्याह। इयं वा अदि
तिः। अस्या एवैनं प्रतिष्ठायोपयच्छते। सरस्वत्यै स्वाहा सरस्व
त्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहेत्याह। वाग्वै सरस्व
ती। वाचैवैनमुपयच्छते। पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पू

ष्णो नुरंधिषायस्वाहेत्याह। पुरा वो वै पूषा। पुष्टिपतिर्वैनमुपधच्छ
ते। त्वष्ट्रे स्वाहा। त्वष्ट्रे तुरीपाय स्वाहा। त्वष्ट्रे पुरुरूपाय स्वाहेत्याह
॥२॥ त्वष्टा वै पशूनां मिथुनानाᳬरूपकृत्। रूपमेव पशुषु द
धाति। अथो रूपैरेवैनमुपधच्छते। विष्णवे स्वाहा। विष्णवे निखु
र्यपाय स्वाहा। विष्णवे निभूयपाय स्वाहेत्याह। यज्ञो वै विष्णुः
॥ यज्ञायैवैनमुपधच्छते। पूर्णाहुतिमुत्तमां जुहोति। प्रत्युत्त
ब्ध्यै सयुत्वाय॥३॥ यच्छ ते पुरुरूपाय स्वाहेत्याह षष्टो च॥११॥

आ. त.
१६३

सावित्रमष्टाकपालं प्रातर्निर्वपति। अष्टाक्षरा गायत्री। गा
यत्रं प्रातःसवनं। प्रातःसवनादेवैनं गायत्रिया छन्दसोऽधि
निर्मिमीते। अथो प्रातःसवनमेव तेनाप्नोति। गायत्रीछन्दः
।सवित्रे प्रसवित्र एकादशकपालं मध्यंदिने। एकादशा
क्षरा त्रिष्टुप्। त्रैष्टुभं माध्यंदिनं सवनं। माध्यंदिनादेवैन
ं सवनात्त्रिष्टुभश्छन्दसोऽधिनिर्मिमीते।।१।। अथो माध्यंदि
नमेव सवनं तेनाप्नोति। त्रिष्टुभं छन्दः। सवित्र आसवित्रे द्वादश

१६३

कपालमपराण्हे। द्वादशाक्षराजगती। जागतंतृतीयसवनं। तृतीयसवनादेवैनंजगत्याश्छंदसोधिनिर्मिमीते। अथोतृतीयसवनमेवतेनाप्नोति। जगतीछंदः। ईश्वरो वा अश्वः प्रमुक्तः परांपरावतंगंतोः। इहधृतिःस्वाहेहविधृतिःस्वाहेहरंतिःस्वाहेहरमतिःस्वाहेतिचतस्रआकूतीर्जुहोति॥२॥ चतस्रोदिशः। दिग्भिरेवैनंपरिगृह्णाति। आश्वत्थोव्रजोभवति। प्रजापतिर्देवेभ्योनिलायत। अश्वोरूपंकृत्वा। सोश्वत्थेसंवत्सर

ब्रा॰ तै॰
१६४

मंतिष्ठते। तदश्वस्याश्वत्वं। यदाश्वस्योद्रजो भवति। स्व
एवैनं योनौ प्रतिष्ठापयति॥३॥ त्रिष्टुभश्छंदसोधिनिर्मिमी
तेजुहोति नव च॥१२॥ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसीजायता
मित्याह। ब्राह्मणएव ब्रह्मवर्चसंदधाति। तस्मात्पुरा ब्राह्मणो
ब्रह्मवर्चस्यजायत। आस्मिन्राष्ट्रे राजन्यइषव्यः शूरो महा
रथोजायतामित्याह। राजन्यएव शौर्यं महिमानंदधाति। त
स्मात्पुरा राजन्यइषव्यः शूरो महारथोजायत। दोग्ध्री धेनुरि

त्याह। धेन्वामेव पयो दधाति। तस्मात्पुरा दोग्ध्री धेनुरजायत।
वोढानड्वानित्याह॥१॥ अनडुह्येव वीर्यं दधाति। तस्मात्पुरा वो
ढानड्वानजायत। आशुः सप्तिरित्याह। अश्व एव जवं दधाति
। तस्मात्पुराशुरश्वोजायत। पुरंधिर्योषेत्याह। योषित्येव रूपं
दधाति। तस्मात्स्त्री युवतिः प्रिया भावुका। जिष्णू रथेष्ठा इत्याह
। आह वै तत्र जिष्णू रथेष्ठा जायते॥२॥ यत्रैतेन यज्ञेन यजंते।
सभेयो युवेत्याह। यो वै पूर्ववयसी। स सभेयो युवा। तस्माद्यु

ब्रा.तृ.
१६५

व्रापुमान्त्रियो भावुकः। आस्य यजमानस्य वीरो जायतामित्या
ह। आह वै तत्र यजमानस्य वीरो जायते। यत्रैतेन यज्ञेन यजन्ते
। निकामे निकामे नः पर्जन्यो वर्षत्वित्याह। निकामे निकामे ह वै
तत्र पर्जन्यो वर्षति। यत्रैतेन यज्ञेन यजन्ते। फलिन्यो न ओष
धयः पच्यन्तामित्याह। फलिन्यो ह वै तत्रौषधयः पच्यन्ते। यत्रै
तेन यज्ञेन यजन्ते। योगक्षेमो नः कल्पतामित्याह। कल्पते ह
वै तत्र प्रजाभ्यो योगक्षेमः। यत्रैतेन यज्ञेन यजन्ते॥३॥ अनड्वा

ते

। १६

नित्याहृजायतेवर्षतिसुस्यच॥१३॥प्रजापतिर्देवेभ्योयज्ञा
न्व्यादिशत्। सआत्मन्नश्वमेधमधत्त। तंदेवाअब्रुवन्। ए
षवावयज्ञः। यदश्वमेधः। अप्येवनोत्रास्त्विति। तेभ्यएतान
न्नहोमान्व्यायच्छत्। तानजुहोत्। तैर्वैसदेवानप्रीणात्। यद
न्नहोमाञ्जुहोति॥१॥देवानेवतेनयजमानःप्रीणाति। आज्ये
नजुहोति। अग्नेर्वाएतद्रूपं। यदाज्यं। यदाज्येनजुहोति। अ
ग्निमेवतत्प्रीणाति। मधुनाजुहोति। महत्यैवाएतद्देवतायै

रूपं। यन्मधु। यन्मधुना जुहोति॥३॥ महतीमेव तद्देवतां प्री
णाति। तंडुलैर्जुहोति। वसूनां वा एतद्रूपं। यत्तंडुलाः। यत्तं
डुलैर्जुहोति। वसूनेव तत्प्रीणाति। पृथुकैर्जुहोति। रुद्राणां
वा एतद्रूपं। यत्पृथुकाः। यत्पृथुकैर्जुहोति॥४॥ रुद्रानेव तत्प्री
णाति। लाजैर्जुहोति। आदित्यानां वा एतद्रूपं। यल्लाजाः। यल्ला
जैर्जुहोति। आदित्यानेव तत्प्रीणाति। करंबैर्जुहोति। विश्वे
षां वा एतद्देवानां रूपं। यत्करंबाः। यत्करंबैर्जुहोति॥५॥ वि

श्रीणात्येवैतद्देवान्श्रीणाति। धानाभिर्जुहोति। नक्षत्राणां वा एत
द्रूपं। यद्धानाः। यद्धानाभिर्जुहोति। नक्षत्राण्येव तच्छ्रीणाति।
सक्तुभिर्जुहोति। प्रजापतेर्वा एतद्रूपं। यत्सक्तवः। यत्सक्तु
भिर्जुहोति। ॥५॥ प्रजापतिमेव तच्छ्रीणाति। मसूस्यैर्जुहोति।
सर्वासां वा एतद्देवतानाᳪं रूपं। यन्मसूस्यानि। यन्मसूस्यैर्जु
होति। सर्वा एव देवताः श्रीणाति। प्रियंगुतण्डुलैर्जुहोति
। प्रियांगा ह वै नामैते। एते वै देवा अश्वस्याङ्गानि समदधुः

ता. त.
१६७

। यत्प्रियंगुतंडुलैर्जुहोति। अश्वस्यैवांगानि संदधाति। दशा
न्नानि जुहोति। दशाक्षरा विराट्। विराट्कृत्स्नस्यान्नाद्यस्याव
रुध्यै॥६॥ जुहोति मधुना जुहोति पृथुकैर्जुहोति करंबैर्जुहो
ति सक्तुभिर्जुहोति प्रियंगुतंडुलैर्जुहोति चत्वारि च॥१४॥
अन्नहोमानाज्येनाग्ने मधुना महत्यै तंडुलैः पृथुकैर्लाजैः क
रंबैर्धानाभिः सक्तुभिर्मस्तस्यैः प्रियंगुतंडुलैर्दशान्नानि द्वा
दश॥ ॥प्रजापतिरश्वमेधमसृजत। तं सृष्टं रक्षांस्य

१६

जिघांसन्। स एतान्प्रजापतिर्नक्तं होमानपश्यत्। तानजु
होत्। तैर्वै स यज्ञाद्रक्षांस्यपाहन्। यन्नक्तं होमाञ्जुहोति
। यज्ञादेव तैर्यजमानो रक्षांस्यपहंति। आज्येन जुहोति। व
ज्रो वा आज्यं। वज्रेणैव यज्ञाद्रक्षांस्यपहंति॥१॥ आज्यस्य
प्रतिपदं करोति। प्राणो वा आज्यं। मुखत एवास्य प्राणं दधा
ति। अन्नहोमां जुहोति। शारीरं वह्येवावरुंधे। व्यत्यासं जुहो
ति। उभयस्यावरुध्यै। नक्तं जुहोति। रक्षसामपहत्यै। आज्ये

नांततोजुहोति॥२॥प्राणोवाआज्यं॥उभयतएवास्यप्राणंद
धाति॥पुरस्ताच्चोपरिष्टाच्च॥एकस्मैस्वाहेत्याह॥अस्मिन्नेव
लोकेप्रतितिष्ठति॥द्वाभ्यांस्वाहेत्याह॥अमुष्मिन्नेवलोके
प्रतितिष्ठति॥उभयोरेवलोकयोः प्रतितिष्ठति॥अस्मिंश्
श्चामुष्मिंश्च॥शतायस्वाहेत्याह॥शतायुर्वैपुरुषःशतवी
र्यः॥आयुरेववीर्यमवरुंधे॥सहस्रायस्वाहेत्याह॥आयुर्वै
सहस्रं॥आयुरेवावरुंधे॥सर्वस्मैस्वाहेत्याह॥अपरिमितमे

वावरुंधे॥३॥एवयत्तावत्साऽऽस्यपहंत्संततोजुहोतिप्राता
युस्वाहेत्याहसुप्रचे॥१४॥प्रजापतिंवाएषईप्सतीत्याहुः।
योऽश्वमेधेनयजतइति।अथोआहुः।सर्वाणिभूतानीति
।एकस्मैस्वाहेत्याह।प्रजापतिर्वाएकः।तमेवाप्नोति।एक
स्मैस्वाहाद्वाभ्याऽंस्वाहेत्यभिपूर्वमाहुतीर्जुहोति।अभि
पूर्वमेवसुवर्गंलोकमेति।एकोत्तरंजुहोति॥१॥एकवदे
वसुवर्गंलोकमेति।संततंजुहोति।सुवर्गस्यलोकस्यसं

ब्रा॰ त॰
१६९

ते स्यै। शताय स्वाहेत्याह। शतायुर्वै पुरुषः शतवीर्यः। आयुरे
व वीर्यमव रुंधे। सहस्राय स्वाहेत्याह। आयुर्वै सहस्रं। आयुरेवा
व रुंधे। अयुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहेत्याह॥२
॥त्रय इमे लोकाः। इमानेव लोकानव रुंधे। अर्बुदाय स्वाहेत्याह
। वाग्वा अर्बुदं। वाचमेवाव रुंधे। न्यर्बुदाय स्वाहेत्याह। यो वै वा
चो भूमा तन्न्यर्बुदं। वाचएव भूमानमव रुंधे। समुद्राय स्वाहे
त्याह॥३॥ समुद्रमेवाप्नोति। मध्याय स्वाहेत्याह। मध्यमेवाप्नो

ति। अंतायस्वाहेत्याह। अंतमेवाप्नोति। पुराध्यायस्वाहेत्याह। पु
राधमेवाप्नोति। उषसेस्वाहा व्युष्ट्यैस्वाहेत्याह। रात्रिर्वाउषाः
। अहर्व्युष्टिः॥४॥ अहोरात्रेएवावरुंधे। अथोअहोरात्रयोरे
वप्रतितिष्ठति। तायदुभयीर्दिवावानक्तंवानुकुर्यात्। अहोरा
त्रेमोहयेत्। उषसेस्वाहा व्युष्ट्यैस्वाहोदेष्यतेस्वाहोद्यतेस्वाहे
त्यनुदितेजुहोति। उदिताय स्वाहासुवर्ग्यायस्वाहालोकायस्वा
हेत्युदितेजुहोति। अहोरात्रयोरव्यतिमोहाय॥५॥ एकोत्त

ब्रा·तृ·
१७०

रंजुहोति प्रयुताय स्वाहेत्याह समुञ्चाय स्वाहेत्याहाहस्पृष्टिः
सततं ॥१६॥ त्रिभस्मोत्रा प्रभः प्रित्रेत्यस्वनामानि जुहोति।
उभयोरेवैनं लोकयोर्नाम प्रधेयं गमयति। आयनाय स्वाहा प्रा
यणाय स्वाहेत्युद्रावां जुहोति। सर्वमेवैनमस्कन्नं सुवर्गं लो
कं गमयति। अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमां जुहोति
। पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति। पृथिव्यै स्वाहान्तरिक्षा

य स्वाहेत्याह। यथा यजुरेवैतत्। अग्नये स्वाहा सोमाय स्वाहे

१७

तिपूर्वदीक्षाजुहोति। पूर्वएवद्विषंतंभ्रातृव्यमतिक्रातिः॥
॥पृथिव्यैस्वाहांतरिक्षायस्वाहेत्येकविंशतिनींदीक्षाजुहो
ति। एकविंशतिर्वैदेवलोकाः। द्वादशमासाः पंचर्तवः। त्र
यइमेलोकाः। असावादित्यएकविंशः। एषसुवर्गोलोक
॥सुवर्गस्यलोकस्यसमष्ट्यै। भुवोदेवानांकर्मणेत्यतद्दी
क्षाजुहोति। ऋतुनेवास्मैकल्पयति। अग्नयेस्वाहावायवे
स्वाहेतिजुहोत्यनंतरित्यै॥ ॥ अर्वाङ्यज्ञः संक्रामत्वित्या

तै. सं.
१७१

सीञ्जुहोति। सुवर्गस्य लोकस्याख्यै। यैतं भव्यं भविष्यदिति प
र्यासीञ्जुहोति। सुवर्गस्य लोकस्य पर्याप्त्यै। आ मे गृहा भवं
त्वित्याभूञ्जुहोति। सुवर्गस्य लोकस्याभूत्यै। अग्निर्नात तपोन्वं
भवद्दित्यनुभूञ्जुहोति। सुवर्गस्य लोकस्यानुभूत्यै। स्वाहा
धिमाधीताय स्वाहेति समस्तानि वैश्वदेवानि जुहोति। समस्त
मेव वज्रिषं तं भ्रातृव्यमतिक्रामति॥ ३॥ दृश्च स्वाहा हृदभ्या
ं स्वाहेत्यंगहोमाञ्जुहोति। अंगेअंगे वै पुरुषस्य पाप्मोपश्लि

१७

ष्टः । अं गो हं गा द्धै वै नं पाप्म नु स्ते न मुंचति । अंज्ये ता यु स्वाहां कृ
ष्णा यु स्वा हो श्वे ता यु स्वाहे त्य श्वरू पाणि जुहोति । रू पे रे वै न
ँ स मर्धयति । ओ षधी भ्यः स्वाहा मू ले भ्यः स्वाहे त्यो षधि हो
मा न्जु हो ति । द्वय्यो वा ओ षध यः । पु ष्पे भ्यो न्याः फलं गृ ह्णंति ।
मू ले भ्यो न्याः । ता एवो भ यी र वरुं धे ॥४॥ व न स्पति भ्यः स्वाहेति
व न स्पति हो मा न्जु हो ति । आ र ण्य स्या न्ना द्य स्या वरु ध्यै । मे ष
स्त्वा प च तै रे र्वु त्वि त्य पा व्या नि जु हो ति । प्रा णा वै दे वा अ पा व्याः

आ॰ ९॰
१७२

। प्राणानेवावरुंधे। कूप्याभ्यः स्वाहाद्भ्यः स्वाहेत्यपाᳫं होमं जुहोति। अप्सु वा आपः। अन्नं वा आपः। अद्भ्यो वा अन्नं जायते। यदेवाद्भ्योऽन्नं जायते। तदवरुंधे॥५॥ पूर्वदीक्षां जुहोति। पूर्व एव द्विषंतं भ्रातृव्यमतिक्रामत्यनंतरित्यैक्रामति रुंधे जायत एकं च॥१७॥ अंभाᳫंसि जुहोति। अयं वै लोकोंभाᳫंसि। तस्य वसवोऽधिपतयः। अग्निर्ज्योतिः। यदंभाᳫंसि जुहोति। इममेव लोकमवरुंधे। वसूनाᳫं सायुज्यं गच्छति।

१७

अग्निं ज्योतिरवरुंधे। नभाꣳसि जुहोति। अंतरिक्षं वै नभाꣳसि।।४।। तस्य रुद्रा अधिपतयः। वायुर्ज्योतिः। यन्नभाꣳसि जुहोति। अंतरिक्षमेवाऽवरुंधे। रुद्राणाꣳ सायुज्यं गच्छति। वायुं ज्योतिरवरुंधे। महाꣳसि जुहोति। असौ वै लोको महाꣳसि। तस्यादित्या अधिपतयः। सूर्यो ज्योतिः।।२।। यन्महाꣳसि जुहोति। अमुमेव लोकमवरुंधे। आदित्यानाꣳ सायुज्यं गच्छति। सूर्यं ज्योतिरवरुंधे। नमो राज्ञे नमो वरुणायेति यवानि

श्रा·त·
१७३

जुहोति। अन्नाद्यस्यावरुध्यै। प्रयो भूर्बालो अभि दातु स्वाहेति
गव्यानि जुहोति। पशूनामवरुध्यै। प्राणाय स्वाहा व्यानाय स्वा
हेति संततिहोमां जुहोति। सुवर्गस्य लोकस्य संतत्यै॥ ४॥ सि
ताय स्वाहाऽसिताय स्वाहेति प्रमुक्तीर्जुहोति। सुवर्गस्य लोक
स्य प्रमुक्त्यै। पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्याह। यथा यजुरे
वैतत्। दत्ताय स्वाहाऽदत्ताय स्वाहेति निरारीरहोमां जुहोति
। पितृलोकमेवैते यजमानोऽवरुन्धे। कस्त्वा युनक्ति स त्वा युन

त्क्रितिपरिधीन्युनक्ति। इमे वै लोकाः परिधयः। इमानेवास्मै लो

कान्युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै॥४॥ यः कामयेत अ

सहाइति महिमानौजुहोति। सुवर्गो वै लोको महः। सुवर्ग

मेव ताभ्यां लोकं यजमानोवरुंधे। आब्रह्मन्ब्राह्मणो ब्रह्मव

र्चसीजायतामिति समस्तानि ब्रह्मवर्चसानि जुहोति। ब्रह्म

वर्चसमेव ते यजमानोवरुंधे। जज्ञि बीजमिति जुहोत्यनंत

रित्यै। अग्नये समनमत्पृथिव्यै समनमदिति सन्नतिहोमांजु

ब्रा॰ त॰
१७४

होति। सुवर्गस्य लोकस्य सन्तत्यै। भूताय स्वाहा भविष्यते स्वा
हेति भूता भव्यौ होमौ जुहोति। अयं वै लोको भूतं॥५॥ असौ
भविष्यत्। अनयोरेव लोकयोः प्रतितिष्ठति। सर्वस्याप्त्यै।
सर्वस्यावरुध्यै। यदक्रंदः प्रथमं जायमान इत्यश्वस्तोमीयं
जुहोति। सर्वस्याप्त्यै। सर्वस्य जित्यै। सर्वमेव तेनाप्नोति। स
र्वं जयति। योऽश्वमेधेन यजते॥६॥ य उ चैनमेवं वेद। यज्ञ
ꣳ रक्षाꣳसि जिघाꣳसन्। स एतान्प्रजापतिर्नक्तꣳ होमा

न पन्नयुत। तान जुहोत। ते वै स यज्ञाद्रक्षाꣳस्यपाहन्। यन्न

क्षꣳहोमं जुहोति। यज्ञादेव तेर्यजमानो रक्षाꣳस्यपहंति।

जुपस्मै स्वाहा स्तुष्यै स्वाहेत्यंततो जुहोति। सुवर्गस्य लोकस्य

समष्ट्यै॥ ७॥ देवेन भाꣳसि सूर्यो ज्योतिः संतत्यै समष्ट्यै भूतंय

जे ते नवच॥ १८॥ अंभो यहंभो नभो यन्नभो महो यन्महः एक

यूपो वै काद्दशिनी वा। अन्येषां यज्ञानां यूपा भवंति। एकविꣳ

शिन्यश्वमेधस्य। सुवर्गस्य लोकस्याभिजित्यै। बैल्बो वा खादि

रो वा पालाशो वा । अन्येषां यज्ञक्रतूनां यूपा भवंति । राज्जुदाल
एकविंशत्यरत्निरश्वमेधस्य । सुवर्गस्य लोकस्य समष्ट्यै । ना
न्येषां पशूनां तेजन्या अवद्यंति । अवद्यंत्यश्वस्य ॥ १ ॥ पाप्मा वै
तेजनी । पाप्मनोऽपहत्यै । प्लक्षशाखायामन्येषां पशूनामवद्यं
ति । वैतसशाखायामश्वस्य । अप्सुयोनिर्वा अश्वः । अप्सुजो वै
तसः । स्व एवास्य योनाववद्यति । यूपेषु ग्राम्यान्पशून्नियुंजंति
। आरोकेष्वारण्यान्धारयंति । पशूनां व्यावृत्त्यै । आ ग्राम्यान्पशून् १७।

लभंते। त्वारुण्यात्सृजंति। पाप्मनो पहत्यै ॥२॥ अश्वस्य व्याहृत्यै
त्रीणि च ॥१९॥ राजसुद्दार्लमग्निष्ठं मिनोति। भ्रूणहत्याया अपह
त्यै। पोतुद्रवावभितो भवतः। पुण्यस्य गंधस्यावरुध्यै। भ्रूणह
त्यामेवास्मादपहत्य। पुण्येन गंधेनोभयतः परिगृह्णाति। ष
ड्डैत्वा भवंति। ब्रह्मवर्चसस्यावरुध्यै। एकविंशरात्रिः संपद्यं
ते। एकविंशरात्रि वै देवलोकाः। द्वादश मासाः पंचर्तवः। त्रय
इमे लोकाः। असावादित्य एकविंशः। एष सुवर्गो लोकः। सु
षड्रको द्विराः। तेजसोवरुध्यै ॥४॥ षट्पालत्राः। सोमपीथस्यावरुध्यै ।३

बा॰ त॰
१७६

वर्गस्य लोकस्य समष्ट्यै । शतं प्रजा वो भवंति ॥२॥ शतायुः पुरु
षः शतेंद्रियः । आयुष्येवेंद्रिये प्रतितिष्ठति । सर्वं वा अश्वमेधा
प्नोति । अपरिमिता भवंति । अपरिमितस्यावरुध्यै । ब्रह्मवादि
नो वदंति । कस्मात्सत्यात् । दक्षिणतोन्येषां पशूनामवध्नंति
। उत्तरतोश्वस्येति । वारुणो वा अश्वः ॥३॥ एषा वै वरुणस्य दि
क् । स्वायामेवास्य दिश्यवध्नंति । यदितरेषां पशूनामवध्नंति । सू
तदेवत्यं तेनावरुंधे । चितेग्नावधि वेतसे कटेश्वं चिनोति । अप्सु

योनिर्वा अश्वः। अप्सुजो वेतसः। स्व एवैनं योनौ प्रतिष्ठापयति
। पुरस्तात्प्रत्यंचं तूपरं चिनोति। पश्चात्प्राचीनं गोमृगं॥४॥ प्रा
णापानावेवास्मिन्सम्यंचौ दधाति। अश्वं तूपरं गोमृगमिति सर्वहु
त एतां जुहोति। एषां लोकानामभिजित्यै। आत्मनाभिजुहो
ति। सात्मानमेवैनं सतनुं करोति। सात्माऽमुष्मिंल्लोके भवति
। य एवं वेद। अपो वसोरेव धारां तेनावरुंधे। इलुवर्दाय स्वाहा
बलिवर्दाय स्वाहेत्याह। संवत्सरो वा इलुवर्दः। परिवत्सरो बलि

आ. त.
१७७

वर्द्धः संवत्सरादेव परिवत्सराद्यायुरवरुंधे। आयुरेवास्मिन्द-
धाति। तस्मादश्वमेधयाजी जरसा विस्रसामुं लोकमेति॥५॥ ते-
जसो वरुध्यै भवंत्यश्वो गोमृग मितुवर्द्धस्तु तारिच॥२०॥ एक-
विंशोग्निर्भवति। एकविंशस्तोमः। एकविंशतिर्यूपाः। य-
था वा अश्वा वर्षभा वा वृषाणः संस्फुरेरन्। एवमेतत्स्तोमाः
संस्फुरंते। यदेकविंशाः। ते यत्समृच्छेरन्। हन्येतास्य यज्ञः।
द्वादशा एवाग्निस्यादित्याहुः। द्वादशस्तोमः॥९॥ एकादशयू-

१७

पाः॥ यद्द्वादशोग्निर्भवति। द्वादश मासाः संवत्सरः। संवत्सरे

णैवास्मा अन्नमवरुंधे। यद्द्वादश यूपा भवंति। द्वादशाक्षरा विराट्। अ

न्नं विराट्। विराजैवान्नाद्यमवरुंधे। य एकादशः। स्तनं एवास्यै

सः॥२॥ दुह एवैनां तेन। तदाहुः॥ यद्द्वादशोग्निःस्यात् द्वादश स्तो

म एकादश यूपाः॥ यथा स्थूरिणा यायात्। तादृक् तत्। एकवि

ंश एवाग्निःस्यादित्याहुः॥ एकविंशः स्तोमः। एकविंशतिर्यू

पाः॥ यथा प्रष्टिभिर्याति। तादृगेव तत्॥३॥ यो वा अश्वमेधे ति

मा० ९९
१७८

स्वः ककुभो वेद । ककुद्र रास्तां भवति । एकविंशोऽग्निर्भवति ।
एकविंशः स्तोमः । एकविंशतिर्यूपाः । एता वा अश्वमेधेति
स्वः ककुभः । य एवं वेद । ककुद्र रास्तां भवति । यो वा अश्वमेधे
त्रीणि शीर्षाणि वेद । शिरो ह रास्तां भवति । एकविंशोऽग्निर्भव
ति । एकविंशः स्तोमः । एकविंशतिर्यूपाः । एतानि वा अश्वमे
धे त्रीणि शीर्षाणि । य एवं वेद । शिरो ह रास्तां भवति ॥ ४ ॥ बाहुत्राः
स्तोमः स एव तद्धिरो ह रास्तां भवति षड्‌ ॥ २१ ॥ द्वे वा वा अश्वमे

धे पवमाने। सुवर्गं लोकं न प्राजानन्। तमश्वः प्राजानात्। यद
श्वमेधेऽश्वेन मेध्येनोदंचो बहिष्पवमानꣳ सर्पति। सुवर्गस्य लो
कस्य प्रज्ञात्यै। न वै मनुष्यः सुवर्गं लोकमंजसा वेद। अश्वो वै
सुवर्गं लोकमंजसा वेद। यदुद्गातोद्गायेत्। यथा क्षेत्रज्ञोऽन्येन
पथा प्रतिपादयेत्। तादृक्तत्॥१॥उद्गातारमपरुध्य। अश्व
मुद्गीथाय वृणीते। यथा क्षेत्रज्ञोऽंजसा नयति। एवमेवैनमश्व
ः सुवर्गं लोकमंजसा नयति। पुच्छमन्वारभंते। सुवर्गस्य लोक

ब्रा·त·
१७९

स्य समष्ट्यै॥ हिंकरोति। साम्नैवार्कः॥ हिंकरोति। उद्गीथ एवास्य
सः॥२॥ वडवा उपरुंधंति। मिथुनत्वाय प्रजात्यै। अथो यथो
पगातार उपगायंति। तादृगेव तत्। उद्गासीदस्यो मेध्युर
त्याह। प्राजापत्यो वा अश्वः। प्रजापतिरुद्गीथः। उद्गीथमेवा
वरुंधे। अथो ऋक्सामयोरेव प्रतितिष्ठति। हिरण्येनोपाक
रोति। ज्योतिर्वै हिरण्यं। ज्योतिरेव मुखतो दधाति। यजमाने
च प्रजासु च। अथो हिरण्यज्योतिरेव यजमानः सुवर्गं लोक

मैति॥३॥ तत्सवुपाकरोतिचत्वारिच॥२२॥ पुरुषोवैयज्ञः। य
ज्ञःप्रजापतिः। यदश्वेपशून्नियुंजंति। यज्ञादेवतद्यज्ञंप्रयुंङ्
ते। अश्वंतूपरंगोमृगं। तानग्निष्ठआलभते। सेनामुखमेवत
त्संश्यति। तस्माद्राजमुखंभीष्मंभावुकं। आग्नेयंकृष्णग्री
वंपुरस्ताल्ललाटे। पूर्वाग्निमेवतंकुरुते॥१॥ तस्मात्पूर्वाग्निंपु
रस्तात्स्थापयंति। पौष्णमन्वंचं। अन्नंवैपूषा। तस्मात्पूर्वाग्नावा
हार्यमाहरंति। ऐंद्रापौष्णमुपरिष्टात्। ऐंद्रोवैराजन्योन्नंपू

।।४८।
१८०

षा। अन्नाद्येनैवैनमुभयतः परिगृह्णाति। तस्माद्राजन्योन्नादो भावुकः। आग्नेयो कृष्णग्रीवो बाकुवोः। बाकुवो रेववीर्यं धत्ते। २। तस्माद्राजन्यो बाकुबली भावुकः। ब्राह्मो लोमशः सक्थ्यो सक्थ्योः। सक्थ्योरेववीर्यं धत्ते। तस्माद्राजन्यऊरुबली भावुकः। त्रिष्टुभो वार्हस्पत्योष्टभे। ब्रह्मवर्चसमेवो परिष्टाद्धत्ते। अधोकुवचैव एवैतेऽभितः पर्यूहते। तस्माद्राजन्यः सन्नद्धो वीर्यं करोति। धात्रे पृषोदरमधस्तात्। प्रतिष्ठामेवैतां कुरुते। अ

योऽयंवैधाता।अस्यामेवप्रतितिष्ठति।सोऽयंबलक्षंपुच्छं।तु
त्सेधमेवतंकुरुते।तस्माडुत्सेधंभयेप्रजाअभिसंश्रयंति॥
३॥कुरुतेधत्तेकुरुतेपंचच॥२३॥सांग्रहण्याचतुष्टय्यायो
वैयःप्रतुस्थुत्वारोयथानिक्तंप्रजापतयेत्वायथाज्ञोक्षितंवि
भर्त्याह।प्रजापतिरकामयताश्वमेधेनप्रजापतिर्नकिंचनसा
वित्रमाब्रह्मन्प्रजापतिर्देवेभ्यःप्रजापतीरक्षाऽसिप्रजापति
मीप्सतिविभर्त्स्वनामान्यभाऽस्येकयूपोराज्जुदालमेकविं

रोदेवाः पुरुषस्त्रयोविरंहन्तिः ॥२७॥ सांग्रहण्यातस्मादश्वमेध
याजीयत्सरिमितायद्धत्तमुखेयोह्यक्षांदेवानुवतेस्य इमेसिता
प्राणापानावेवास्मिन्तस्माद्राजन्योबाहुबलीभावुकएकेनव
तिः ॥१९॥ ॥हरिःॐ॥ ॥हरिःॐ॥ ॥प्रजापतिरश्वमेधमसृ
जत। सोस्मात्सृष्टोपाक्रामत्। तमष्टादशिभिरनुप्रायुंक्त। तमा
प्नोत्। तमाप्त्वाष्टादशिभिरवारुंध। यदष्टादशिनआलभ्यंते।
यमेवतैराप्त्वायजमानोवरुंधे। संवत्सरस्यवाएषाप्रतिमा।

यदेकादशिनः । द्वादश मासाः पंचर्त्तवः ॥ १ ॥ संवत्सरोकादशाः

। यदेकादशिन आलभ्यंते । संवत्सरमेवैतेनाप्त्वा यजमानोऽव

रुंधे । अग्निष्ठेन्यान्श्वस्तूपाकरोति । इतरेषु यूपेष्वेकादशिनो

जामित्वाय । न वै नु वालभ्यंते सवीर्यत्वाय । यदारण्यैः संस्थाप

येत् । व्यवस्येतां पितापुत्रौ । व्यध्वानः क्रामेयुः । विदूरं ग्राममयो

र्ग्रामांतौ स्यातां ॥ २ ॥ ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्या

धिनीस्तस्करा अरण्येष्वाजायेरन् । तदाहुः । अपशवो वा एते ।

ब्रा·तृ·
१८२

यदारण्याः । यदारण्यैः संस्थापयेत् । क्षिप्रे यजमानमरण्यं मृ
तं हरेयुः । अरण्यायतना ह्यारण्याः पशव इति । यत्पशून्नालभे
त । अनवरुद्धा अस्य पशवः स्युः । यत्पर्यग्निकृतानुत्सृजेत् ॥ ३ ॥
यज्ञवेशसं कुर्यात् । यत्पशून्नालभते । तेनैव पशूनवरुंधे । यत्प
र्यग्निकृतानुत्सृजति यज्ञवेशसाय । अवरुद्धा अस्य पशवो भ
वंति । न यज्ञवेशसं भवति । न यजमानमरण्यं मृतं हरंति । ग्रा
म्यैः संस्थापयति । एते वै पशवः क्षेमो नाम । संपितापुत्राववव

१८

स्यतः। समध्वांनः क्रामंति। स समंतिकं ग्रामं यो ग्रामांतौ भवत
॥ नक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिनीस्तस्करा अ
रंण्येष्वाजायंते॥४॥ ऋतवः स्यातामुत्सृजेत्स्यं त्रुत्स्त्रीणि च॥१॥
प्रजापतिरकामयत उभौ लोकाववरुंधीयेति। स एतानुभया
न्पशून्पश्यत्। ग्राम्यांश्चारण्यांश्च। तानालभत। तैर्वै स उ
भौ लोकाववारुंध। ग्राम्यैरेव पशुभिरिमं लोकमवारुंध। आर
ण्यैरमुं। यद्ग्राम्यान्पशूनालभते। इममेव तैर्लोकमवरुंधे। यदा

मा॰ तृ॰
१८३

रुण्यान्॥१॥ अभुंते॥ अनं वरुन्धो वा एतस्य संवत्सर इत्याहुः॥ य इत इतश्चातुर्मास्यानि संवत्सरं प्रयुङ्क्त इति। एता वा अन्ये संवत्सरः। पश्चात्तु मास्यानि। यदेते चातुर्मास्याः पुरा वैआलभ्यन्ते। धृत्यक्षमेवतेः संवत्सरं यजमानो वरुन्धे। विवा एष प्रजया पशुभिर्ऋध्यते। यः संवत्सरं प्रयुङ्क्ते। संवत्सरः सुवर्गो लोकः॥ २॥ सुवर्गं तु लोकं नापराध्नोति। प्रजा वै पुरा वैएकादशिनी। यदेत ऐकादशिनाः पुरा वैआलभ्यन्ते। साक्षादेव प्रजां पशून्यज

१८३

मानो वरुंधे। प्रजापतिर्विराजमसृजत। सा सृष्टाश्वमेधं प्रावि
शत्। तां दशिभिरनुप्रायुंक्त। तामाप्नोत्। तामाप्त्वा दशिभिरवा
रुंध। यद्दशिन आलभ्यंते ॥१॥ विराजमेव तेनाप्त्वा यजमानोव
रुंधे। एकादश दशत आलभ्यंते। एकादशाक्षरा त्रिष्टुप्। त्रैष्टु
भाः पशवः। पशूनेवावरुंधे। वैश्वदेवो वा अश्वः। नाना देवत्याः
पशवो भवंति। अश्वस्य सर्वत्वाय। नानारूपा भवंति। तस्मान्ना
नारूपाः पशवः। बहुरूपा भवंति। तस्माद्बहुरूपाः पशवः समृ

ग्रा·तृ·
१८४

औ॥४॥आरण्यांल्लोकोदूरिनआलभ्यंतेनानारूपाःपुत्रावोदेवं
॥२॥अस्मैवैलोकायग्राम्याःपुत्रावुआलभ्यंते।अमुष्माआरण्या
॥यग्राम्यान्पशूनालभते।इममेवतेलोकमवरुंधे।यदारण्या
न्।अमुंतैः।उभयान्पशूनालभते।ग्राम्याँश्चारण्याँश्च।उभ
योर्लोकयोरवरुध्यै।उभयान्पशूनालभते॥१॥ग्राम्याँश्चार
ण्याँश्च।उभयस्यान्नाद्यस्यावरुध्यै।उभयान्पशूनालभते।
ग्राम्याँश्चारण्याँश्च।उभयेषांपशूनामवरुध्यै।त्रयंस्त्रयोभ

वंति। त्रय इमे लोकाः। एषां लोकानामाप्त्यै। ब्रह्मवादिनो वदंति। क
स्मात्सत्यात्॥२॥ अस्मिंल्लोके बहवः कामा इति। यत्समानाभ्यो दि
वर्ताभ्यो न्येन्ये पुरा वं आलभ्यंते। अस्मिन्नेव तल्लोके कामान्द
धाति। तस्मादस्मिंल्लोके बहवः कामाः। त्रयाणां त्रयाणां सह
वपाज्जुहोति। त्र्यावृतो वै देवाः। त्र्यावृत इमे लोकाः। एषां लोकानां
माप्त्यै। एषां लोकानां क्लृप्त्यै। पर्यग्निकृतानारण्यानुत्सृजंत्यहिं
सायै॥३॥ उभयान्सस्नालभते सत्याहहिंसायै॥३॥ युजंति

ब्रा॰ त॰
१८५

ब्रध्नमित्याह। असौ वा आदित्यो ब्रध्नः। आदित्यमेवास्मै युनक्ति
। अरुषमित्याह। अग्निर्वा अरुषः। अग्निमेवास्मै युनक्ति। चरन्त
मित्याह। वायुर्वै चरन्। वायुमेवास्मै युनक्ति। परितस्थुष इत्याह
॥१॥ इमे वै लोकाः परितस्थुषः। इमानेवास्मै लोकान्युनक्ति। रो
चन्ते रोचना दिवीत्याह। नक्षत्राणि वै रोचना दिवि। नक्षत्राण्येवा
स्मै रोचयति। युञ्जन्त्यस्य काम्येत्याह। कामानेवास्मै युनक्ति। ह
री विपक्षसेत्याह। इमे वै हरी विपक्षसा। इम एवास्मै युनक्ति॥२॥ १८

क्रोणो धृष्णन्नु वाहसेत्याह। अहोरात्रे वै नु वाहसा। अहोरात्रे एवा
स्मै युनक्ति। एता एवास्मै देवता युनक्ति। सुवर्गस्य लोकस्य सम
ष्ट्यै। केतुं कृण्वन्न केतव इति ध्वजं प्रति मुंचति। यश एवैनꣳ रा
ष्ट्रं गमयति। जीमूतस्येव भवति प्रतीकमित्याह। यथा यजुरे
वैतत्। ये ते पंथानः सवितः पूर्व्यास इत्यध्वर्युर्यजमानं वाचय
त्यभिजित्यै॥१॥ परा वा एतस्य यज्ञ एति। यस्य पशुरुपाकृतो
न्यत्र वेद्या एति। एतꣳ स्तोतरेतेन पथा पुनरश्वमावर्तयासि

न इत्याह। वायुर्वै स्तोता। वायुमेवास्य परस्ताद्धात्वा वृंक्ते। य
था वै हविषो गृहीतस्य स्कंदति। एवं वा एतदश्वस्य स्कंदति। य
दुपाकृतस्य लोमानि शीयंते। यद्वालेषु काचानावयंति। लो
मान्येवास्य तत्संभरंति॥५॥ भूर्भुवः सुवरिति प्राजापत्याभि
रावयंति। प्राजापत्यो वा अश्वः। स्वयैवैनं देवतया समर्धयंति
। भूरिति महिषी। भुव इति वावाता। सुवरिति परिवृक्ती। एषां
लोकानामभिजित्यै। हिरण्ययाः काचा भवंति। ज्योतिर्वै हिर

पर्यं । राष्ट्रमश्वमेधः ॥ ५ ॥ ज्योतिष्मे वास्मै राष्ट्रं च समीचीर धाति

। सहस्रं भवंति । सहस्रसंमितः सुवर्गो लोकः । सुवर्गस्य लोक

स्याभिजित्यै । अपूवाएतस्मात्तेज इंद्रियं पश्चवः श्रीः क्रामंति ।

योश्वमेधेन यजते । वसवस्त्वांजंतु गायत्रेण छंदसेति महिष्य

भ्यंनक्ति । तेजो वा आज्यं । तेजो गायत्री । तेजसैवास्मै तेजोवरुं

धे ॥ ६ ॥ रुद्रास्त्वांजंतु त्रैष्टुभेन छंदसेति वावाता । तेजो वा आज्यं

। इंद्रियं त्रिष्टुप् । तेजसैवास्मा इंद्रियमवरुंधे । आदित्यास्त्वांजं

ब्रा·तृ·
१८७

तुजा गते न् छंद सेति परिवृक्ती। तेजो वा आज्यं। पुत्रा वी जगती॥
तेजं से वास्मै पुत्र न वरुंधे। पत्नी यो भ्यंजंति। श्रिया वा एतद्रूपं॥
७॥ यत्पत्नी यः। श्रियं मे वास्मिं तद्दधति। नास्मात्तेज इंद्रियं पुत्रा वुः
श्रीरपक्रामंति। लाजी३ छाची३ न्यशो ममां३ इत्यतिरिक्तमनु
मश्वा यो पाहरंति। प्रजा मे वान्नादीं कुर्वते। एतद्वा अन्नमत्ते
तदन्नमद्धि प्रजापत इत्याह। प्रजा या मे वान्नाद्यं दधते। यदि
नावजिघ्रेत। अग्निः पुस्तुरासीदित्य व घ्रापयेत। अवहे वजिघ्र

१८

ति। आक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठं पृथिवी सध
स्थमित्यश्वमनुमंत्रयते। एषां लोकानामभिजित्यै। साम्रिंद्रो
अंजन्कुर्दरं मतीनामित्यश्वस्या प्रियो भवंति सरूपत्वाय॥८
॥परि तस्थुष इत्याह मेरवास्मै युनक्त्यभिजित्यै भरं त्वमश्वमे
धो रुंधे रूपं जिघ्रति त्राणि च॥४॥ तेजसा वा एष ब्रह्मवर्चसे
न व्यृध्यते। योऽश्वमेधेन यजते। होता च ब्रह्मा च ब्रह्मोद्यं वदत
॥ तेजसा चैवैनं ब्रह्मवर्चसेन च समर्धयतः॥ दक्षिणतो ब्रह्मा

ऐ० ब्रा०
१८८

भवति। दक्षिणतआयतनोवैब्रह्मा। बार्हस्पत्योवैब्रह्मा। ब्र
ह्मवर्चसमेवास्यदक्षिणतोदधाति। तस्माद्दक्षिणोर्धोब्रह्म
वर्चसितरः। उत्तरतोहोताभवति॥१॥ उत्तरतआयतनोवै
होता। आग्नेयोवैहोता। तेजोवाअग्निः। तेजएवास्योत्तरतोद
धाति। तस्मादुत्तरोर्धस्तेजस्वितरः। यूपमभितोवर्ततः। यज
मानदेवत्योवैयूपः। यजमानमेवतेजसाचब्रह्मवर्चसेनच
समर्धयतः। किंस्विदासीत्पूर्वचित्तिरित्याह। द्यौर्वैवृष्टिःपूर्व

चित्तिः ॥२॥ दिवमेव वृष्टिमवरुंधे । किंस्विदासीद्बृहद्वय इत्या
ह । अश्वो वै बृहद्वयः । अश्वमेवावरुंधे । किंस्विदासीत्पिशंगि
लेत्याह । रात्रिर्वै पिशंगिला । रात्रिमेवावरुंधे । किंस्विदासी
त्पिलिप्पिलेत्याह । श्रीर्वै पिलिप्पिला । अन्नाद्यमेवावरुंधे ॥३
॥ कस्विदेकाकी चरतीत्याह । असौ वा आदित्य एकाकी चरति
। तेज एवावरुंधे । कउस्विज्जायते पुनरित्याह । चंद्रमा वै जाय
ते पुनः । आयुरेवावरुंधे । किंस्विद्धिमस्य भेषजमित्याह । अ

औ०सू०
१८९

ग्निर्वैहिमस्यभेषजं। ब्रह्मवर्चसमेवावरुंधे। किंस्विदावपनं
महदित्याह॥५॥अयंवैलोकआवपनंमहत्। अस्मिन्नेवलो
केप्रतितिष्ठति। पृच्छामित्वापरमंतंपृथिव्याइत्याह। वेदिर्वैप
रोंतःपृथिव्याः। वेदिमेवावरुंधे। पृच्छामित्वाभुवनस्यनाभिमि
त्याह। यज्ञोवैभुवनस्यनाभिः। यज्ञमेवावरुंधे। पृच्छामित्वावृ
ष्णोअश्वस्यरेतइत्याह। सोमोवैवृष्णोअश्वस्यरेतः। सोमपी
थमेवावरुंधे। पृच्छामित्वावाचःपरमंव्योमेत्याह। ब्रह्मवैवाचःप

१८

र मं व्यो म। ब्र ह्म व र्च्च स मे वा व रुं धे ।।५।। हो ता भ व ति वे द ष्टिः

पू र्व चि त्ति र न्ना द्य मे वा व रुं धे मु ह दि त्या ह सो मो वै वृ ष्णो अ श्व

स्य रे त श्च स्वा रि च ।।५।। अ प वा ए त स्मा त्प्रा णाः क्रा मं ति। यो श्व

मे धे न य ज ते। प्रा णा य स्वा हा व्या ना य स्वा हे ति सं त प्य मा नु आ

कु ती र्जु हो ति। प्रा ण ने वा स्मिं द धा ति। ना स्मा त्प्रा णा अ प क्रा

मं ति। अ वं ती स्था वं ती स्त्वा वं तु। प्रि यं त्वा प्रि या णां। व र्षि ष्ठं मा

प्या नां। नि धी नां त्वा नि धि प तिं ह वा म हे व सो म मे त्या ह। अ पे

आ॰ सं॰
१९०

वासे त धुवते॥१॥ अ घो धुवंत्ये वै नं। अघो न्ये वा से न्कुवते।
त्रिः परि यंति। त्रय इमे लोकाः। एभ्य एवै नं लोके भ्यो धुवते। त्रिः
पुनः परि यंति। षट् सं पद्यंते। षड्वा ऋतवः। ऋतु भिरे वै नं धु
वते। अप वा एते भ्यः प्राणाः क्रामंति॥२॥ ये युक्ते धुवनं तन्व

२
ते। नवकृत्वः परि यंति। नव वै पुरुषे प्राणाः। प्राणा ने वात्मं द
धते। नै भ्यः प्राणा अप क्रामंति। अंबु अंबाल्यं विकृशतिप
त्नीमुदा नयति। अकृतै वै नां। सुभगे कांपील वासिनी त्या

१९

ह।तएवैनासुपंनयति।सुवर्गेलोकेसंप्रोर्णवाथामित्याह
॥३॥सुवर्गमेवैनांलोकंगमयति।आहमजानिगर्भधमा
त्वमजासिगर्भधमित्याह।प्रजावैपशवोगर्भः।प्रजामेवप
शूनात्मंधत्ते।देवावाअश्वमेधेपवमाने।सुवर्गंलोकंनप्राजा
नन्।तमश्वःप्राजानात्।यत्सूचीभिरसिपथान्कल्पयंति।सु
वर्गस्यलोकस्यप्रज्ञात्यै।गायत्रीत्रिष्टुब्जगतीत्याह॥धाय
ष्यायजुरेवैतत्।त्रेयःसूच्योभवंति।अयस्मयोरजताहरि

ण्यः॥ अस्य त्रैलोकस्य रूपमं यस्मै यः॥ अंतरिक्षस्य रजताः॥
दिवो हरिण्यः॥ दिशो वा अं यस्मै यः॥ अवांतरदिशा रजताः॥ ऊ
र्ध्वा हरिण्यः॥ दिश एवास्मै कल्पयति॥ कस्त्वाछ्यति कस्त्वा वि
शास्तीत्याहाहिंसायै॥ ५॥ ऋतुवतिकामं त्सूर्णवायामित्याह
जगतीत्याह कल्पयत्येवैनं च॥ ६॥ अपवा एतस्माच्छ्रीराष्ट्रं का
मति। यो श्वमेधेन यजते। ऊर्ध्वामेनामुच्छ्रयतादित्याह। श्री
वै राष्ट्रमश्वमेधः॥ श्रियमेवास्मै राष्ट्रमूर्ध्वमुच्छ्रयति। वपुभा

रंगिरा विवेत्याह। राष्ट्रं वै भारः। राष्ट्रमेवास्मै पर्यूहति। अथा
स्या मध्यमेधतामित्याह। श्री वै राष्ट्रस्य मध्यं।।१।। श्रियमेवा
वरुंधे। त्री तेवा ते पुनं निवेत्याह। क्षेमो वै राष्ट्रस्यत्री तो वा
तः। क्षेममेवावरुंधे। यडरिणी यवमत्तीत्याह। विड्वै हरिणी
। राष्ट्रं यवः। विशं चैवास्मै राष्ट्रं च समीचीदधाति। न पुष्टं पशु
मन्यत इत्याह। तस्माद्राजा पशुन पुष्यति।।२।। शूद्रा यदर्यजा
रा न पोषाय धनायतीत्याह। तस्माद्वैश्यापुत्रं नाभिषिंचंते। इ

१०१९
१०२

यं प्रकासं कुंतिकेत्याह । विड्वै शकुंतिका । राष्ट्रमश्वमेधः । विशं चै
वास्मै राष्ट्रं च समीचीं दधाति । आहलमिति सर्पतीत्याह । तस्माद्रा
ष्ट्राय विशः सर्पति । आहतं गभे पसमित्याह । विड्वै गभः ।। रा
ष्ट्रं पसः । राष्ट्रमेव विश्याहन्ति । तस्माद्राष्ट्रं विशं घातुकं । माता
च ते पिता च त इत्याह । इयं वै माता । असौ पिता । आभ्यामेवैनं
परिददाति । अग्रं वृक्षस्य रोहत इत्याह । श्रीर्वै वृक्षस्याग्रं । श्रिय
मेवावरुन्धे ।।४।। प्रसुलामीति ते पिता गभे मुष्टिमतंसयदि

१०२

त्या ह। विद्वै गर्भः। राष्ट्रं सुहिः। राष्ट्रमेव विश्याहंति। तस्माद्राष्ट्र
विशं घातुकं। अपवाएते भ्यः प्राणाः क्रामंति। ये यज्ञे पूतं वदंति
। दृघ्रिक्राव्णो अकारिषमिति सुरभिमतीमृचं वदंति। प्राणा
वै सुरभयः। प्राणानेवात्मन्दधते। नेभ्यः प्राणा अपक्रामंति। आ
पोहिष्ठा मयोभुव इत्यद्भिर्मार्जयंते। आपो वै सर्वा देवताः। देव
ताभिरेवात्मानं पवयंते॥५॥ राष्ट्रस्य मध्यं पुष्यति गर्भो रुंधे द
धते चत्वारि च॥७॥ प्रजापतिः प्रजासृष्ट्वा प्रेणानुप्राविशत्।

ब्रा॰ त॰
१०३

तास्यः पुनः संभवितुं नाशक्नोत। सोऽब्रवीत। ऋध्नवदित्सः।
यो मेतः पुनः संभरदिति। तं देवा अश्वमेधेनैव समभरन्। तत
तो वै त आर्ध्नुवन्। यो ऽश्वमेधेन यजते। प्रजापतिमेव संभरत्यृ
ध्नोति। पुरुषमालभते॥१॥ वैराजो वै पुरुषः। विराजमेवालभ
ते। अथो अन्नं वै विराट्। अन्नमेवावरुंधे। अश्वमालभते। प्रा
जापत्यो वा अश्वः। प्रजापतिमेवालभते। अथो श्रीर्वा एक
शफं। श्रियमेवावरुंधे। गामालभते॥२॥ यज्ञो वै गौः। यज्ञ

मेवालभते। अथो अन्नं वै गौः। अन्नमेवावरुंधे। अजावी आल
भते भूम्ने। अथो पुष्टिर्वै भूमा। पुष्टिमेवावरुंधे। पर्यग्निकृतं पु
रुषंचारण्यांश्चोत्सृजंत्यहिंसायै। उभौ वा एतौ पशू आल
भ्येते। यश्चावमो यश्च परमः। तेस्योभये युक्ते बुधाः। अभीष्टा अ
भिश्रीताः। अभिजिता अभिकृता भवंति। नेनं हृंस्यां वः पुरा-
वौ युक्ते बुद्धाः। अभीष्टा अभिश्रीताः। अभिजिता अभिकृता हिं
संति। यो श्वमेधेन यजते। य उ चेनमेवं वेद ॥३॥ लभते गा

१०.त.
१८४

मालंभते परमो ह्येषः॥७७॥ पृथुमेन वा एष स्तोमेन राध्वा च तु ष्टोमेन कृतेनायानाम् उत्तरे ह्नः एकविंशे प्रतिष्ठायां प्रतिति ष्ठति॥ एकविंशं स्तोमं प्रतिष्ठायां कृत्न्वारोहति॥ कृतं वो वै द्व षानि॥ कृतवः संवत्सरः॥ कृतुष्व संवत्सरे प्रतिष्ठायां देव ता अभ्यारोहति॥ राकरयः ६४ भवंत्यन्यदन्यच्छंदः॥ अन्येन्ये वा एते पुरा वृ आलभ्यंते॥७९॥ उते व ग्राम्याः॥ उते वारण्याः॥ अ हरे व स्तुपेण समर्धयति॥ अथो अक्रं एव वै षव ह्लि क्रियते॥ तद्वा

१०६

कुः ॥ अपंशवो वा एते । यदंजावयश्चारण्याश्च । एते वै सर्वे पश
वः । यद्ग्मा इति । गव्यान्पशूनुत्तमेहन्नालभते ॥ २ ॥ तेनैवोभ
यान्पशूनवंरुंधे । प्राजापत्या भवंति । अनभिजितस्याभिजि
त्यै । सौरीर्नव श्वेता वशा अनूबंध्या भवंति । अंतत एव ब्रह्म
वर्चसमवरुंधे । सोमाय स्वराज्ञे नोवाहावनड्वाहाविति द्वंद्विन
ः पशूनालभते । अहोरात्राणामभिजित्यै । पशुभिर्वा एष व्य
र्ध्यते । योऽश्वमेधेन यजते । छगलं कल्माषं किकिदीविं विदीग

ता॰ तृ॰ युमिति त्वाष्ट्रान्पशूनालभते। पशुभिरेवात्मानं समर्धयति

१९५ । ऋतुभिर्वा एष व्यृध्यते। यो ऽश्वमेधेन यजते। प्रैशाणास्त्रयो

वांसंता इत्यृतुपशूनालभते। ऋतुभिरेवात्मानं समर्ध

यति। आ वा एष पशुभ्यो वृश्च्यते। यो ऽश्वमेधेन यजते। पर्यग्नि

कृतानुत्सृजत्यनो ब्रह्मका या॥३॥ लभ्यं तेलभते त्वाष्ट्रान्पश्

नालभते सोच॥४॥ प्रजापतिरकामयत महानन्नादः स्यामि

ति। स एतावश्वमेधे महिमानावपश्यत्। तावगृह्णीत। ततो १९५

वै समहान्नन्नादो भवत। यः कामयेत महानन्नादः स्यामिति।
स एतावश्वमेधे महिमानौ गृह्णीत। महानेवान्नादो भवति।
यजमानदेवत्या वै वपा। राजा महिमा। यद्वपां महिम्नोभयत
:परियजति। यजमानमेव राज्येनोभयतः परिगृह्णाति। पुर
स्तात्स्वाहाकारा वा अन्ये देवाः। उपरिष्टात्स्वाहाकारा अन्ये। त
वा एते ऽश्वमेध उभये ऽवरुध्यंते। यद्वपां महिम्नोभयतः प
रियजति। तानेवोभयान्प्रीणाति।।५।।परियजति षट् च।।१०

॥१५॥ ॥ वैश्वदेवो वा अश्वः। तं यत्प्राजापत्यं कुर्यात्। या देवता अपि
१९६ भागाः। ता भागधेयेन व्यर्धयेत्। देवताभ्यः समदं दध्यातास्ते
गं इदं ष्ठा भ्यां मृड्कांजं भेभिरिति। आज्यमवदानं कृत्वा प्रति
संख्याय प्राकृती जुहोति। या एव देवता अपिभागाः। ता भा
गधेयेन समर्धयति। न देवताभ्यः समदं दधाति॥१॥ चतुर्द
शैतान्नुवाकाञ्जुहोत्यनन्तरित्यै। प्रयासाय स्वाहेति पंचदश
श। पंचदश वा अर्धमासस्य रात्रयः। अर्धमासशः संवत्सर १९

ओप्यते। देवासुराः संयत्ता आसन्। तेऽब्रुवन्नग्नयः स्विष्टकृ
तः। अश्वस्य मेध्यस्य वयमुद्धारमुद्धरामहै। अथैतानभिभ
वामेति। ते लोहितमुदहरन्त। ततो देवा अभवन्। परा
सुराः। यत्स्विष्टकृद्भ्यो लोहितं जुहोति। भ्रातृव्याभिभूत्यै। भ
वत्यात्मना। परास्य भ्रातृव्यो भवति। गोमृगकण्ठेन प्रथमामा
हुतिं जुहोति। पशवो वै गोमृगः। रुद्रोऽग्निः स्विष्टकृत्। रुद्राद्दे
व पशूनन्तर्दधाति। अथो यत्रैषाहुतिर्हूयते। न तत्र रुद्रः पशू

ग·स·
१०७

नभिमन्यते ॥३॥ अस्मुशफेनं द्वितीयामाकृतिं जुहोति । पु
रोषो वा एकशफं । रुद्रो ग्निः स्विष्टकृत् । रुद्रादेव पशून्नंतर्द
धाति । अथो यत्रैषाकृतिर्हूयते । न तत्र रुद्रः पशूनभिमन्य
ते । अयस्मयेन कमंडलुना तृतीयां । आकृतिं जुहोत्यायसो
वै प्रजाः । रुद्रोग्निः स्विष्टकृत् । रुद्रादेव प्रजा अंतर्दधाति । अ
थो यत्रैषाकृतिर्हूयते । न तत्र रुद्रः प्रजा अभिमन्यते ॥४॥
इधात्यभवन्मन्यते प्रजा अंतर्दधाति वेद ॥५॥ अश्वस्य वा

१०

आलभ्यस्यमेधूउहंकामत। तदंस्वस्तोमीयमभवत्। यद
स्वस्तोमीयंजुहोति। समेधमेवैनमालभते। आजेनजुहो
ति। मेधोवाआज्यं। मेधोस्वस्तोमीयं। मेधेनैवास्मिन्मेधंदधाति
। षट्त्रिंꣳशातंजुहोति। षट्त्रिंꣳशाक्षराबृहती॥१॥ बार्ह
ताः पशवः। सापशूनांमात्रा। पशूनेवमात्रयासमर्धयति। ता
यन्नूयसीर्जुकनीयसीर्वाजुहुयात्। पशूनस्मात्रयाव्यर्धयेत्।
षट्त्रिंꣳशातंजुहोति। षट्त्रिंꣳशाक्षराबृहती। बार्हताःपशवः

श॰ ब्रा॰
१९८

शूं। सा पशूनां मात्रा। पशूनेव मात्रया समर्धयति॥१४॥ अश्वस्तो-
मीयं हुत्वा द्विपदां जुहोति। द्विपाद्वै पुरुषो द्विप्रतिष्ठः। तदे
नं प्रतिष्ठया समर्धयति। तदाहुः। अश्वस्तोमीयं पूर्वं होत
व्यां३ द्विपदा३ इति। अश्वो वा अश्वस्तोमीयं। पुरुषो द्विपदाः
। अश्वस्तोमीयं हुत्वा द्विपदां जुहोति। तस्माद्द्विपाच्चतुष्पा
दमत्ति। अथो द्विपद्येव चतुष्पदः प्रतिष्ठापयति। द्विपदां हु
त्वा। नान्यामुत्तरामाहुतिं जुहुयात्। यदन्यामुत्तरामाहु

१९

तिं जुहुयात् । यत्प्रतिष्ठायामश्ववेता । द्विपदां अंततो जुहोति
प्रतिष्ठित्यै ॥२॥ बृहत्पर्द्वयति स्थापयति पंचंच ॥१२॥ प्रजा
पतिरश्वमेधमसृजत । सोस्मात्सृष्टो पाक्रामत् । तं यज्ञक्र
तुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविंदत् । तमिष्टिभिर
न्वैच्छत् । तमिष्टिभिरन्वविंदत् । तदिष्टीनामिष्टित्वं । यत्संवत्स
रमिष्टिभिर्यजते । अश्वमेव तदन्विछति । सावित्रियो भवंति
॥१॥ इयं वै सविता । यो वा अस्यां नरयति यो निलयते । अस्यां वा

शा॰ ब्रा॰
१९९

पतं विंहंति। न वा इमां कश्चनेत्याहुः। तिर्यञ्चो ध्यस्यैतु मह
तीति। यत्सावित्रियो भवंति। सवितृप्रसूत एवैनमिच्छति। ई
श्वरो वा अश्वः प्रमुक्तः परां परावतं गंतोः। यत्सायं धृतीर्जुहो
ति। अश्वस्य यत्यै धृत्यै॥२॥ यत्प्रातरिष्टिभिर्यजते। अश्वमे
व तदन्विच्छति। यत्सायं धृतीर्जुहोति। अश्वस्यैव यत्यै धृत्यै
। तस्मात्सायं प्रजाः क्षेम्या भवंति। यत्प्रातरिष्टिभिर्यजते। अ
श्वमेव तदन्विच्छति। तस्माद्दिवा नष्टैष एति। यत्प्रातरिष्टिभि

१९९

यजते सायं धृती जुहोति। अहोरात्राभ्यामेवैनमन्विच्छति। अ
थो अहोरात्राभ्यामेवास्मै योगक्षेमं कल्पयति ॥३॥ भवंति
धृत्या एनमन्विच्छत्येकं च ॥१३॥ अप वा एतस्माच्छ्री राष्ट्रं क्रा
मति। योऽश्वमेधेन यजते। ब्राह्मणौ वीणागाथिनौ गायतः।
श्रिया वा एतद्रूपं यद्वीणा। श्रियमेवास्मिंस्तद्धत्तः। यदा खलु
वै पुरुषः श्रियमश्नुते। वीणास्मै वाद्यते। तदाहुः। यदुभौ ब्रा
ह्मणौ गायेतां॥१॥ प्रभ्रंशुकास्माच्छ्रीः स्यात्। न वै ब्राह्मणे

१०. स्व.
२००

श्री रमतइति। ब्राह्मणोन्योगायेत्। राजन्योन्यः। ब्रह्म वै ब्राह्मणः
। क्षत्रं राजन्यः। तथोहास्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः प
रिगृहीता भवति। तदाहुः। यदुभौ द्विगायेतां। अपास्मात्क्षत्रं
क्रामेत्। न वै ब्राह्मणे राष्ट्रं रमतइति। यदा खलु वै राजा
कामयते। अथ ब्राह्मणं जिनाति। द्वि वा ब्राह्मणो गायेत्। नक्ष
त्रं राजन्यः। ब्रह्मणो वै रूपमहः। क्षत्रस्य रात्रिः। तथोहास्य ब्र
ह्मणा च क्षत्रेण चोभयतो राष्ट्रं परिगृहीतं भवति। इत्यं दद्यु

इत्यंयजथाऽइत्यंपचथुइति ; ब्राह्मणोगायेत् । इष्टापूर्तंवैब्राह्म
णस्य । ॥ इष्टापूर्तेनैवैनꣳसमर्धयति । इत्यजिनाऽइत्ययु
ध्यथाऽइत्यमुꣳसंग्राममहन्निति राजन्यः । युद्धंवैराजन्यस्य ।
युद्धेनैवैनꣳसमर्धयति । अक्ष्णयावाएतस्यर्त्तवइत्याहुः ।
योऽश्वमेधेनयजतइति । तिस्रोऽन्योगायतितिस्रोऽन्यः । षट्संपद्यं
ते । षड्वाऋतवः । ऋतुष्वेवास्मैकल्पयतः । ताभ्याꣳसꣳस्था ।
यां । अनोयुक्तेचशतेचददाति । शतायुःपुरुषःशतेन्द्रियः । आ

श्रा॰ त॰
२०१

सुष्ठेवं ह्रियेप्रतितिष्ठति॥४॥गायेतांक्रामेब्राह्मणस्यैकस्म
यतस्रुत्वारिंच॥१४॥सर्वेषुवाएषुलोकेषुमृत्यवोन्वायत्ताः
।तेभ्योयदाहुतीर्नजुहुयात्।लोकेलोकएनंमृत्युर्विंदेत्।मृ
त्यवेस्वाहामृत्यवेस्वाहेत्यभिपूर्वमाहुतीर्जुहोति।लोकाल्लो
कादेवमृत्युमवयजते।नैनंलोकेलोकेमृत्युर्विंदति।यद्यमु
ष्मैस्वाहामुष्मैस्वाहेतिजुहुयात्संचक्षीत।बहुंमृत्युममित्रंकु
र्वीत।मृत्यवेस्वाहेत्येकस्माएवैकांजुहुयात्।एकोवाअमुष्मिं

२०

लोके मृत्युः॥ ॥ अशनया मृत्युरेव। तमेवामुष्मिंल्लोकेवयज
ते। भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति। भ्रूणह
त्यामेवावयजते। तदाहुः॥ यद्भ्रूणहत्यापात्र्याथ। कस्माद्युते
पि क्रियत इति। अमृत्युर्वा अन्यो भ्रूणहत्यायाः इत्याहुः॥ भ्रू
णहत्या वाव मृत्युरिति। यद्भ्रूणहत्यायै स्वाहेत्यवभृथ आहु
तिं जुहोति॥ मृत्युमेवाहुत्या तर्पयित्वा परिपाणं कृत्वा। भ्रू
णघ्ने भेषजं करोति। एतां ह वै मुण्डिभ औदन्यवः॥ भ्रूणह

ब्रा.त.
१०२

त्यायेप्रायश्चित्तिंविदांचकार । योह्यस्यापिप्रजायांब्राह्मणंहंति
। सर्वंवैसोतस्मैभेषजंकरोति । जुंबुकायस्वाहेत्यवभृथउत्तमा
माहुतिंजुहोति । वरुणोवैजुंबुकः । अंततएववरुणमवयज
ते । खलतेर्विक्लिधस्यशुक्लस्यपिंगाक्षस्यमूर्धंजुहोति । एतद्वै
वरुणस्यरूपं । रूपेणैववरुणमवयजते ॥ ३ ॥ लोकेमस्तुजुहो
तिमूर्धंजुहोतिद्वेच ॥ १५ ॥ वारुणोवाअश्वः । तंदेवतयाव्यर्धय
ति । यत्प्राजापत्यंकरोति । नमोराज्ञेनमोवरुणायेत्याह । वारु

१०

णो वा अध्यक्षः। स्वयैवैनं देवतया समर्द्धयति। नमो ध्यक्षाय नमः प्र
जापतय इत्याह। प्राजापत्यो वा अध्यक्षः। स्वयैवैनं देवतया स
मर्द्धयति। नमोधिपतय इत्याह। ११। धर्मो वा अधिपतिः। ध
र्ममेवावरुंधे। अधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्र
जानां भूयासमित्याह। अधिपतिमेवैनं समानानां करो
ति। मां धेहि मयि धेहीत्याह। आशिषमेवैतामाशास्ते। उपाकृ
तायस्वाहेत्युपाकृते जुहोति। आलब्धायस्वाहेति नियुक्ते जु

ब्रा. त.
२०३

होति। कुत्नायुस्वाहेति कुते जुहोति।। एषां लोकानामभिजित्यै ।।२।। प्रवा एष एभ्यो लोकेभ्यश्च्यवते। योऽश्वमेधेन यजते। आग्नेयमैन्द्राग्नमाश्विनं। तान्पशूनालभते प्रतिष्ठित्यै। यदाग्नेयो भवति। अग्निः सर्वा देवताः। देवता एवावरुंधे। ब्रह्म वा अग्निः। क्षत्रमिंद्रः। यदैन्द्राग्नो भवति।।३।। ब्रह्मक्षत्रे एवावरुंधे। यदाश्विनो भवति। आशिषामवरुंध्यै। त्रयो भवंति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रतितिष्ठति। अग्नये ऽंहोमुचेऽष्टाकपाल इति दश

२०३

ह विष्णुमिष्टिं निर्वपति। दशाक्षरा विराट्। अन्नं विराट्। विराजैवा
न्नाद्यमव रुंधे। अग्ने मन्वे प्रथमस्य प्रचेतस इति याज्यानुवा
क्यो भवंति सर्वत्वाय॥४॥ अधिपतयइत्याह। अभिजित्याऐंद्रा
ग्नो भवति रुंधु एकं च॥१६॥ यद्यभ्यवमृ पूतपङ्किं देत। आग्नेय
मष्टाकपालं निर्वपेत। सौम्यं चरुं। सावित्रमष्टाकपालं। यदा
ग्नेयो भवति। अग्निः सर्वा देवताः। देवताभिरेवैनं भिषज्यति
। यत्सौम्यो भवति। सोमो वा ओषधीनाꣳ राजा। याभ्यएवैनं वि

ब्रा·त·
२०५

दति॥१॥ताभिरेवैनंभिषज्यति। यस्सांश्वित्रोभवति। सवित्र
ष्वैस्तुतएवैनंभिषज्यति। एताभिरेवैनंदेवताभिर्भिषज्यति
।अगदोहैवभवति। पौष्णंचरुंनिर्वपेत। यदिश्रोणस्यात्।
पूषावैश्रौण्यस्याभिषक्। सएवैनंभिषज्यति। अश्रोणोहै
वभवति॥२॥रौद्रंचरुंनिर्वपेत। यदिमहतीदेवताभिमन्येत
त। एतद्देवत्योवाअश्वः। स्वयैवैनंदेवतयाभिषज्यति। अग
दोहैवभवति। वैश्वानरंद्वादशकपालंनिर्वपेन्मृगाखरे

२०६

यद्गिनागछेत्त्। इयं वा अग्निर्वैश्वानरः। इयमेवेन समर्द्धिभ्यां परि

रो धमानयति। आहे वसुत्य मह गछति। यद्यधीयात्॥३॥ अग्न

ये ऽंहोमुचे ष्टाकपालः। सोऽयं पयः। वायव्य आज्यभागः। यज

मानो वा अश्वः। अंहः सा वा एष गृहीतः। यस्याश्वो मेधाय प्रो

क्षितो ध्येति। यदंहोमुचे निर्वपति। अंहः स एव तेन मुच्यते

। यजमानो वा अश्वः। रेतः सा वा एष व्यृध्यते॥४॥ यस्याश्वो मेधा

य प्रोक्षितो ध्येति। सोऽयं रेतः। यत्सोऽयं पयो भवति। रेतः सैवेनं

श्रा· त· ससमर्द्धयति। यजमानो वा अश्वः॥ भैर्विण षव्यं ध्यति। यस्याश्वो
२०५ मेधाय प्रोक्षितो ध्येति। वायुभ्यो गभीः। यद्वांवे आज्यभागो भव ५
ति॥ गर्भैर् एवैनं ससमर्धयति। अथो यस्ये षाम्ध्व मेधेश्वाय यत्नि
त्तिः क्रियते। इ द्वा वसीयान्भवति॥ ५॥ त्रिवृं दस्तस्सोणी हैव भव
त्यधीयाई अतेगभैर् एवैनं ससमर्धयति द्वेचं॥ १७॥ तद्राकुः।
ब्राह्मणा ब्रस्लौ इनात्सं सितेनिर्वपेत्। वा इत्राभिर्वैश्विभिर्यजे
तेति। यदि ह्विष्भिर्यजेत। उपनामुकं रणं युक्तः स्यात्। पापीयां २०

स्तुस्यात्। आ मानि वा एतस्य छंदाꣳसि। य ईजानः। तानि क एता
वै हास्य पुनः प्रयुंजीतेति। स वा दे सꣳस्थिते यज्ञे वागाप्यते॥४॥
साक्षा भवति यातयाम्नी। क्रूरीकृते व हि भवत्य रुष्कृता। सा न
पुनः प्रयुज्येत्याहुः। द्वादशौ वर्हिषो दूनान्सꣳस्थिते निर्वपेत्प्र
जापतिर्वा ओदूनः। यज्ञः प्रजापतिः। तु पुनास्तुक एनं युक्तो भव
ति। न पापीया भवति। द्वादश भवंति। द्वादश मासाः संवत्सरः
। संवत्सर एव प्रतितिष्ठति॥२॥ आप्यते संवत्सर एकं च॥१८॥ ए

एष वै प्रभूर्नाम यज्ञः । सर्वं ह वै तत्र प्रभुर्भवति । यत्रैतेन यज्ञेन यजन्ते । २

आ. त.
२०६

षवै विभूर्नाम यज्ञः । सर्वं ह वै तत्र विभुर्भवति । यत्रैतेन यज्ञे
न यजन्ते । एष वा ऊर्जस्वान्नाम यज्ञः । सर्वं ह वै तत्रोर्जस्वद्भव
ति । यत्रैतेन यज्ञेन यजन्ते । एष वै पयस्वान्नाम यज्ञः । १ । सर्वं
ह वै तत्र पयस्वद्भवति । यत्रैतेन यज्ञेन यजन्ते । एष वै विधृतो
नाम यज्ञः । सर्वं ह वै तत्र विधृतं भवति । यत्रैतेन यज्ञेन यज
न्ते । एष वै व्यावृत्तो नाम यज्ञः । सर्वं ह वै तत्र व्यावृत्तं भवति ।
यत्रैतेन यज्ञेन यजन्ते । एष वै प्रतिष्ठितो नाम यज्ञः । सर्वं ह

वैतत्रत्रतिष्ठितंभवति॥२॥यत्रैतेनयुक्तेनयजंते। एषवैतै
जस्वीनामयज्ञः॥सर्वर्हवैतत्रतेजस्विभवति। यत्रैतेनय
ज्ञेनयजंते। एषवैब्रह्मवर्चसीनामयज्ञः॥आहवैतत्रब्राह्म
णोब्रह्मवर्चसीजायते। यत्रैतेनयज्ञेनयजंते। एषवाअतिव्या
धीनामयज्ञः॥आहवैतत्रराजन्योतिव्याधीजायते। यत्रैतेनय
ज्ञेनयजंते। एषवैदीर्घोनामयज्ञः॥दीर्घायुषोहवैतत्रमनु
ष्याभवंति। यत्रैतेनयज्ञेनयजंते। एषवैक्लृप्तोनामयज्ञः॥क

त्यर्भतिव्याधीजायते



र्धं ते ह वै तन्त्रं प्रजाभ्यो योगक्षेमः । यत्रैते न यत्ते न यजंते ॥ ३ ॥ प
यं स्वान्नाम यत्तः प्रतिष्ठितं भवति यत्रैते न युत्ते न यजंते षष्टंचं
॥ १ ॥ एष वै विभूः प्रभूरुर्जस्वान्नयं स्वान्विधृतो व्यावृत्तः प्रति
ष्ठित स्तेजस्वी ब्रह्मवर्चस्यति व्याधी दीर्घः क्रतो वाहस्व ॥ ॥ ता
र्थिणा प्शुंसं तंसं पर्यंति । युक्तो वै ताप्र्यं । युक्तैनै वैनं समर्द्धयं
ति । यामेनु सामानं प्रस्तोता न्रुप्रतिष्ठते । यमुं लोकमेवैनं गमय
ति । तार्प्यैणैनं कृत्सधी वासेचाप्शुंसं तंसं पर्यंति । एतद्वै पस्कूना

ऽ रूपं। रूपेणैव पुरुषं नवरुंधे। हिरण्यकशिपु भवति। तेजसो
वे रुध्ये॥९॥ रुक्मो भवति। सुवर्गस्य लोकस्यानुख्यात्यै। अ
श्वो भवति। प्रजापतेराप्त्यै। अस्य वै लोकस्य रूपं तार्प्यं। अंतरि
क्षस्य कृत्यधीवासः। दिवो हिरण्यकशिपु। आदित्यस्य रुक्मः
। प्रजापतेरश्वः। इममेव लोकं तार्प्येणाप्नोति॥१०॥ अंतरिक्षं कृ
त्यधीवासेन। दिवं हिरण्यकशिपुना। आदित्यं रुक्मेण। अ
श्वेनैव मेध्येन प्रजापतेः सायुज्यं सलोकतामाप्नोति। एता

सामैवदेवतानाꣳसायुज्यं।सार्ष्टिताꣳसमानलोकतामाप्नोति
।यएवमेतेनयजते।यउचैनमेवंवेद॥१९॥अवरुध्याआप्नोत्य
हौर्वं॥२०॥आदित्याश्चांगिरसश्चस्वर्गेलोकेस्पर्धंत।तेंगिर
सआदित्येभ्यः।अमुमादित्यमश्वꣳश्वेतंभूतंदक्षिणामनय
न्।तेह्रुब्रुवन्।यन्नोनेष्ठ।सवर्योभूदिति।तस्मादश्वꣳसवर्ये
त्याक्र्यंति।तस्माद्धस्तेवरोहीयते।यत्तुप्रजापतिरालब्धोश्वोभ
वत्।तस्मादश्वोनाम॥२१॥यच्छ्वयदरुरासीत्।तस्मादर्वानाम।

यत्सद्यो वाजी समजायत। तस्माद्वाजी नाम। यदसुराणां लोका
नादत्त। तस्मादादित्यो नाम। अग्निर्वा अश्वमेधस्य योनिरायत
नं। सूर्योऽग्नेर्योनिरायतनं। यदश्वमेधेऽग्नौ चित्य उत्तरवेदिमुप
वपति। योनिमंतमेवैनमायतनवंतं करोति॥२॥ योनिमाना
यतनवान्भवति। य एवं वेद। प्राणापानौ वा एतौ देवानां। यद
र्काश्वमेधौ। प्राणापानावेवावरुंधे। ओजो बलं वा एतौ देवानां
। यदर्काश्वमेधौ। ओजो बलमेवावरुंधे। अग्निर्वा अश्वमेधस्य

योनिरायतनं । स्वयोग्ने योनिरायतनं । यदश्वमेधे ग्नो चित्यस्य उत्तरवे
दिं चिनोति । तावर्का श्वमेधौ । अर्काश्वमेधावेवावरुंधे । अथो अ
र्काश्वमेधयोरेव प्रतितिष्ठति ॥ ३ ॥ नाम करोति । स्वयोग्ने योनिरा
यतनं च त्वारि च ॥ १ ॥ प्रजापतिं वै देवाः पितरं पशुं भूतं मेधा
यालभंत । तमालभ्योपावसन् । प्रातर्यष्टास्मह इति । एकं वा एत
द्देवानामहः । यत्संवत्सरः । तस्मादश्वः पुरस्तात्संवत्सर आलभ्य
ते । यत्प्रजापतिरालब्धोश्वो भवत् । तस्मादश्वः । यत्सद्यो मेधोभ

वत्॥१॥ तस्मादश्वमेधः। वेदुकोश्वमाश्नुभवति। यएवंवेद।
यद्वैतत्प्रजापतिरालब्धोश्वोभवत्। तस्मादश्वः प्रजापतेः पशू
नामनुरूपतमः। आस्यपुत्रः प्रतिरूपोजायते। यएवंवेद। स
र्वाणिभूतानिसंभृत्यालभते। समेनंदेवास्तेजसेब्रह्मवर्चसा
यभरंति। योश्वमेधेनयजते॥२॥ यउचैनमेवंवेद। एतद्वै
तद्देवाएतांदेवतांपशुभूतंमेधायालभंत। यज्ञमेव। यज्ञे
नयज्ञमयजंतदेवाः। काममेवंयज्ञमकुर्वत। तेमृतत्वमकाम

॥·५९·
२१०

यंता। तेमृतत्वमगछन्। योश्वमेधेनयजंते। देवानामेवायनेनेति

॥३॥ प्राजापत्येनैवयुक्तेनयजतेकामप्रेण। अपुनमारमेवग

छति। एतस्यवैरूपेणपुरस्तात्प्राजापत्यमृषभंतूपरंवकूरू

पमालभते। सर्वेभ्यःकामेभ्यः। सर्वस्याप्त्यै। सर्वस्यजित्यै। सर्व

मेवतेनाप्नोति। सर्वंजयति। योश्वमेधेनयजते। यउचैनमेवं

वेद॥४॥ मेधोभवद्यजतएतिवेद॥२२॥ योवाअश्वस्यमेध्यस्य

लोमनीवेद। अश्वस्यैवमेध्यस्यलोमंचोमंजुहोति। अहोरात्रे

वा अश्वस्य मेध्यस्य लोमनी। यत्सायं प्रातर्जुहोति। अश्वस्यैव
मेध्यस्य लोमंल्लोमं जुहोति। एतद्ध स्म वै पुरा। अश्वस्य
मेध्यस्य लोमंल्लोमं जुह्वति। यो वा अश्वस्य मेध्यस्य पदे वेद। अ
श्वस्यैव मेध्यस्य पदेपदे जुहोति। दर्शपूर्णमासौ वा अश्वस्य मे
ध्यस्य पदे ॥ ९ ॥ यद्दर्शपूर्णमासौ यजते। अश्वस्यैव मेध्यस्य प
देपदे जुहोति। एतद्ध स्म वै पुरा। अश्वस्य मेध्यस्य प
देपदे जुह्वति। यो वा अश्वस्य मेध्यस्य त्रिवर्तनं वेद। अश्वस्यै

ब्रा॰त॰
२११

वमेध्यस्य विवर्त्तने विवर्त्तनेजुहोति।असौवाआदित्योऽश्वः।सआह
वनीयमागच्छति।तद्विवर्त्तते।यदग्निहोत्रंजुहोति।अश्वस्येवमे
ध्यस्यविवर्त्तनेविवर्त्तनेजुहोति।एतद्धस्मवैपुरा।अश्व
स्यमेधस्यविवर्त्तनेविवर्त्तनेजुकति।।२।।पूर्वेअग्निहोत्रंजुहो
तित्रीणिच।।२५।।प्रजापतिस्तमष्टादशाभिःप्रजापतिरकामय
तोभावस्येयुंजंतितेजसापवित्राणाअपश्रीरुध्यां प्रजापतिःप्रेण
तुवत्रयमेनप्रजापतिरकामयतप्रजानैष्वेहैनोवाअश्वस्यप्रजा

पतिस्त्वं यत्क्रतुभिरपश्रीर्ब्रह्मणो सर्वेषु वारुणो यद्यमृतं द
कुरेषवैविभक्तार्पणोद्विस्याः प्रजापतिं पितरं यो वा अश्वस्य मे
ध्यस्य लोमन्तीत्रयोविंशतिः ॥२३॥ प्रजापतिरस्मिंल्लोकं उत्तर
तश्रियमेवावंप्रजापतिरकामयत महान्यत्स्यातरिशिषिः प्र
वा एष एभ्यो लोकेभ्यः सर्वं ह वै तत्रयं उच्चैनमेवंवेद चतुर
शीतिः ॥८४॥ ॥हरिः ओम॥ ॥हरिः ॐ॥ संज्ञानं विज्ञानं
प्रज्ञानं जानदभिजानत् संकल्पमानं प्रकल्पमानमुपकल्पं

अ० १९
२१२

मानुसुपंकृसंकृसं। अग्ने यो वसीय आयत्संभृतं भृतं। चित्रः केतुः प्र
भानुर्भांत्संभान्। ज्योतिष्मांस्तेजस्वानातपंस्तपन्नभितपन्।
रोचनो रोचमानः शोभनः शोभमानः कल्याणः। दर्शा दृष्टा दर्श
ता विश्वरूपा सुदर्शना। आप्यायमाना प्यायमाना प्याया सूनृते
रा। आपूर्यमाणा पूरयंती पूर्णा पौर्णमासी। दाता प्रदा
ता नंदो मोदः प्रमोदः॥१॥ आवेशयन्निवेशयन्त्संवेशनः संशां
तः शांतः। आभवन्प्रभवन्त्संभवन्त्संभूतो भूतः। प्रस्तुतं विष्टु

तं॰ स॰ स्तुतं कल्याणं विश्वरूपं। शुक्रममृतं तेजस्वि तेजः स
मिद्धं। अरूपं भानुमन्मरीचिमदभितप्तस्तपस्वत्। सविता प्र
सविता दीप्तो दीपयन्दीप्यमानः। ज्वलन्ज्वलिता तपन्वितपन्सं
तपन्। रोचनो रोचमानः शुम्भूः शुम्भमानो वामः। सुता सुन्वती
प्रसुता सूयमाना अभिषूयमाणा। पीती प्रपा संपा तृप्तिस्तर्पयन्
ती॥ २॥ कान्ता काम्या कामजाता युष्मती कामदुघा। अभिजातास्ता
नुमन्ता नुन्दे मोदः प्रमोदः। आसादयन्निषादयन्संसादनः सं॰

॥० स॰
२९३

सं नः सन्नः। आभूर्विभूः स्वभूः त्वं भूर्भुवः। पवित्रं पवयिष्यन् पूतो
मेध्यः। यज्ञो यज्ञः स्नानायुरमृतः। जीवो जीविष्यन् स्वर्गो लोकः। स
हस्वान् सहीयानोजस्वान् सहमानः। जयन्नभिजयन् सुद्रविणो
द्रविणोदाः। आर्द्रपवित्रो हरिकेशो मोदः प्रमोदः॥२९॥ अरुणो
रुणरजाः पुण्डरीको विश्वजिदभिजित्। आर्द्रः पिन्वमानोऽन्न
वान् रसवान्निरावान्। सर्वौषधः संभरो महस्वान्। एजत्काजो
ग्लौः। क्षुल्लकः शिपिविष्टकः। सरिस्वराः सुश्रोरवः। अजि

रासोंगग्रिष्मावः।२ इदानींतदानीमेतर्हि क्षिप्रमजिरं। आशुर्नि
मेषः फणो द्रवन्नतिद्रवन्। त्वरंꣳस्त्वरमाण आशुराशीयाञ्जवः
। अग्निष्टोम उक्थ्योऽतिरात्रो द्विरात्रस्त्रिरात्रश्चतुरात्रः। अग्नि
र्ऋतुः सूर्य ऋतुश्चन्द्रमा ऋतुः। प्रजापतिः संवत्सरो महान्कः
॥४॥ त्रमो ह स्तपर्यंता ग्रमो होज वस्त्राणि च॥१॥ भूरग्निं च पृथि
वीं च मां च। त्रीꣳश्च लोकान्संवत्सरं च। प्रजापतिस्त्वा सादय
तु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। भुवो वायुं चान्तरिक्षं च मां च

श्री. स.
२१४

। त्रीं श्वेतो कान्त्संवत्सरं चे। प्रजापतिस्त्वासादयतु। तया देवतयां
गिरस्वध्रुवासीद। स्वराट्टि त्संचुदिवं चु मांचे। त्रीं श्वेतो कान्त्सं व
त्सरं चे। प्रजापतिस्त्वासादयतु। तया देवतयांगिरस्वध्रुवासीद
। भूर्भुवः स्वः श्वंद्र मसं चुदिर्यां श्वु मांचे। त्रीं श्वेतो कान्त्सं वत्स
रं चे। प्रजापतिस्त्वासादयतु। तया देवतयांगिरस्वध्रुवासीद॥१
॥ संवत्सरं चुषट् चे॥२॥ त्वमेव त्वां वेत्थ योऽसि सोऽसि। त्वमेव त्वा
मचैषीः॥ चितश्चासि संचितश्चास्यग्ने। एतावांश्चासि भूयां   २१४

श्चास्यग्ने। यत्ते अग्ने न्यं तनुं यदुते तिरिक्तं। आदित्यास्त्वंअंगिरस
श्चिन्वंतु। विश्वे ते देवा श्चिति मा पूरयंतु। चित श्चासि संचित श्चा
स्यग्ने। एतावाऽं श्चासि भूयाऽं श्चास्यग्ने। मा ते अग्ने चुयेन मा ते
चुयेनायुरावृक्षि॥१॥ सर्वेषां ज्योतिषां ज्योति र्यद्दावुदेति। त
पसोजात मनिभृष्ट मोजः। तन्ने ज्योतिरिष्टके। तेन मे तप। तेन
मे ज्वल। तेन मे दीदिहि। यावद्देवाः। यावुदसाति सूर्यः। यावदुता
पि ब्रह्म॥२॥ आवृक्षि नवर्च॥३॥ संवत्सरोसि परिवत्सरोसि।

२१५

इदावत्सरोसीदुवत्सरोसि। इद्वत्सरोसि वत्सरोसि। तस्यते व
संतः शिरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छं। शरदुत्तरः पक्ष
ः। हेमंतो मध्यं। पूर्वपक्षाश्चितयः। अपरपक्षाः पुरीषं। १। अ
होरात्राणीष्टकाः। ऋषभोसि स्वर्गो लोकः। यस्यां दिशि मही
यसे। ततो नो मह आवह। वायुर्भूत्वा सर्वा दिश आवाहि। स
र्वा दिशोनुविवाहि। सर्वा दिशोनु संवाहि। चित्याचितिमापृण।
अचित्याचितिमापृण। विदसि समुद्रयोनिः। २। इंदुर्दक्षः श्ये

नकृतावो। हिरंण्यपक्षः शकुनोभुरण्युः। महान्त्सधस्थेध्रुवआ
निषत्तः। नमस्तेअस्तुमामाहिꣳसीः। एतिप्रेतिवीतिसमित्यु
दिति। दिवंमेयच्छ। अंतरिक्षंमेयच्छ। पृथिवींमेयच्छ। पृथिवींमे
यच्छ। अंतरिक्षंमेयच्छ। दिवंमेयच्छ। अह्नाप्रसारय। रात्र्यासम
च। रात्र्याप्रसारय। अह्नासमंच। कामंप्रसारय। कामꣳसमंच॥
३॥ पुरीषꣳसमुद्रयोनिः पृथिवींमेयच्छांतरिक्षंमेयच्छसमंच॥
४॥ भूर्भुवःस्वः। ओजोबलं। ब्रह्मक्षत्रं। यशोमहत्। सत्यंतपोना

ना॰ ५॰ मं। रूपममृतं। चक्षुः श्रोत्रं। मन आयुः। विश्वं यशो महः। समं तपो

२१६ हरो भाः। जातवेदा यदि वा पावकोसि। वैश्वानरो यदि वा वैद्युतोसि

। शं प्रजाभ्यो यजमानाय लोकं। ऊर्जं पुष्टिं ददद्भ्यावबृत्स्व॥१॥ आ

श्चत्वारि च॥५॥ राज्ञी विराज्ञी। सम्राज्ञी स्वराज्ञी। अर्चिः शोचिः। तपो

हरो भाः। अग्निः सोमो बृहस्पतिः। विश्वे देवा भुवनस्य गोपाः। ते मा स

र्वे यशसा संसृजन्तु॥१॥ राज्ञी द्वे मासु स॥६॥ असवे स्वाहा वस

वे स्वाहा। विभुवे स्वाहा विवस्वते स्वाहा। अभिभुवे स्वाहाधिपतये।

